# शक्तिवादः



महामहोपाध्यायगदाधरभट्टाचार्य्यप्रणीतः

श्रीहरिनाथतर्कसिद्धान्तेन विरचितटीकासहितः ।



सामान्यकाण्डम्




कलिकाताराजधान्याम्

संस्कृतयन्त्रे

श्रीपीताम्बरवन्द्योपाध्यायेन मुद्रितम् ।

संवत् १९४१ ।

PUBLISHED BY THE SANSKRIT PRESS DEPOSITORY.

No. 148, BARANASI GHOSH'S STREET, JORASANKO.

# বিজ্ঞাপন

---

শক্তিবাদ মহামহোপাধ্যায় গদাধরভট্টাচার্য্য বিরচিত। গদাধরভট্টাচার্য্য অদ্বিতীয় বুদ্ধিমান ও অদ্বিতীয় পণ্ডিত ছিলেন। যে সকল পদার্থ অন্ধপরম্পরার ন্যায় ব্যবহৃত ছিল, তন্মধ্যে অনেক পদার্থ বিশদরূপে বোধের নিমিত্ত তিনি বহুতর গ্রন্থ রচনা করিয়াছেন। শক্তিবাদ পুস্তকখানি রচনা না করিলে পদপদার্থের মুখ্য সম্বন্ধরূপ শক্তিবিষয়ে অন্ধপরম্পরার ন্যায় ব্যবহার থাকিত; যদিও গদাধরভট্টাচার্য্য শক্তিপদার্থ পরিজ্ঞানের নিমিত্ত সবিস্তর লিখিয়া গিয়াছেন, তথাপি অতিশয় কঠিন বিষয় বলিয়া তাহার অর্থ সহজে পরিগ্রহ করা যায় না, এবং অনেক স্থলে সন্দেহ নিবৃত্তিও হয় নাই; এজন্য আমি ঐ শক্তিবাদ গ্রন্থ স্পষ্টরূপে বোধের নিমিত্ত অনেক প্রাচীন গ্রন্থ দেখিয়া ও বিশেষ বিবেচনা করিয়া, টীকা রচনা করিলাম। পণ্ডিতগণ ও পাঠকবর্গ অমৎসর হইয়া ইহা একবার পাঠ করিলে, আমার সকল শ্রম সফল হইবেক।

শ্রীযুত রামকৃষ্ণ পণ্ডিত মহাশয়ের অর্থের সাহায্যে ইহা মুদ্রিত হইতেছে।

শ্রীহরিনাথ শর্ম্মা

सटीकः

# शक्तिवादः।

## सामान्यकाण्डम्।

ओं नमो गणेशाय॥ सङ्केतो लक्षणा चार्थे पदवृत्तिः। वृत्त्या पदप्रतिपाद्य एव पदार्थ इत्यभि-

ओं नमः शिवाय। शिवोऽप्युद्बुद्धशक्तिश्चेत् समर्थः स्वार्थ-साधने। साकाङ्क्षः शब्दवन्नेता वन्दे तं शक्तिभूषितम्॥ विद्वद्वरो-ऽभूत् हरचन्द्रनामा तत्पुत्त्र आसीत् प्रथितातिकीर्त्तिः। गोलोक-नाथः शुचि नीरजं सत् वाणी श्रिता यद्रसनं विदित्वा॥ विचिन्त्य तत् तातपदारविन्दंवि भाव्य गाढं हरिनाथनाम्ना। विशद्यते दुर्गमशक्तिवादः सतां प्रमोदाय गदाधरोक्तः॥ इह खलु सर्व्वैः शब्दैः श्रूयमाणैरपि सदा सर्व्वेषां न तदर्थप्रतिपत्तिः नवा सद्यः किन्तु कदाचित् कैश्चित् शब्दैः केषाञ्चित् स्वल्पचिरेण जन्यते कल्प्यते च तस्मात् तत् सम्पादिनी पदपदार्थसम्बन्धविशेषधीजनित-पदार्थसार्थोपस्थितिरेव इतरेषान्तु अन्वयव्यतिरेकनियमविरह-गौरवादिदोषकवलितत्वेन न तत् कल्पनसम्भवः। स च सम्बन्ध-विशेषः किं स्वरूप इति जिज्ञासूनामन्तेवासिनां तदवधारणार्थं तद्विशेषस्यैव स्वरूपमिति तं विभज्य परीक्षासहितं सामान्यतो विशेषतश्च तत् स्वरूपमाह। सङ्केतो लक्षणा चेत्यादि चकारार्थः

समुच्चयः तत्र धीविशेषविषयत्वं द्वित्वपर्य्यवसितं वृत्तिः शाब्दबोधौपयिकः सम्बन्धः तथाच अर्थप्रतियोगिकः पदानुयोगिकः अर्थानुयोगिकः पदप्रतियोगिको वा तादृशः सम्बन्धः सङ्केतलक्षणाद्वयमित्यर्थः । केचित्तु अयं ग्रन्थो न विभागपरः वृत्तित्वसामान्यधर्म्मस्य पूर्व्वाकथनेन तद्विशेषजिज्ञासानुदयात् तत्परत्वे लक्षणाया अपि अवश्यनिरूपणीयत्वेन तदनिरूपणात् न्यूनत्वाच्च किन्तु शाब्दबोधौपयिकसम्बन्धस्य पदार्थान्तरत्वनिराकरणात्मपदार्थस्वरूपत्वप्रदर्शनपरः लक्षणा चेत्यंशस्तु दृष्टान्तार्थमित्याहुः । तन्न शोभनं शाब्दबोधौपयिकसम्बन्धत्वरूपसामान्यधर्म्मस्य उक्तरीत्या मनसैव सुग्रहात् विभागे अनुद्दिष्टधर्म्मस्य शब्दजन्यज्ञानमात्रानपेक्षणाच्च । लक्षणायास्तु ग्रन्थान्तरे निरूपितत्वात् सङ्केते निरूपिते तत्तत्सम्बन्धरूपलक्षणाया अपि स्फुटतयैव लाभात् अनिरूपणेऽपि न्यूनत्वाभावात् शक्तेरज्ञातत्वे शक्यसम्बन्धरूपलक्षणाया अपि अज्ञातत्वेन दृष्टान्तत्वायोगाच्चेति ॥ अथ विशेषविधिनिषेधयोः शेषनिषेधाभ्यनुज्ञाफलकत्वस्येव अवगतसामान्यधर्म्मावच्छिन्नानां किञ्चित्संख्यकविशेषधर्म्मेणाभिधानस्य अधिकसंख्यावच्छिन्नव्यवच्छेदकताया अपि व्युत्पत्तिसिद्धत्वेन विभाजकधर्म्मे त्रित्वादिसंख्याव्यवच्छेदो लभ्यते स च न सम्भवति व्यञ्जनाया अपि वृत्तित्वावश्यकत्वात् अन्यथा मुखं विकशितस्मितं वशितवक्रिमप्रेक्षितमित्यादौ परस्परदलविभागजनकक्रियारूपविकाशस्य मुखे बाधात् लक्षितार्थस्य विस्तृतस्यान्वयबोधानन्तरं मुखे कुसुमतुल्यसौरभवत्तायाः चमत्कृतरमणीयताया वा बोधस्यानुभवसिद्धस्यापलापापत्तेः इति चेन्न मनसैव तत्तत्पदार्थस्य स्मृतिसहकारेण बोधनिर्व्वाहात् तदर्थं व्यञ्जनाया वृत्तेः कल्पनानावश्यकत्वात् । नचैवं गामानयेत्यादिवाक्यानन्तरं तत्तत्पदार्थोपस्थिति-

सहकृता मनसैव विशिष्टबोधः सम्पाद्यतां किं शक्त्यादेः वृत्तित्व-कल्पनयेति वाच्यं यतः पदजन्यपदार्थोपस्थितिर्यत्र सम्बन्धान्तरस्मारण-जन्यपदार्थान्तरोपस्थितिरूपा तत्र विशिष्टबोधे तादृशपदार्था-न्तराभानात् वाक्यजबोधस्य नियन्त्रितविषयकत्वस्यावश्यकत्वेन तादृशबोधस्य मानसत्वायोगः। एवं व्यञ्जनास्वरूपसती ज्ञाता वा कारणं तत्र नाद्यः तथा सति विकसितादिपदेन सर्व्वदा सर्व्वस्यैव व्युत्पन्नस्य तादृशबोधापत्तेः न तु सुहृदयमात्रस्य व्यञ्जनाया अवि-शेषात् इष्टापत्तौ अनुभवविरोधः सहृजाप्रतीयमानत्वरूपगूढत्वस्य तादृशव्यङ्ग्येऽनुपपत्तिश्च स्यात्॥ नापि द्वितीयः शक्तिग्राहकव्यवहार-कोषादिवत् लक्षणाग्राहकप्रत्यक्षादिवच्च तद्ग्राहकस्य वक्तव्यत्वा-पातात् ज्ञानसामान्यसामग्री तद्ग्राहिका चेत् पूर्व्वोक्तदोषस्य जागरूकत्वाच्चेत्यादिकं द्रष्टव्यम्। अर्थ इत्यनुक्तौ वृत्तित्वं शाब्द-बोधानुकूलज्ञानविषयसम्बन्धत्वं तच्च सङ्केतादाविव आकाङ्क्षादि-ज्ञानविषये तत्तत्पदाव्यवहितोत्तरत्वरूपसम्बन्धादावपि अस्ति अतस्तत्रापत्तिवारणाय अर्थ इति तथाच अव्यवहितोत्तरत्वादे-रर्थप्रतियोगिकत्वाभावान्न तदापत्तिरिति। पचतीत्यादौ योग्यता-ज्ञानविषये पाकादिप्रतियोगिकानुकूलत्वादौ वृत्तित्ववारणाय पदेति तथाच तादृशानुकूलत्वादेः पदानुयोगिकत्वाभावान्न तदा-पत्तिः॥ ननु वृत्तित्वं शाब्दबोधजनकोपस्थितिजनकज्ञानविषयत्व-मेव वक्तव्यं अतएव वृत्तिः शाब्दबोधोपयिकोपस्थितिजनकः पद-पदार्थयोः सम्बन्धः कल्प्यते इति शब्दमण्यालोके मिश्रैरभिहितं एवञ्च तादृशाव्यवहितोत्तरत्वादेः शाब्दबोधजनकोपस्थितिजनक-ज्ञानविषयत्वाभावेन न तदापत्तिरिति चेन्न तथापि उपस्थित्या-त्मकाकाङ्क्षादि-ज्ञानजनकवाक्य-विषयकानुभवविषयेऽव्यवहितोत्तर-

त्वादौ तदापत्तिसम्भवात्। यदि च शाब्दबोधनिरूपिता या स्मृति-त्वावच्छिन्नजनकता तन्निरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्ना-वच्छेदकता निरूपितावच्छेदकतावत् सांसर्गिकविषयतावत्त्वं वृत्तित्व-मुच्यते आकाङ्क्षाज्ञानादेः शाब्दं प्रति निश्चयत्वेनैव कारणत्वं न तूपस्थितित्वेन नातः पूर्व्वोक्तदोष इति चेदेवमपि वर्णादिविषयक-शाब्दबोध-निरूपित-वर्णविषयकोपस्थितित्वावच्छिन्न-जनकतानिरू-पितावच्छेदकतावती या वर्णपदं शक्तिसम्बन्धेन वर्णवदित्यादि-ज्ञानीया वर्णवर्णत्वयोः सम्बन्धनिष्ठा सांसर्गिकविषयता तदाश्रय-समवायादौ वृत्तित्वापत्तिवारणाय अर्थ इति नच वर्णत्वस्यापि अर्थपदार्थतया समवायस्यानैक्यमतेऽपि तन्निवेशेनापि न तद्वारण-मिति वाच्यं अर्थ इत्यस्य प्रकारतावच्छेदकत्वानवच्छिन्नतादृशसांस-र्गिकविषयत्वस्य वृत्तित्वे तात्पर्य्यात् एवञ्च तादृशज्ञानीया या आनुपूर्व्वीपदयोः सम्बन्धनिष्ठाविषयता तामादाय तादृशसम्बन्धे वृत्तित्वापत्तिवारणाय पदेति अस्य च तादृशसांसर्गिकविषयतायां विशेष्यतावच्छेदकतानात्मकत्वे तात्पर्य्येण तद्वारणं प्रतिभाति। तथाच अर्थ इत्यादेः अवच्छेदकत्वानवच्छिन्नतादृशसांसर्गिकविषयत्वं पर्य्यवसितार्थः। केचित्तु शाब्दबोधानुकूलः अर्थे पदस्य सम्बन्धः कीदृश इति जिज्ञासया तन्निरूपणेन तादृशजिज्ञासानिवृत्तिस्तु अर्थपदघटितोद्देश्यबोधकपदसम्बलितोत्तरवाक्यं विना न भवति अतः अर्थ इत्यादिप्रयोजनान्तरानुसन्धानं विफलमिति प्राहुः। ननु सङ्केतो लक्षणा चेति विभजनं न युज्यते यस्मात् शाब्दबोधनिया-मको ज्ञातः पदपदार्थयोः सम्बन्ध इति प्राच्यैर्गीयते तत्र पद-स्यार्थोऽभिधेयः पदार्थ इति व्युत्पत्त्या पदशक्य एव पदार्थो वक्तव्यः अन्यथा घटादेरपि पटादिपदार्थत्वापत्तिरेवञ्च पदलक्ष्यार्थयोः

धीयते। इदम्पदमिममर्थं बोधयत्विति अस्मात् शब्दादयमर्थो बोद्धव्य इति वा इच्छा सङ्केतरूपा वृत्तिः। तत्राधुनिकसङ्केतः परिभाषा तया चार्थ-

सम्बन्धे वृत्तित्वं न वक्तुमर्हतीत्यत आह वृत्त्येत्यादि वृत्त्येत्यादिग्रन्थस्य पदार्थपदव्यवहारविषयनिर्व्वचनपरत्वमिति केषाञ्चिद्व्याख्यानं न सम्यक् तादृशग्रन्थस्य सामान्यतः पदार्थपदव्यवहारविषयत्वस्य निर्व्वचनपरत्वे वस्तुमात्रएव तत् सत्वेन अव्यावर्त्तकतया वृत्त्येत्यस्य व्यर्थत्वापत्तेः गगनकुसुमादेश्वालीकत्वेन धर्म्मिणोऽलाभे तादृशव्यवहारविषयत्वासम्भवाच्च॥ पदपदार्थविशेषघटितपदार्थपदव्यवहार-विषयनिर्व्वचनपरत्वे शक्त्या जलप्रवाहादेरिव लक्षणया तीरादेरिव च पदार्थमात्रस्यैव जलप्रवाहकालिकादिसम्बन्धरूपलक्षणया नद्यादिपदप्रतिपाद्यत्वेन नद्यादिपदघटितपदार्थपदव्यवहारविषयत्वसम्भवेन तद्दोषतादवस्थ्यात्। यदि च यत्र यत्रार्थे आधुनिकदेवदत्तादि-पदानां कस्यापि पुंसस्तात्पर्य्यादिकं न जायते तत्र तत्रार्थे तत्तत्पदप्रतिपाद्यत्वासम्भवेन तत्तत्पदघटितपदार्थपदव्यवहारवार-णाय वृत्त्येति इत्यपि न शङ्कनीयं तत्र तत्र तत्तत्पदानां तात्प-र्य्यादिविरहेणैव शाब्दबोधाजननेन तदापत्त्यसम्भवेन वृत्त्येत्यस्या-नावश्यकत्वात् वृत्तिस्वरूपादिनिरूपणे पदार्थपदव्यवहारविषय-निर्वचनस्यानाकाङ्क्षत्वेन अर्थान्तरापत्तेश्च एतेन घटादिपदे गगनादेः समवेतत्वादिसम्बन्धेन ज्ञानात् गगनाद्युपस्थितितः गगनादेः शाब्दबोधवारणाय वृत्त्येतीति केषाञ्चित्प्रलापोऽनादेयः तज्जन्यशाब्दबोधं प्रति वृत्त्येत्यादिवाक्यस्याप्रतिबन्धकत्वाच्चेत्यलं विस्तरेण॥ वृत्त्येति शक्तिलक्षणान्यतरसम्बन्धेनेत्यर्थः। अभिधीयते

बोधकं पदं पारिभाषिकं यथा शास्त्रकारादिसङ्केतितनदीवृद्ध्यादिपदम् । ईश्वरसङ्केतः शक्तिः । तया चार्थबोधकं पदं वाचकं यथा गोत्वादिविशिष्ट-

इत्यनन्तरं प्राच्यैरिति शेषः । अतो लक्षणा चेत्यस्य न तादृश-गाथया विरोधः इति भावः । ननु सङ्केतस्य इच्छारूपस्य संसर्गत्वं कुतः तस्य निष्प्रतियोगिकत्वात् कुतो वा घटपदस्य सङ्केतो घटे न तु पटादावित्यादिनियमोपपत्तिरीश्वरेच्छायाः सर्व्वं प्रति तुल्यत्वा-दित्यतस्तस्य विषयताविशेषघटितत्वेन सप्रतियोगिकत्वं नियामकत्वञ्चोपपादयन्नाह इदं पदमिति बोधयत्वित्यत्र णिजर्थो बोधान्वितजनकत्वं तथाच एतत्पदविशेष्यकैतत्पदार्थविषयकबोध-जनकत्वप्रकारकेच्छा तद्वाच्याभिलप्या । विनिगमनाविरहेणार्थ-विशेष्यकेच्छाया अपि तथात्वमाह अस्माच्छब्देति शब्दादित्यत्र पञ्चम्यर्थो जन्यत्वं तस्य च बोद्धव्येत्यत्र बुधधात्वर्थेऽन्वयः तव्यप्रत्ययार्थो विषयरूपकर्म्म तथाच एतच्छब्दजन्यबोधविषयत्वप्रकार-कार्थविशेष्यकेच्छालाभः । इदमत्रावधातव्यं यत्र विनिगमनास्ति तत्र एकविध एव सङ्केतः प्रयोजकः यथा पुष्पवन्तपदादौ पद-विशेष्यक एव एतस्य उपलक्षणेन च यत्र उभयविधसङ्केतेन न निर्व्वाहः तत्र बोधादिविशेष्यक एव प्रयोजकः यथा तदादि-पदादौ । सङ्केतं विभजते तत्रेति सङ्केतमध्य इत्यर्थकं आधुनिक इति जन्य इत्यर्थः । परिभाषा परिभाषापदार्थः । एतेन सङ्केतमात्रं शक्तिः परिभाषा तु उभयाद्यत्तिधर्म्मावच्छिन्नसङ्केत-रूपशक्तिविशेष एव इति मतं नाभिप्रेतमिति सूचितम् । ननु आधुनिकसङ्केतः परिभाषापदार्थो न वक्तुं शक्यते उभयाद्यत्ति-

बोधकं गवादिपदं तद्बोध्योऽर्थो गवादिर्वाच्यः स एव मुख्यार्थ इत्युच्यते। वाच्यवाचकादिपदे ईश्वरेच्छाया बोधजनकत्वेन या विषयता सैव धात्वर्थः तस्या आश्रयत्वरूपं कर्तृत्वं पदे कर्तृप्रत्ययेन बोध्यते

धर्म्मावच्छिन्नसङ्केतवत् पदस्य पारिभाषिकत्वेन तत्पदसंकेतस्यैव परिभाषात्वात् इत्याशङ्कायां आह तया चेति तथा च तस्य मतविशेषसिद्धत्वेन नैतन्मते दोष इति भावः। परिभाषया बोध्योऽर्थः परिभाषितः परिभाष्यो वेति॥ शक्तिं निर्वक्ति ईश्वरसङ्केतेति अत्र ईश्वरपदस्य नित्यत्वपरिचायकतया नित्यसंकेतः शक्तिरित्येवार्थो बोध्यः। एतेन ईश्वरत्वं नित्यज्ञानवत्त्वं जगत्कर्तृत्वं वेति वक्तव्यं अतस्तद्घटितसङ्केतत्वस्य महागौरवेण वच्यादिधातोः शक्यतावच्छेदकत्वासम्भवेन नित्यसङ्केतः शक्तिरित्येव वक्तुमुचितं स्यादित्यपि परास्तं न च ईश्वरीयत्वमनुपादेयमेवेत्यग्रिमग्रन्थविरोध इति वाच्यं तत्रापि ईश्वरीयत्वपदस्य नित्यत्वपरत्वादिति। गवादिशब्दानां वाचकपदप्रतिपाद्यत्वं गवादेर्वाच्यशब्दप्रतिपाद्यत्वञ्च योगेन समर्थयति वाच्यवाचकादीति पदे इत्यत्र सप्तम्यर्थो घटकत्वं तस्य च धात्वर्थं इत्यस्य घटकधातावन्वयः ईश्वरेच्छाया इत्यत्र षष्ठ्यर्थो निरूपितत्वं बोधजनकत्वेन इत्यत्र तृतीयायाः प्रकारतानिरूपितत्वरूपवैशिष्ट्यमर्थः। उभयञ्च विषयतेत्यत्रान्वेति॥ तथाच ईश्वरेच्छानिरूपिता या बोधजनकत्वप्रकारतानिरूपितविषयता सैव वाच्यवाचकादिघटकीभूतधात्वर्थः। इत्यन्वयबोधः॥ तस्या इति वचधात्वर्थतादृशविषयताया इत्यर्थः कर्तृत्वं कर्तृविहितप्रत्ययेन विवक्षितं पदे इत्यत्र बुधधात्वर्थबोधान्वयिविशेष्यत्वं

पदं गां वक्ति गां ब्रूते गोर्वाचकं इत्यादौ कर्म्मप्रत्ययान्तेनार्थवाचकपदेन तत्तदर्थविषयकत्वरूपतत्तत्कर्म्मकत्वं धात्वर्थैकदेशे बोधे बोध्यते पदेन गौ-

सप्तम्यर्थः तस्य च पारतन्त्र्येण आख्यातार्थप्रकारतायामप्यन्वयः कर्म्माख्यातार्थः प्रकारत्वं कर्त्तृत्वमन्वेति एवञ्च तादृशविषयता-निरूपितं आश्रयत्वस्वरूपं कर्त्तृप्रत्ययविवक्षितं पदनिष्ठविशेष्यतानिरूपितकर्त्तृप्रत्ययजन्यबोधीयप्रकारत्वाश्रय इति शाब्दधीरिति । आश्रयत्वरूपमित्याद्युपलक्षणं तेन कर्त्तृविहितक्तता आश्रयरूपकर्त्तृबोधनेऽपि न क्षतिः ॥ कर्म्मप्रत्ययान्तेन गामित्यादिना । बोध इत्यत्र सप्तम्यर्थो विशेष्यत्वं तस्य च बोध्यत इत्यत्र धात्वर्थेऽन्वयः । तथाच पदं गां वक्तीत्यादिवाक्यतः गोविषयकबोध-जनकत्वप्रकारतानिरूपितेश्वरेच्छीयविषयताश्रय इत्याद्यन्वय-बोधः । तच्च तादृशविषयतायाः परम्परया निरूपितत्वञ्च । तादृशेति बोधजनकत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयेत्यर्थः । बोधजनकत्वप्रकारतेति बोधजनकतात्वावच्छिन्नप्रकारतेत्यर्थः ननु जनकत्वप्रकारतेत्यनेनैव चरितार्थत्वे बोधेति व्यर्थमिति चेदत्र केचित् बोधेति सम्पातायातमिति प्राहुः परे तु जनकत्वं नियताव्यवहितपूर्व्ववर्त्तित्वं तच्च सामान्यतोऽप्रसिद्धमतो बोधेत्यावश्यकमिति व्याचक्षते तादृशप्रकारतान्तःपातित्वं तादृश-प्रकारत्वावच्छिन्नविशेष्यतानिरूपितत्वं परे तु तादृशान्तःपातित्वं तादृशप्रकारताव्यापकत्वं बोधाव्यवहितपूर्व्ववर्त्तित्वप्रकारताव्यापकत्वं बोधविषयताया अक्षतमित्याहुः बोध्यत इति तथाच पदे-नेत्यादौ तृतीयाद्यर्थो धात्वर्थतादृशविषयतान्वयि वृत्तित्वं एवञ्च

रूच्यते पदस्य गौर्वाच्य इत्यादौ पदनिष्ठधात्वर्थी-भूततादृशविषयतायाः परम्परया निरूपकत्वं तच्च धात्वर्थीभूततादृशविषयतानिरूपकबोधजनकत्वप्रका-रतान्तः-पातिबोध-निष्ठ-विषयता-निरूपक-विषयिता-सम्बन्धावच्छिन्नप्रकारताश्रयत्वरूपं ताट्टशक्रिया-कर्म्मत्वं गवादौ कर्म्मप्रत्ययेन बोध्यते द्वितीयेच्छायाः सङ्केतरूपत्वे वैपरीत्यमूह्य इति न्यायसिद्धान्तः ॥ अत्र मीमांसकानुयायिनः । अपभ्रंशादपि शक्ति-

पदनिष्ठं यत् बोधजनकत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यत्वं तन्निरूपकं जनकत्वनिष्ठप्रकारतान्तःपातिबोधनिष्ठविषयतानिरू-पकविषयत्वसम्बन्धावच्छिन्नं यद्विषयत्वं तदाश्रयो गौरित्यन्वयबोधः। पदस्य गौरित्यादिवाक्यतस्तु पदनिष्ठाया बोधजनकत्वप्रकारता-केश्वरेच्छीयविशेष्यतातन्निरूपकजनकत्वनिष्ठविषयत्वावच्छिन्नविषय-तानिरूपकबोधनिष्ठविषयतानिरूपकविषयत्व सम्बन्धावच्छिन्नविषय-ताश्रयाभिन्नो गौरित्यन्वयधीरिति ॥ द्वितीयेच्छाया इति अत्र जन्यबोधविषयत्वनिष्ठप्रकारताकेश्वरेच्छीयविशेष्यता सैव वच्यादि-धात्वर्थः । वैपरीत्यमिति तादृशविशेष्यतायाः परम्परया निरूप-कत्वं कर्तृत्वं तच्च तादृशविशेष्यतानिरूपकविषयत्वनिष्ठप्रकारत्वाव-च्छिन्नविशेष्यताकबोधनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपकजन्य-त्वनिष्ठ-प्रकारत्वावच्छिन्न-विशेष्यता-निरूपक-निरूपितत्व-सम्बन्धाव-च्छिन्नप्रकारताश्रयत्वं कर्तृप्रत्ययेन बोध्यते तादृशविशेष्यताश्रयत्वं कर्म्मत्वं कर्म्मप्रत्ययबोध्यमिति भावः ॥ न्यायसिद्धान्त इति न्याय-

भ्रमेणार्थप्रत्ययात् सन्मात्रविषयके भगवत्सङ्केते तस्यापि बोधकत्वेन विषयत्वमिति नैयायिकैरभ्युपगमात्तस्यापि वाचकत्वं साधुत्वञ्च स्यात् एवं लाक्षणिकगङ्गादिपदस्य उक्तयुक्त्या तीरादिवाचकत्वापत्तिः । यत्तु तादृशेच्छया भगवदुच्चरितत्वं वाच-

ग्रन्थकर्तृभिरभ्युपगतोऽर्थ इत्यर्थकम् ॥ अत्रेति शक्तिपदार्थजिज्ञासायामित्यर्थः । मीमांसकानुयायिन इति अस्याग्रेतनवदन्तीत्यनेनान्वयः । शक्तिपदार्थं पदपदार्थयोरतिरिक्तसम्बन्धरूपं संस्थापयितुं आदौ न्यायमतं दूषयति अपभ्रंशादपीत्यादि अपभ्रंशात् शक्तिशून्यत्वे सति व्यवहाराधीनगृहीतशक्तिकात् गा च मा च इत्यादिशब्दात् । सन्मात्रविषयक इति अत्र मात्रपदं कार्त्स्न्यार्थकं तेन वस्तुत्वव्यापकविषयताक इत्यर्थः । सङ्केत इत्यत्र सप्तम्यर्थो विषयत्वान्वयि निरूपितत्वम् । अभ्युपगमादिति अवश्यं स्वीकरणीयत्वादित्यर्थः अशक्यापह्नवत्वेनेति भावः ॥ न चापभ्रंशशब्दस्य वाचकत्वाङ्गीकारे का क्षतिरित्यत आह साधुत्वञ्चेति तच्च शक्तिभ्रमानधीनशाब्दबोधजनकत्वं व्याकरणनिष्पादितत्वमिति केचित् । एवञ्च साधुभिर्भाषितव्यमित्यादिविधिविषयत्वेन यज्ञादौ तत्प्रयोगे अनिष्टं न स्यात् प्रायश्चित्तविधेश्च वैफल्यं स्यादिति भावः । दोषान्तरमाह एवमिति गङ्गादिपदानां तीरादिमुख्यार्थकत्वापत्त्या लक्षणामात्रोच्छेदापत्त्या च तस्य स्वीकर्तुमशक्यत्वादिति भावः ॥ मिश्रमतं दूषयितुमुपन्यस्यति यत्त्विति । तादृशेच्छयेति अस्माच्छब्दादित्याद्याकारकेच्छयेत्यर्थः । एवञ्च यादृशशब्दजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितयदर्थ-

कत्वं अपभ्रंशादयश्च नार्थप्रत्यायनेच्छया भगव-
दुच्चरिता इति नातिप्रसङ्ग इति। तन्न अस्मदा-

निष्ठविशेष्यताकेच्छया भगवदुच्चरितत्वं तत्तत्पदस्य तत्तदर्थ-
वाचकत्वम्। तेन घटादिशब्दस्य न पटादिवाचकत्वापत्तिर्न वा
गाच्शब्दादे: गमश्नुतीति क्विपि निष्पन्नस्य गणपतिप्रापकाद्यर्थस्य
इत्यार्थे तदापत्ति:। उच्चरितत्वञ्च कण्ठताल्वाद्यभिघातजन्यत्वम्।
ईश्वरस्तु सर्गादौ नियोज्यनियोजकशरीरे परिगृह्य लोकानां
शब्दसङ्केतज्ञापनार्थं तादृशेच्छया साधुशब्दानेव प्रयोक्तवानिति
न्यायसिद्धान्तादिति भाव:॥ अपभ्रंशादयश्चेति आदिना लाक्ष-
णिकादिपरिग्रह:। भगवदुच्चरितजातीयत्वेति यादृशशब्दजन्य-
बोधविषयत्वप्रकारताकयदर्थनिष्ठविशेष्यताकेच्छया भगवदुच्चरिता
यादृशानुपूर्व्वीमच्छब्दा: तादृशानुपूर्व्वीमत्त्वं तज्जातीयत्वं तदेव
तदर्थवाचकत्वमिति तु फलितार्थ:। तादृशानुपूर्व्वी च अव्यवहितो-
त्तरत्वसम्बन्धेन घविशिष्टाकारविशिष्टविशिष्टाकारत्वादिरूपा
घटादिपदनिष्ठा भगवदुच्चरितपद इव अस्मदाद्युच्चरितपदेऽपि
अस्ति। नन्वेतादृशानुपूर्व्व्या अपि पूर्व्वपूर्व्ववर्णघटितत्वेन ईश्वरोच्च-
रितानुपूर्व्व्या अस्मदुच्चरितपदे सत्वं न सम्भवतीति चेन्न अव्यव-
हितोत्तरत्वसम्बन्धेन घत्वावच्छिन्नविशिष्टात्वावच्छिन्नविशिष्टत्वा-
वच्छिन्नविशिष्टात्वादिरूपायास्तस्या भगवदुच्चरितपद इव अस्मदा-
द्युच्चरितपदेऽपि सत्त्वे बाधकाभावात् तस्या: स्वाश्रयाव्यवहितोत्तर-
वृत्तिवृत्तित्वसम्बन्धेन घत्वादिविशिष्टात्वादिरूपत्वाद्वा ननु तादृशानु-
पूर्व्वी चरमवर्ण एवात: पूर्व्ववर्णे तद्वाचकत्वानुपपत्तिरिति चेन्न
तादृशतादृशोत्तरवर्णस्यैव वाचकत्वस्वीकारात् उत्तरोत्तरवर्णविशि-

द्युच्चरितपदेष्वव्याप्तेः भगवदुच्चरितजातीयत्वनिवेशे-
ऽपि वेदस्थलाक्षणिकेषु शब्देष्वतिव्याप्तेः सादिदेव-

ष्टपूर्व्वपूर्व्ववर्णत्वस्याप्यानुपूर्व्वीत्वसत्वाच्चेति ॥ ननु तथापि तादृशानु-
पूर्व्वग्रां एकवर्ण एव सत्त्वेन टशब्दो घटवाचक इति व्यवहारापत्ति-
रिति चेन्नैवं वाचकपदार्थतावच्छेदकरूपायास्तादृशानुपूर्व्वग्राः पार-
तन्त्र्येणाभेदेन उद्देश्यतावच्छेदके भानोपगमादेवञ्च शुद्धटत्वे
तादृशानुपूर्व्वग्रा अभेदबाधान्न तादृशव्यवहारापत्तिः स्वाव-
च्छिन्नप्रकारतावच्छेदकत्वसम्बन्धेन भानोपगमाद्वा । सूत्त्वादोषाश्च
पर्य्याप्तिनिवेशेनैव वारणीया इति ध्येयम् । वेदस्थलाक्षणिक-
पदेष्विति आयुर्घृतं आदित्यो यूप इत्यादावायुरादित्यादि-
पदेष्वित्यर्थः । अतिव्याप्तेरिति आयुर्जनकादित्यसदृशप्रत्यायने-
च्छया तत्तत्पदानां भगवदुच्चरितत्वेन तत्तदर्थवाचकत्वापत्तेरि-
त्यर्थः ॥ ननु तादृशेच्छया भगवदुच्चरितत्वमित्यत्र इच्छांशे विषय-
तया विशेषणतासम्बन्धपदनिष्ठजनकत्वं उपस्थितिरूपव्यापारद्वारा-
वाच्यं अन्यथा आकाङ्क्षाज्ञानविधया वाक्यनिष्ठजनकतामादाय
सिद्धान्तेऽपि वाक्येऽतिव्याप्त्यापत्तिरेतच्चाग्रे स्फुटीभविष्यति एवञ्च
तद्घटकीभूतोपस्थितौ शक्यविषयतानिरूपितसम्बन्धविषयत्वाप्रयोज्य-
त्वनिवेशे लाक्षणिकपदेषु नातिव्याप्तिरिति यदि विभाव्यते तदा-
प्याह सादीति सादित्वञ्च तत्तदर्थकतत्तत्पदसजातीयपदासमान-
कालीनप्रागभावप्रतियोगित्वम् । अव्याप्तेश्चेति देवदत्तादिपदानां
पुत्त्रादिबोधजननेच्छया पित्रादिनोच्चारणात् नत्वीश्वरेणेति भावः॥
ननु द्वादशेऽहनि पिता नाम कुर्य्यादिति नामकरणविधायकश्रुतौ
नामपदस्य देवदत्तादिसंज्ञापरत्वं वाच्यं अन्यथा तेषामलक्षतयै-

दत्तादिपदेऽव्याप्तेश्च। द्वादशेऽहनि पिता नाम कुर्य्यात् इति वेदस्थनामपदस्य देवदत्तादिपदपरत्वे-

वाच्याप्तिशङ्का न स्यादेवञ्च तेषु कुतो नेश्वरोच्चरितत्वमित्यत आह द्वादश इत्यादि ननु आधुनिकदेवदत्तादिपदानां इदं पदमिममर्थं बोधयत्वित्याद्याकारकपितृसङ्केतविषयत्वेन ईश्वरसङ्केतविषयत्वा-भावात् उच्चरितत्वानिवेशपक्षेऽपि अव्याप्तितादवस्थ्यमिति न च वाक्योच्चारणं प्रति बुबोधयिषाया हेतुत्वेन द्वादशेऽहनीति वाक्यं इष्टसाधनीभूतद्वादशदिनाधिकरणकपुत्त्रविषयकबोधजनकत्ववन्नाम-विषयककृतिमान् पितेति बोधं जनयत्वितीच्छा तात्पर्य्यरूपा परमेशितुरस्ति यतः तत्र पुत्त्रस्येत्यध्याहार्य्यस्य तदघटकषष्ठ्या बोध-जनकत्वरूपसम्बन्धार्थकत्वेन पुत्त्रविषयकबोधजनकत्वमर्थः। नामपदं देवदत्तादिसंज्ञापरं तादृशेच्छायां नाम्नि पुत्त्रविषयकबोधजनकत्व-भानात् देवदत्तादिपदानां वाचकत्वसम्भव इति वाच्यं तथा सति पितृसङ्केतस्य तादृशविध्यविषयत्वेन सङ्केतं विनापि पितुस्तादृशनाम-प्रयोगेनैव कृतकृत्यतापत्तेः एवं यत्र द्वादशाहात् पूर्व्वं अन्येन पुरुषेण इदं पदं एतं पुत्त्रं बोधयत्विति सङ्केतितः पुत्त्रस्तत्र द्वादशदिवसेऽपि पिता पुत्रबोधजनकं देवदत्तपदमिति शब्दमात्रकरणेऽपि वेदार्थ-सिद्धौ भगवत्तात्पर्य्योपपत्तौ च तादृशशब्दस्य याचकत्वापत्तेः न च नामपदं पदजन्यबोधविषयतावत्सङ्केतपरं व्युत्पत्तिवैचित्र्याच्च तदेकदेशे तादृशविषयतायां अध्याहार्य्यपुत्त्रस्येत्यस्यार्थस्य पुत्त्रनिष्ठ-त्वस्यान्वयः कृधातोश्चाश्रयत्वमर्थः। तथाच इष्टसाधनीभूता या पुत्त्रनिष्ठपदजन्यबोधविषयतावदिच्छाश्रयता तदाश्रयः पितेति बोधः अथवा नामपदं पदजन्यबोधविषयतावत्पुत्त्रविषयकेच्छापरं एव-

मीयितुस्ताहृशबुबोधयिषा पदजन्यबोधविषयत्वेन पुत्त्रावगाहनात् सङ्केतरूपेति वाच्यं नामपदस्य देवदत्तादिपदपरत्वेऽपीति ग्रन्था-सङ्गतेरिति चेत् अत्र केचित् नामपदस्येत्यादिग्रन्थस्तु भट्टाचार्य्यै-रापाततउक्तः नामपदन्तु ताहृशेच्छापरमेव न तु याहृशानुपूर्व्वी पदं याहृशरूपेणार्थश्च सङ्केतेनावगाह्यते ताहृशानुपूर्व्वी ताहृश-रूपेण च पदपदार्थयोर्वाच्यवाचकभाव एवावश्यकः उक्तसङ्केते तु पदत्वेन देवदत्तादिशब्दानां पुत्त्रत्वेन तत्तदर्थानां चावगाहनात् देवदत्तपदत्वादिना पुत्त्रनिष्ठतत्तज्जातिरूपेण कुतस्तयोर्वाच्यवाचक-भाव इति चेन्न नामपदस्य नामत्वसामानाधिकरण्योपलक्षित-धर्म्मावच्छिन्नस्य परत्वात् पुत्त्रपदस्य पुत्त्रत्वादिसामानाधिकरण्योप-लक्षितधर्म्मावच्छिन्नपरत्वाच्च ताहृशताहृशरूपेण वाच्यवाचकत्व-सिद्धेरित्याहुः ॥ वस्तुतस्तु नामपदं इच्छाविशिष्टपदत्वसमानाधि-करणधर्म्मावच्छिन्नपरं अध्याहार्य्यञ्च पुत्त्रस्येति तत्र पुत्त्रपदं पुत्त्रत्व-समानाधिकरणधर्म्मावच्छिन्नपरं षष्ठ्यर्थश्च बोधजनकत्वरूपसम्बन्धः तथाच इष्टसाधनीभूता, या, पुत्त्रत्वसमानाधिकरणधर्म्मवद्बोधजन-कतावदिच्छावत्पदत्वसमानाधिकरणधर्म्मावच्छिन्नविषयिनी कृतिः तद्वान् पितेत्यन्वयबोधः इच्छावत्ता च स्वसमानाधिकरणकृति-प्रयोज्योच्चारणकत्व-स्वसमानाधिकरणपितृत्वनिरूपितपुत्त्रत्वसमा-नाधिकरणधर्म्मावच्छिन्नविषयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपित-बोधत्वावच्छिन्नविषयताकजनकत्वत्वावच्छिन्नविषयताकपदत्वसमा-नाधिकरणधर्म्मावच्छिन्नविशेष्यतावत्त्वोभयसम्बन्धेन स्वद्वयमिच्छा-परं अथवा इच्छावत्ता च स्वसमानाधिकरणकृतिजन्योच्चारण-कत्वस्वावच्छेदक-शरीरावच्छिन्न-पितृत्व-निरूपितजन्यतावच्छरीर-वत्त्वोभयसम्बन्धेन स्वद्वयमिच्छापरं शरीरवत्त्वञ्च स्वोत्पत्त्यधिकरण-

ऽपि देवदत्तेत्यादिस्वरूपाणां भगवदनुच्चरितत्वात् । एवं ईश्वरसङ्केतस्य शक्तित्वे ईश्वरानङ्गीकर्त्तृमते शाब्दबोधानुपपत्तिः । अथ शाब्दबोधोपयोगितायामीश्वरीयत्वमनुपादेयमेव एवञ्चाधुनिकसङ्केत-

दिनावधिद्वादशदिनाधिक-रणकत्व-स्ववृत्ति पृथिवीत्वव्याप्यजात्यव-च्छिन्नविषयत्वसम्बन्धावच्छिन्नप्रकारत्वं यत् तन्निरूपितबोधत्वाव-च्छिन्नविषयताकजनकत्वविषयताकताद्दशविशेष्यतावत्त्वोभयसम्बन्धेन स्वद्वयं शरीरपरं एवञ्च इच्छाविशिष्टनाम्नो विधेयत्वेन पितुरपि ताद्दशसङ्केत आवश्यकः एतेन पितृत्वपुत्त्रत्वयोरननुगतत्वे वाक्यभेदा-पत्तिः अनुगतत्वे अन्यदीयपुत्त्रस्यान्येन नामकरणेऽपि न वेदार्थबाध इत्यपि निरस्तं भगवतो बुबोधयिषया पुत्त्रत्वसमानाधिकरणधर्म्मा-वच्छिन्नविषयकबोधजनकत्वस्य ताद्दशनामत्वसमानाधिकरणधर्म्मा-वच्छिन्नांशेऽवगाहनात् तेषां वाच्यवाचकभावसिद्धिश्चेति द्रष्टव्यम् ॥ विधिवाक्ये द्वादश इत्यत्र एकादश इति पाठ इति केचित् । ईश्वरसङ्केतस्य शक्तित्वे दोषान्तरमाह एवमिति ईश्वरानङ्गीकर्त्तृ-मत इति तन्मते ज्ञाने नित्यत्वस्य कृतौ जगज्जनकत्वस्य वा बाधेन नित्यज्ञानादिमत्त्वरूपेश्वरत्वघटितज्ञानस्य इच्छायां नित्यत्वबाधेन वा नित्यसङ्केतज्ञानस्यासम्भवात् व्युत्पन्नानां शाब्दबोधानुपपत्ति-रिति भावः । ननु ईश्वरसङ्केतस्य शक्तित्वेऽपि शाब्दबोधं प्रति सङ्केतज्ञानत्वेन कारणत्वं वाच्यं नतु तत्र ईश्वरीयत्वं प्रवेश्यते गौरवात्प्रयोजनविरहाच्च कुतस्तदनुपपत्तिरित्याशङ्कते । अथेति एतच्च वदतो व्याघातशङ्कामात्रं तेन पूर्व्वदोषान्तरसत्त्वेऽपि न क्षतिः । शाब्दबोधोपयोगितायामिति शाब्दबोधकारणतावच्छेदक-

ज्ञानादपि शाब्दबोधस्तादृशसङ्केतस्य वृत्तित्वञ्च निर्व्वहति। न चाधुनिकसङ्केतस्य वृत्तित्वे तात्पर्य्यस्यापि तथात्वप्रसङ्गः तस्यापि बोधकत्वेन पदविषयकतया सङ्केतरूपत्वात् न चेष्टापत्तिः तथा सति लक्षणास्थलेऽपि तात्पर्य्यस्य वृत्तितया लक्षणाया

कोटावित्यर्थः। एवञ्च कारणतावच्छेदकतया ईश्वरीयत्वस्याप्रवेशे चेत्यर्थः। आधुनिकसङ्केतज्ञानादपीति तादृशसङ्केतज्ञानस्य अर्थविषयकबोधजनकत्वप्रकारताकेच्छीयविशेष्यता-प्रकारताकपदनिष्ठविशेष्यता-शालि-निश्चयत्व-रूप-कारणताव-च्छेदका-क्रान्तत्वादिति भावः। वृत्तित्वं शाब्दबोधौपयिकसम्बन्धत्वं निर्व्वहतीति तथाच परिभाषात्वेन सङ्केतविभजनमपि नासङ्गतमिति। तात्पर्य्यस्यापि तात्पर्य्यसमुदायस्यापि तेन शक्तिज्ञानत्वेन कारणपक्षेऽपि ईश्वरतात्पर्य्यस्य वृत्तित्वप्रसङ्गेऽपि न क्षतिः। तथा सति तात्पर्य्यस्य वृत्तित्वस्वीकारे सति वृत्तित्वोच्छेदेति गङ्गायां घोष इत्यादौ गङ्गापदं तीरं बोधयत्वित्याद्याकारकवक्तृतात्पर्य्यस्य वृत्तिरूपतया तज्ज्ञानोपस्थापितस्य तीरादेः शाब्दबोधनिर्व्वाहेण किमर्थं लक्षणाया वृत्तित्वं कल्पनीयमिति तथाच लक्षणोच्छेदरूपानिष्ठापत्त्या तदिष्टापत्तेरयोगादिति भावः। तात्पर्य्यज्ञानस्य सङ्केतरूपवृत्तिज्ञानरूपत्वेऽपि तस्याव्यवधानेन शाब्दबोधजनकतया पदार्थोपस्थितिद्वारा जनकस्य वृत्तिज्ञानस्य कारणत्वस्याचरितार्थत्वेन स्वतन्त्रकारणत्वमावश्यकमिति समाधत्ते यत इति वृत्तिरिति शाब्दबोधजनक इत्यर्थः। तथाच आदौ पदपदार्थयोः सम्बन्धरूपसङ्केतज्ञानं ततस्तज्जन्यपदार्थस्मरणं ततश्च शाब्दबोधः फलम्।

वृत्तित्वोच्छेदप्रसङ्गात् इति वाच्यम्। यतः पदार्थोपस्थितिव्यापारकः सङ्केतो वृत्तिः। तात्पर्य्यज्ञानञ्च साक्षादेव शाब्दबोधोपयोगि न तु पदार्थोपस्थितिद्वारा वृत्त्युपस्थापितपदार्थ एव प्रकरणादिना वक्तृतात्पर्य्यावधारणात् तथाच लक्षणाया वृत्तित्वानुपगमे गङ्गादिपदात्तीरादिपदार्थानुपस्थितौ तत्र तत्तत्पदव्यक्तेस्तात्पर्य्याग्रहाच्छाब्दबोधानुपपत्तिरिति तस्या

ननु तात्पर्य्यज्ञानस्य पदार्थोपस्थितिद्वारा कुतो न कारणत्वं येन लाघवं स्यात् क्षणविलम्बस्य प्रथमातनिर्णीतव्यत्वादित्यत आह वृत्त्युपस्थापितेति एवकारेण सम्बन्धान्तरज्ञानोपस्थापितव्यवच्छेदः। एवञ्च तात्पर्य्यज्ञानात् पूर्व्वं वृत्तिज्ञानजन्योपस्थितेरावश्यकत्वेन न तद्द्वारा तस्य जनकत्वसम्भव इति भावः॥ प्रकरणादिनेति प्रकरणं भोजनपरिधानादिव्यापारविशेषः तथाच घटमानयेत्यादौ शक्यघटादिसाहचर्य्यादिसम्बन्धरूपलक्षणाग्रहात्पटाद्युपस्थितौ घटपदमिदं वक्तुः पटविषयकबोधजनकतयेच्छाविषयतावत्पटानयननिर्व्वाह्यपरिधानोद्देश्यक-प्रवृत्तिप्रयोज्योच्चारणकत्वादित्याद्यनुमानादिनेत्यर्थः। आदिना मुख्यार्थबाधपरिग्रहः॥ ननु सङ्केतलक्षणान्यतरसम्बन्धज्ञानाधीनोपस्थितपदार्थविषयकतात्पर्य्यज्ञानस्य शाब्दबोधहेतुत्वे विशिष्टबुद्ध्यात्मकतात्पर्य्यज्ञानस्य सम्पादकतया विशेषणस्य पदार्थस्य लक्षणाधीनोपस्थितेरपेक्षणेऽपि शाब्दबोधं प्रति लक्षणाधीनोपस्थितित्वेन कारणत्वाकल्पनात् लक्षणायाः शाब्दबोधजनकोपस्थितिप्रयोजकत्वरूपवृत्तित्वं न सम्भवति सम्पद्यते च तात्पर्य्यज्ञानानन्तरं तद्रूपसङ्केतग्रहाधीनोपस्थितितः शाब्दबोध इत्या-

वृत्तित्वमावश्यकं। नच तात्पर्य्यग्रहार्थं लक्षणाधीनोपस्थितेरपेक्षितत्वेऽपि तदधीनोपस्थितित्वेन शाब्दबोधहेतुत्वे मानाभावात् तस्या वृत्तित्वासिद्धिः लक्षणास्थले तात्पर्य्यात्मकसङ्केताधीनोपस्थितित एव शाब्दबोधनिर्व्वाहादाधुनिकशङ्केतस्थले तात्पर्य्याधीनोपस्थितेः शाब्दबोधप्रयोजकतायाः क्लृप्तत्वादिति वाच्यं लक्षणाधीनपदार्थोपस्थितिसत्वे मुख्यार्थबाधादिना तत्तदर्थे तत्तत्पदव्यक्तेस्तात्पर्य्यग्रहे उपस्थित्यन्तरमन्तरेणैव तत्तदर्थानुभवस्य सर्व्वानु-

शङ्कते न चेत्यादि ननु तात्पर्य्यज्ञानाधीनोपस्थितितः शाब्दबोधस्य क्वचिदप्यनुदयेनानुभवविरोधात् कुतस्तत् कल्पनमित्यत आह आधुनिकेति सर्व्वानुभवसिद्धत्वादिति तात्पर्य्यज्ञानाव्यवहितोत्तरशाब्दबोधजननस्य सर्व्वानुभवविषयत्वेन गङ्गायां घोष इत्यादौ तात्पर्य्यज्ञानानन्तरं तीराद्युपस्थितिं प्रकल्प्य शाब्दबोधकल्पने सर्व्वानुभवविरोधः स्यात् यत्र न सर्व्वानुभवविरोधस्तत्र क्षणविलम्बस्य स्वीकारे न दोषः लाघवमपि साधकं तत्रैव तथाच तदुपपत्त्यर्थं लक्षणाया वृत्तित्वमावश्यकमिति भावः। ननु तात्पर्य्यस्यावृत्तित्वे आधुनिकसङ्केतस्य कथं वृत्तित्वमित्यत आह आधुनिकेति वाक्यत इति डित्थः काष्ठमयो हस्ती डवित्थस्तन्मयो मृगः इति वाक्यात् यूस्व्याख्यो नदीत्यादिवाक्याच्च इत्यर्थः अर्थविशेषे काष्ठमयहस्त्यादौ, ननु शाब्दबोधकारणतायां ईश्वरीयत्वानुपादाने ईश्वरानङ्गीकर्त्तृमते सङ्केतकर्त्तृपुरुषवाक्यतो डित्थादिपदानां सङ्केत-

भवसिद्धत्वात् आधुनिकसङ्केतस्थले च पूर्व्वं सङ्केत-कर्त्तृपुरुषवाक्यतोऽर्थविशेषे डित्यादिपदस्य सङ्केत-ग्रहात्तत्तत्पदेनार्थविशेषोपस्थितौ प्रकरणादिना तत्तत्पदव्यक्तेस्तत्र तात्पर्य्यग्रहे सति शाब्दबोधस्य वृत्त्यन्तराधीनोपस्थितिमन्तरेणैवोत्पत्या आधुनिक-सङ्केतस्य वृत्तित्वमिति चेत् एवमपि सङ्केतस्य सम्बन्धत्वे मानाभावेन निष्प्रतियोगिकतया तद-सम्भवेन च पदार्थोपस्थापकत्वासम्भवेन वृत्तित्वा-निर्व्वाहात् एतेन शाब्दबोधौपयिकसम्बन्धत्वेन ईश्वर-

ग्रहात् शाब्दबोधो जायतां गवादिपदानां वेदस्यापरपदानांश्च सङ्केत-कर्त्तृपुरुषाभावात् तेभ्यः कुतः शाब्दबोध इति चेन्न पूर्व्वाचार्य्यकपिल-कमलासनादीनां तत्तत्सङ्केतकर्त्तृणां वाक्यतस्तेषां सङ्केतग्रहेण बुबो-धयिषात्मकसङ्केतग्रहेण वा तेभ्यः शाब्दबोधजननादिति हृदयम्। एवमपीति शाब्दबोधोपयोगितायामीश्वरीयत्वानुपादानेन ईश्वरा-नङ्गीकर्त्तृमते शाब्दबोधसम्भवेऽपीत्यर्थः। ननु शाब्दबोधस्य पूर्व्वोक्त-कादाचित्कत्वान्यथानुपपत्त्या क्लृप्तस्य तस्य तत्प्रयोजकसम्बन्धत्वकल्प-नमावश्यकं तस्यातिरिक्तत्वकल्पने धर्म्मिकल्पनातो हि धर्म्मकल्पने-त्यादिन्यायेन गौरवमापद्यते ज्ञानादेस्तु तथात्वेऽतिप्रसङ्गः स्यादतो लाघवज्ञानादिसहकृततादृशान्यथानुपपत्तिरेव तस्य सम्बन्धत्वकल्पने मानमित्यत आह निष्प्रतियोगिकतयेति तथाच सम्बन्धत्वकल्पने सम्बन्धत्वाभावव्याप्यतया निष्प्रतियोगिकत्वज्ञानमेव वाधकमिति भावः। निष्प्रतियोगिकत्वं प्रतियोगित्वनिरूपकत्वाभावः प्रति-

शङ्केतज्ज्ञानं हेतुः तच्च मीमांसकानामपि सम्भवति ताद्दशज्ञानविरोधिविपरीतज्ञानाभावादित्यपि निरस्तम्। यत्तु स्वजन्यज्ञानविषयत्वप्रकारकेच्छाविशेष्यत्वं अर्थे पदसम्बन्धः पदे चार्थस्य विपरीतं अस्य सम्बन्धत्वमन्यथानुपपत्या कल्प्यते एताद्दशपरम्प-

योगित्वञ्च अनुभवसिद्धः स्वरूपसम्बन्धविशेषः घटादाविव सङ्केतेऽपि सप्रतियोगिकत्वं नानुभवसिद्धमिति॥ एतेनेति सङ्केतस्य सम्बन्धत्वाभावेन इत्यर्थः। अस्य च निरस्तमित्यनेनान्वयः। तच्चेति शाब्दबोधौपयिकसम्बन्धत्वेन ज्ञानञ्चेत्यर्थः। मीमांसकानामिति न्यायमते धर्म्मिणि ईश्वरसङ्केते तन्मते पदपदार्थयोरतिरिक्तसम्बन्धे तथाच धर्म्मिणि विवादेऽपि ताद्दशधर्म्मे विवादाभावेन तन्मतसाधारण्यादित्याशयः। तत्र बाधकाभावरूपहेतुमाह ताद्दशज्ञानेति शाब्दबोधौपयिकसम्बन्धत्वज्ञानेत्यर्थः। स्वजन्येति स्वं परिचायकं तथाच जन्यत्वनिष्ठविषयताकबोधनिष्ठविषयताकविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यत्वं पदप्रतियोगिकः अर्थानुयोगिकः सम्बन्धः विपरीत इति स्वनिष्ठेदिच्छीयविशेष्यतानिरूपितविषयत्वनिष्ठप्रकारताकबोधनिष्ठप्रकारताकजन्यत्वनिष्ठप्रकारताकनिरूपितत्व-सम्बन्धावच्छिन्नप्रकारत्वं अथवा स्वविषयकबोधजनकत्वप्रकारताकेच्छाविशेष्यत्वं सम्बन्धः अर्थप्रतियोगिकः पदानुयोगिक इत्यर्थः। अन्यथानुपपत्त्या शाब्दबोधान्यथानुपपत्त्या। न स्वीक्रियत इति अपभ्रंशादिस्थले ईश्वरेच्छीयताद्दशविषयायाः सत्वेऽपि तस्याः संसर्गत्वं नाङ्गीक्रियते कल्पकाभावादित्यर्थः। भ्रम एवेति अन्यनिष्ठताद्दशविषयतायाः संसर्गतया

राया अपभ्रंशादिस्थले सम्बन्धत्वं न स्वीक्रियते इति एतत् सम्बन्धावगाहिज्ञानं भ्रम एवेति सम्प्रदाय इति तदपि तुच्छं अक्लृप्तस्य तादृशेच्छाविषयत्वस्य सम्बन्धतोपगमे तादृशज्ञानविषयस्वसमानकालीन-विषयत्वादिपरम्पराया अपि विनिगमनाविरहेण सम्बन्धताप्रसङ्गात् तस्मात् पदपदार्थयोः सम्बन्धा-न्तरमेव वाच्यवाचकभाव इति वदन्ति॥ यस्तु ज्ञाने पदानां शक्तिः नत्वर्थे तथाच तज्ज्ञानशक्तत्वं तच्च तद्विषयकशाब्दधीजनकतावच्छेदकधर्म्मवत्त्वं स च

भानादिति भावः। तादृशज्ञानविषयत्वेति स्वजन्यबोधीयविषयत्व-प्रकारताकज्ञानीयविशेष्यत्वेत्यर्थः। तादृशज्ञानविषयत्वसंसर्गत्वस्य कथञ्चिदिष्टापत्तौ समानकालीनविषयत्वस्य विभिन्नकालीनपदपदा-र्थयोः संसर्गत्वासम्भवादाह आदीति आदिना स्ववृत्त्यभावकालीने विषयत्वादेः परिग्रहः। एतेन पूर्व्वस्मिन् लाघवरूपविनिगमनास-त्वेऽपि न क्षतिः। यद्यपि तादृशविशयत्वस्यावाचकेऽप्यस्ति तथापि तन्निष्ठविपताया अपभ्रंशनिष्ठाया इव संसर्गत्वास्वीका-रान्नातिप्रसङ्गः इति॥ मतान्तरमुत्थापयति यस्त्विति, ज्ञाने अर्थज्ञाने, अर्थविषयकशाब्दबोध इति तु यावत्। सप्तम्यर्थोऽनु-कूलत्वं तस्य च शक्तावन्वयः। नत्वर्थे इति नत्वर्थानुकूला इत्यर्थः। ननु तद्विषयकज्ञानानुकूलशक्तिमत्त्वं यदि तद्वाचकत्वं, तदा चक्षु-रादेरपि घटादिवाचकत्वापत्तिरत आह तच्चेति। तद्विषयकेति तद्विषयकत्वशाब्दत्वोभय-धर्म्मावच्छिन्न-जन्यतानिरूपित-जनकताव-

धर्म्मः वह्न्यादिनिष्ठदाहानुकूलशक्तिवत्पदार्थान्तरमेव लाक्षणिकञ्च नानुभावकमेव इति न तत्र शक्तिः घटादिपदस्य मितिमातृविषयकधीजनकत्वेऽपि न तद्वाचकत्वं तद्विषयकत्वावच्छिन्नज्ञानशक्तपदस्यैव तद्वाचकत्वात् मितिमातृविषयकत्वेन च ज्ञानस्य न

च्छेदकधर्म्मत्वमर्थः। एवञ्च पटविषयकसमूहालम्बनघटविषयकशाब्दानुकूलशक्तिमादाय न घटादिपदानां पटादिवाचकत्वापत्तिः। वह्न्यादिनिष्ठदाहानुकूलेति तैः सर्व्वत्रैव कारणे कार्य्यानुकूलासामर्थ्यरूपशक्तिः पदार्थान्तरं स्वीक्रियमाणापि वह्न्यादौ प्रसिद्धतया दृष्टान्ततया उक्ता। कार्य्यकारणभावस्य दाहादिकं प्रति तत्तदनुकूलशक्तिमत्वेन तत्र कार्य्यतावच्छेदकं दाहत्वादिकं कारणतावच्छेदकञ्च तत्तच्छक्तिरेव तत्तत्कार्य्यानुकूलत्वञ्च परिचायकं बोध्यम्। ननु गङ्गायां घोष इत्यादौ गङ्गादिपदानां तीरादिप्रतिपादकतया तत्र तीरादिबोधाद्यनुकूलशक्तेरावश्यकत्वेन तीरादिवाचकत्वापत्तिरत आह, लाक्षणिकञ्चेति। नानुभावकमेवेति गङ्गादिपदं न तीराद्यनुभवजनकमेवेत्यर्थः। अपि तु तत्स्मारकमेवेति। एतच्चाग्रे स्फुटीभविष्यति। मितिमातृविषयकेति तन्मते ज्ञानमात्र एव मितिमातारौ भासेते। मितिर्ज्ञानं माता चात्मा तथाच घटोऽस्तीत्यादिवाक्यात् अस्ति तावान् घटः अस्तित्वेन घटमहं जानामीत्याकारकं समूहालम्बनरूपं ज्ञानं जायते तत्र मितेः प्रकारतया आत्मनो विशेष्यतया भानमिति॥ तद्विषयकत्वावच्छिन्नेति, तद्विषयकत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकशक्तिमत्पदस्यैवेत्यर्थः। तद्वाचकत्वादिति, तद्वाचकत्वेन

किञ्चित् पदशक्यताज्ञानसामान्यसामग्या एव मितिमात्रभाषकतया पदान्तरस्य च तदर्थभाषकतया तद्विषयकत्वस्य तत्पदजन्यतावच्छेदकत्वे मानाभावात्॥ कार्य्यान्वितस्वार्थे पदानां शक्तिरिति वादिनां साक्षात्परम्परासाधारणकार्य्यविषयतानिरूपितत्वेन घटादिविषयताया घटादिपदजन्यताव-

विवक्षितत्वादित्यर्थः। ननु घटादिपदजन्यज्ञानस्य मितिमात्रनियतविषयकत्वेन तादृशजन्यताया मितिमात्रविषयकत्वावच्छिन्नत्वं न कुतः अन्यथा घटादिविषयकत्वावच्छिन्नत्वमपि मास्तु इत्यत आह, ज्ञानसामान्येति। ज्ञानमात्र एव तज्ज्ञानाद्यभिचारादिदोषेण विशेषसामग्यास्तज्ज्ञानप्रयोजकत्वांकल्पनादिति भावः। पदान्तरस्य, पटादिपदान्तरस्य। तदर्थभासकतया मितिमात्रभानप्रयोजकव्याप्यतया एतेन घटादिपदस्य मितिमात्रज्ञानजनकत्वे पटादिपदान्तर्भावेण व्यभिचारः स्यात्। प्रकारान्तरेण व्यभिचारवारणे महागौरवं स्यादिति सूचितम्॥ गुरुमतमुपन्यस्यति, कार्य्यान्वितेति। तेषामयमाशयः, गामानय गां बध्नयेत्यादिरूपव्यवहारप्रयोजकवाक्यानि सर्व्वाणि प्रवर्त्तकत्वेन लिङादिपदघटितानि ततश्च तद्व्यवहारदर्शिनः शिशवोऽपि कार्य्यविषयकगवाद्यर्थबोधं प्रत्येव गवादिपदानां सामर्थ्यमवधारयन्तः तस्मादुत्तरमपि कार्य्यान्वितगवादौ शक्तिज्ञानेनैव तादृशगवादिकं प्रतिपद्यन्ते इति॥ साक्षात् परम्परासाधारणेति। तन्मते सर्व्वत्रैव शाब्दबोधे कार्य्यत्वभानोपपत्तये कार्य्यत्वविषयतानिरूपितघटाद्यर्थनिष्ठविषयताशालिशाब्दत्वावच्छिन्नं प्रति ज्ञायमानघटादि-

च्छेदकत्वेऽपि न घटादिपदस्य कार्य्यतावाचकत्वं अपि तु लिङादिपदस्यैव तद्विषयकत्वावच्छिन्ने तत्र साक्षात्परम्परा-साधारण-निरूपितत्वा-विशेषण-तया अवच्छेदकत्वस्यैव निवेशात् न च कार्य्यानुकूलशक्तेः

पदत्वेन कारणत्वमिति भावः। घटमानयेत्यादावानयनादिनिष्ठविषयतायां कार्य्यत्वविषयतायाः साक्षान्निरूपितत्वेन साक्षादिति, घटादिविषयतायां कार्य्यत्वविषयतायाः परम्परानिरूपितत्वेन परम्परेति, निरूपितत्वेनेति अत्र तृतीयार्थो घटादिविषयतान्वितवैशिष्ट्यं। तथाच कार्य्यताविषयतानिरूपितत्वस्य घटादिविषयताविशेषणस्य घटादिपदजन्यतावच्छेदकत्वावच्छेदकत्वेन तदवच्छेदकत्वं कार्य्यत्वविषयतायाः आवश्यकं। एवञ्च तद्विषयत्वनिष्ठावच्छेदकताकशाब्दबोधनिष्ठजन्यताकजनकत्वं तद्वाचकत्वमिति सामान्यलक्षणे सति घटादिपदानां कार्य्यतावाचकत्वापत्तिरिति भावः। कार्य्यत्वविषयतानिष्ठावच्छेदकतावारणाय साक्षादिति, कार्य्यत्वत्वविषयतानिष्ठावच्छेदकतावारणाय. परम्परेति केचित्, निरूपितत्वाविशेषणतयेति, "तथाच निरूपितत्वनिष्ठावच्छेदकत्वानिरूपकत्वं तल्लक्षणघटकतन्निष्ठावच्छेदकतायां विशेषणीयमिति। नचैवं घटादिविषयतानिष्ठावच्छेदकतायामपि कार्य्यताविषयतानिष्ठावच्छेदकतानिरूपकत्वसत्वात् घटादिपदानां घटादिवाचकत्वानुपपत्तिरिति वाच्यं। विशेष्यनिष्ठावच्छेदकत्वादौ विशेषणनिष्ठावच्छेदकत्वादिनिरूपितत्वस्यैव स्वीकारात् न तु तन्निरूपकत्वस्य विशेषणनिष्ठावच्छेदकत्वादौ तु विशेष्यनिष्ठावच्छेदकत्वादिनिरूपकत्वस्यैव। न च विनिगमनाविरहेण उभयोः परस्परं निरूप्यनिरू-

स्वरूपसत्या एव कार्य्यानुकूलतया पदार्थोपस्थितौ शाब्दबोधे च ज्ञातोपयोगिनोऽर्थे पदस्य वृत्तिरूप-शक्त्यन्तरस्य स्वीकार आवश्यक इति वाच्यं दाहादि-

पकभाव आवश्यक इति वाच्यं, तत्स्वीकारे प्रकारतावच्छेदक-त्वादेर्निरवच्छिन्नत्वस्य दुर्व्वचत्वापत्तेः, तस्य दुर्व्वचत्वे तु भूतलं न दण्डिमदित्यादिबुद्धिं प्रति, भूतलं दण्डिमदित्यादिनिर्णयानां दण्डत्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रकारताकत्वादिनैव प्रति-बन्धकत्वेन तदनुपपत्तेः। अन्यथा भूतलं दण्डत्वजातिमत्त्ववदित्या-दिनिश्चयानामपि प्रतिबन्धकत्वापत्तेः। विशेष्यत्वानवच्छिन्नत्वस्य निरवच्छिन्नत्वत्वञ्चेत् कारणतावच्छेदकत्वादौ स्वत एव तत्सत्त्वेन अवच्छिन्नावच्छेदकत्वस्य निरवच्छिन्नत्वापत्तेरित्यलं विस्तरेण। यदि च लाघवात् निरूपितत्वसम्बन्धेन कार्य्यताविषयताविशिष्टघट-त्वावच्छिन्नविषयताशालिशाब्दत्वावच्छिन्नं प्रति घटादिपदत्वेन कारणत्वं कल्प्यते, तदा निरूपितत्वसम्बन्धनिष्ठसांसर्गिकावच्छेद-कतानिरूपितावच्छेदकत्वानिरूपिका या तद्विषयत्वनिष्ठा अवच्छे-दकता, तन्निरूपितशाब्दत्वावच्छिन्नजन्यताकजनकत्वं तद्वाचकत्व-मिति। न चात्र यथा कार्य्यत्वविषयतानिरूपितघटादिनिष्ठ-विषयताशालिशाब्दत्वेन कार्य्यत्वं, तथा विनिगमनाविरहेण घट-निष्ठविषयतानिरूपितकार्य्यतानिष्ठविषयताशालिशाब्दत्वेन कार्य्यत्वं निर्वक्तुं शक्यते। एवञ्च कार्य्यत्वविषयतानिष्ठावच्छेदकताया निरू-पकत्वनिष्ठावच्छेदकत्वानिरूपकत्वेन, घटादिपदानां कार्य्यतावाच-कत्वापत्तिर्दुर्व्वारेति वाच्यं। विषयतात्वावच्छिन्नावच्छेदकतानिरू-पितनिरूपितत्वनिष्ठावच्छेदकतानिरूपितकार्य्यताविषयतात्वावच्छि-

कार्य्ये वह्न्यादिनिष्ठशक्तेः स्वरूपसत्या एवोपयोगि-
त्वावच्छेदकताभिन्नत्वे सति निरूपितत्वनिष्ठावच्छेदकत्वानिरूपिका या, यन्निष्ठविषयतात्वावच्छिन्नावच्छेदकता, तन्निरूपितशाब्दत्वावच्छिन्नजन्यताकजनकत्वं तद्वाचकत्वमिति विवक्षणे, घटविषयतानिरूपितकार्य्यतानिष्ठविषयताशालिशाब्दत्वावच्छिन्ना या, जन्यता तन्निरूपितकार्य्यताविषयतानिष्ठावच्छेदकतायां तादृशभेदासत्वात्, तद्दोषविरहात् पशुपदादीनाञ्च लाङ्गूलत्वावच्छिन्नावच्छेदकताकविषयताशालिशाब्दं प्रति हेतुत्वेन न तत्र पशुत्वादिवाचकत्वापत्तिः। नव्यास्तु घटादिपदानां कार्य्यतावाचकतापत्तिरूपविनिगमनासत्वेन घटादिपदानां घटविषयतानिरूपितकार्य्यताविषयतायत्त्वेन कार्य्यताकल्पनायोगान्न तदापत्तिरित्याहुः। परे तु कार्य्यताविषयतान्तःपातिविषयतानिरूपितत्वातिरिक्तनिरूपितत्वानवच्छिन्नत्वमधिकं जन्यतावच्छेदकतायां निवेशनीयं, नातो घटविषयतानिष्ठावच्छेदकताकनिरूपितत्वनिष्ठावच्छेदकताककार्य्यतात्वावच्छिन्न विषयतानिष्ठावच्छेदकताकजन्यतानिरूपितजनकत्वमादाय, घटादिपदानां कार्य्यतावाचकत्वापत्तिः। एवं पदार्थतावच्छेदकविषयतान्तःपातिविषयतानिरूपितत्वातिरिक्तनिरूपितत्वानवच्छिन्नत्वं देयं, तेन घटपश्वादिपदनिरूपितजन्यतानिरूपितघटपश्वादिविषयतानिष्ठावच्छेदकतायां घटत्वलाङ्गूलादिविषयतानिष्ठावच्छेदकतानिरूपितत्वनिष्ठावच्छेदकताकत्वेन तत्तद्वाचकत्वानुपपत्तिरिति वदन्ति। अपितु लिङादिपदस्यैवेति चादिना लुङ्तव्यादिपरिग्रहः। लिङादिपदस्य तु, कार्य्यतानिष्ठविषयताशालिशाब्दं प्रति हेतुतया, तादृशविषयतानिष्ठावच्छेदकतायां तादृशावच्छेदकताभिन्नत्वस्य निरूपकत्वनिष्ठाव-

त्वेऽपि शाब्दबोधानुकूलशक्तेः शाब्दबोधे पदार्थोप-
स्थितौ च ज्ञातोपयोगित्वोपगमे बाधकाभावात्।
अतीतानागतपदज्ञानादपि शाब्दबोधापत्या पदा-
नामहेतुत्वेन तत्र हेतुतावच्छेदकशक्त्यसम्भव इति
न शङ्क्यं तन्मते पदानां नित्यत्वात् अस्तु वा तज्ज्ञान-
शक्त्या तस्य वाचकत्वमिति मीमांसकमतविशेषः

च्छेदकत्वानिरूपकत्वस्य च सत्वान्नाव्याप्तिरिति॥ स्वरूपसत्या
इति, ज्ञानविषयतामापन्नाया इत्यर्थः। ज्ञातोपयोगिनः ज्ञाता-
नुकूलस्य। ज्ञातोपयोगित्व इति, शक्तिप्रकारकज्ञानविषयताव-
त्पदत्वेन स्वाश्रयत्वस्वप्रकारकज्ञानविषयत्वोभयसम्बन्धेन शक्तिम-
त्वसम्बन्धेन वा, शक्तिमत्त्वेन पदानां कारणत्वमिति भावः।
बाधकेति, फलानुरोधेन कल्पितस्य दृष्टान्तवैधर्म्यमपि न क्षतिकर-
मिति भावः। नित्यत्वादिति, तथाच पदानां सर्व्वदैव सत्वेन न
व्यभिचारः। तन्मते पदानां नित्यत्वेऽपि कण्ठताल्वाद्यभिघात-
व्यङ्ग्यत्वेन न सदा प्रत्यक्षमिति। अथ तादृशाभिघातानां व्यञ्ज-
कत्वञ्च न प्रत्यक्षप्रतिबन्धकापसारकत्वं तत्प्रतिबन्धकस्य निर्वक्तुमश-
क्यत्वात् नापि तत्प्रत्यक्षे सहकारिकारणत्वं, शब्दस्योत्पत्तौ तदभि-
घातविरहात् तन्नाशेऽपि शब्दश्रवणादर्शनाच्च इत्यादिदोषेण तन्न
बहवो मेनिरे अतस्तदनङ्गीकर्त्तृमीमांसकमतविशेषमाह अस्तु वेति,
तज्ज्ञानशक्त्येति तत्तदर्थविषयकशाब्दं प्रति तदनुकूलशक्तिप्रकारक-
पदविशेष्यकज्ञानत्वेन हेतुत्वं बोध्यं। प्रकारता चात्र स्वाश्रयविष-
यत्वसम्बन्धावच्छिन्ना, नन्वेतन्मते घटादिवाचकत्वं हि, घटादिशाब्द-

बोधजनकतावच्छेदकीभूतशक्तिप्रकारतानिरूपकज्ञानीयविशेष्यताव-त्पदत्वं । नतु तादृशशक्तिमज्ज्ञानविषयत्वं, येन समूहालम्बनज्ञान-मादायोदासीनेऽतिव्याप्तिः स्यात् । तन्निवेशे च, उदासीने तादृश-ज्ञानीयविशेष्यत्वाभावान्न तदापत्तिः । अथवा यद्विषयकशाब्दानु-कूलशक्तिमत्त्वं यादृशानुपूर्व्व्यवच्छिन्नविशेष्यताकत्वव्यापकं तादृशा-नुपूर्व्वीमत्त्वं यादृशानुपूर्व्यावच्छिन्नविशेष्यताकत्वव्यापकत्वनिवेशात् न समूहालम्बनज्ञानमादाय उदासीनेऽतिव्याप्तिः । ननु कादि-शब्दघटितवकादिशब्दानां ज्ञाने प्रजापत्यादिशाब्दबोधानुकूलश-क्तिसत्त्वेन प्रजापत्यादिवाचकत्वापत्तिर्दुर्व्वारैवेति यदि विभाव्यते, तदा तादृशशक्तौ यादृशानुपूर्व्वीघटकविशिष्टान्तररूपावच्छिन्नविशे-ष्यताकत्वाव्यापकत्वमपि निवेशनीयम् । एवञ्च प्रजापत्यादिबोधानु-कूलशक्तौ वकत्वरूपानुपूर्व्वीघटकविशिष्टान्तरं यत् कत्वादिरूपं तद्रू-पावच्छिन्नविशेष्यकत्वाव्यापकत्वविरहात् यत्र एकमेव रूपं वाचक-तावच्छेदकं तत्र अन्यं विशेषणं न देयं अवच्छेदकभेदे लक्षणस्य भिन्नत्वात् पूर्व्वोक्तस्यानुपगमेनैव वारणीयं वा ॥ यत्तु तादृश-शक्तिमज्ज्ञाने शक्तिविशिष्टशक्तिमदन्यत्वं निवेशनीयं, शक्तिवैशिष्ट्यञ्च स्वसामानाधिकरण्यस्वभिन्नत्वस्वव्यापकत्वैतत्त्रितयसम्बन्धेन सर्व्वत्र स्वं शक्तिरेव, तत्र ज्ञानान्तरनिष्ठशक्तिवैशिष्ट्यस्य शक्तिमात्रे सत्त्वाद-सम्भवः । शक्तिमात्रे स्वात्मकशक्तिवैशिष्ट्यस्य सत्त्वात्तद्दोषश्च स्यादतः प्रथमद्वितीयसम्बन्धौ घटादिपदज्ञानस्य तद्घटकवासुदेवादिवाचका-कारादिपदविषयकतयाऽव्याप्तिः स्यात्, अतस्तृतीयसम्बन्धस्य प्रवेशः । घटपटादिपदविषयकसमूहालम्बनज्ञानस्य शक्तिविशिष्टशक्तिमत्त्वान्न पटादिपदस्य घटादिवाचकत्वापत्तिरिति । तदसत्, घटादिविषयक-शाब्दबोधानुकूलशक्तेर्घटकलसादिपदज्ञानसाधारणतया उक्तत्रितय-

न चासौ विचारसहः यतस्तन्मते लाक्षणिकस्याननु-भावकत्वं दुर्घटं पदार्थोपस्थितिद्वारा शक्यार्थानुभवे शक्तस्येव लक्ष्यार्थबोधे लाक्षणिकस्यापि हेतुताया दुर्व्वारत्वात् तत्रापि शक्तेरावश्यकतया वाचकतापत्तेः पदार्थोपस्थित्याऽन्यथासिद्धत्वे शक्तस्यापि तथात्वापातात् न चानुभावकतावच्छेदकशक्त्यभावात् लाक्षणिकस्य नानुभावकत्वसम्भव इति वाक्यार्थघटकीभूतार्थान्तरवाचकमेव पदं स्वार्थस्येव तदन्वयप्रतियोगिलक्ष्यार्थस्यानुभावकमुपेयते इति वाच्यं एवं सति गङ्गायां घोष इत्यादौ घोषादिपदस्य गङ्गातीरादिरूपार्थानुभावकतावच्छेदक-शक्तिमत्त्वेन

सम्बन्धेन पितामहादिविषयकशाब्दानुकूलकलसादिपदघटककका-रादिपदज्ञाननिष्ठशक्तिवैशिष्ट्येनाव्याप्तेर्दुर्वारत्वात्, ज्ञानभेदेन शक्ति-भेदस्वीकारे तत्तदनुकूलशक्तित्वस्याखण्डस्यावश्यकतया गौरवापत्ते-रति व्याप्तितादवस्थ्याच्च इति॥ तन्मतं दूषयितुमारभते न चासा-विति, विचारसह इति, विचारसिद्ध इत्यर्थः। तत्रापीति, लाक्ष-णिकगङ्गादिपदेऽपीत्यर्थः। पदार्थोपस्थित्येति, शाब्दबोधात् पूर्व्वं पदार्थोपस्थितेरावश्यकत्वेन चरितार्थतया तज्जनकजनकतया शाब्दं प्रति पदज्ञानमन्यथासिद्धमिति भावः। वाक्यार्थेति, वाक्यार्थघट-कीभूतं यदर्थान्तरं तद्वाचकं घोषादिपदमित्यर्थः। स्वार्थस्येवेति, तथाच तीरान्वितघोषविषयकशाब्दं प्रति वृत्तिज्ञानजन्यतीरोप-स्थितिसहकारेण ज्ञायमानघोषपदत्वेन तज्ज्ञानत्वेन वा कारणत्वं

तद्वाचकत्वापत्तेः लाक्षणिकस्याननुभावकत्वे शक्त-पदाघटित-धूमादित्यादि-हेतुवाक्या-दन्वयानुप-पत्तिः तत्र धूमादिपदस्य ज्ञाने विभक्तेश्च ज्ञाप्यत्वे लाक्ष-णिकत्वात् अथ लक्ष्यार्थस्य न शाब्दबोधे प्रवेशः अपि तु स्मृतस्य समभिव्याहृतपदार्थेऽसंसर्गाग्रह-मात्रं तथाच नानुपपत्तिरिति न च लक्ष्यार्थस्य

कल्पनीयमिति भावः। तद्वाचकत्वापत्तेरिति, तीरान्वितघोषवाच-कत्वापत्तेरित्यर्थः। ननु पदान्तरजन्योपस्थित्यप्रयोज्यतदर्थनिष्ठ-विषयताशालिशाब्दजनकतावच्छेदकशक्तिमत्त्वं तद्वाचकत्वं वक्तव्यं। तथाच तीरनिष्ठविषयताया गङ्गादिपदान्तरजन्योपस्थितिप्रयोज्य-तया न तद्वाचकत्वापत्तिरित्यत आह लाक्षणिकस्येति, ज्ञायमान-लिङ्गस्य करणत्वमते पञ्चम्या वा ज्ञानजन्यज्ञानविषयत्वार्थकत्वे धूमपदस्य लक्षणानावश्यकीत्यत आह, आदीति। आदिना गुणि-परशुक्लादित्यादिहेतुवाक्यपरिग्रहः। ज्ञाप्यत्वे लाक्षणिकत्वादिति पञ्चम्या जन्यत्वे अवधित्वे अवधिमत्त्वे वा, शक्ततया गुरुणि तत्र लक्षणैवेति भावः प्रवेश इत्यस्य विषयत्वमर्थः। तथाच लक्ष्यार्थस्य शाब्दबोध एव न जायते कुतो गङ्गादिपदानां तीरादिवाचकत्वा-पत्तिरिति भावः॥ ननु लक्ष्यार्थस्य यदि शाब्दबोधो न भवति, तदा शुक्लं घटमानयेत्यादिवाक्यात् कथं शुक्लघटानयनादौ प्रवृत्ति-रित्यत आह स्मृतस्येति, समभिव्याहृतेति, घटघोषादावित्यर्थः। असंसर्गाग्रहमात्रं बाधनिश्चयाभावमात्रं, मात्रपदेन घटतीरादि-विषयतायां शुक्लादिविषयतानिरूपितत्वव्यवच्छेदः। तथाच,

शाब्दबोधविषयत्वानुपगमे तदुपरागेण शृणोमी-
त्यनुव्यवसायानुपपत्तिरिति वाच्यं दृष्टत्वात् विधे-
योपरागएव तथा प्रत्ययात् लक्ष्यार्थस्य शाब्दबोध-
विषयत्वेऽपि तस्य विधेयतया भानानभ्युपगमात् विधौ
न परः शब्दार्थ इति सिद्धान्तात् इति चेन्न मञ्चाः
क्रोशन्ति इत्यादौ लक्ष्यार्थमञ्चस्थपुरुषादेः शाब्द-
बोधविषयताया आवश्यकत्वात् अन्यथा पूर्व्वाननु-
भूतस्य पुरुषादेः प्रतीत्यनिर्व्वाहात् अननुभूतस्य

तत्तत्पदार्थस्मृतिबाधनिश्चयाभावादिसहकृतस्येतरांशविशिष्टबोधस्यैव स्वातन्त्र्येण प्रवृत्त्यादिहेतुत्वात्, उत्तरकालमानसतादृशविशिष्ट-बोधेनैव वा तत्र तत्र प्रवृत्त्यादिर्जायत इति भावः। ननु उक्तरीत्या भवतु तत्र तत्र प्रवृत्तिः, किन्तु गङ्गायां घोष इत्यादिवाक्यश्रवणा-नन्तरं तीरादिकं शाब्दयामीत्याद्यनुव्यवसायो जायते। स चानुपपन्न इत्याशङ्कते न चेति उत्तरयति दृष्टत्वादिति, दृष्टा-पत्तौ युक्तिमाह, विधेय इत्यादि। उपरागेण प्रकारत्वेन, तथाच विधेयतात्मकप्रकारत्वेनेति यावत्। लक्ष्यार्थस्य विधेयत्वेनाभाने जैमिनिसूत्रं प्रमाणमाह विधौ नेति। अत्र भावसाधितेन विधि-शब्देन विधेयित्वं बोध्यते। सप्तम्यर्थो निरूपकत्वं, परः शक्य-भिन्नः, लक्ष्यार्थ इति यावत्। तथाच लक्ष्यार्थो न विधेयिता-निरूपकः, न विधेयो भवतीति तु यावत्॥ अन्यथेति लक्ष्यार्थस्य शाब्दबोधाविषयत्वे इत्यर्थः। प्रतीत्यनिर्व्वाहादिति, लक्ष्यार्थस्य सामान्यप्रतीतेस्तु भवतापि स्वीकारादिति, ननु तस्य स्मरणात्मक-

स्मरणासम्भवात् समानप्रकारकत्वमात्रेण शाब्दबोधपदार्थोपस्थित्यादेः कार्य्यकारणभावमभ्युपगच्छतां मीमांसकानां शाब्दबोधे योग्यतावशादपूर्व्वपदार्थस्य भानेन लक्ष्यार्थस्य शाब्दानुभवोपगमेऽपूर्व्वस्यापि तस्य प्रतीत्युपपत्तेः तद्विषयकशाब्दत्वावच्छिन्नं प्रति शक्तिविशेषपुरस्कारेण तद्वाचकपदस्य तज्ज्ञानस्य वा न हेतुतासम्भवः विशिष्यतत्तदर्थान्विततत्तदर्थबोधे तत्तत्पद-साकांक्ष-तत्तत्पदज्ञानत्वेनावश्यक्लृप्तकारणतयैवोपपत्तौ ईदृशकार्य्यकारणभावस्य निर्य्युक्तिक-

प्रतीतिरेव कुतो न भवेदित्यत आह। अननुभूतस्येति ननु मञ्चस्थपुरुषस्य पूर्व्वाननुभूतत्वेन स्मरणासम्भवे शाब्दबोधस्वीकारे तत्र तस्य कुतो भानं वृत्त्यनुपस्थितत्वादित्यतस्तस्य शाब्दबोधे भानं तन्मते सम्पादयति समानप्रकारकत्वेति, तथाच तद्धर्म्मप्रकारक-शाब्दं प्रति वृत्तिज्ञानजन्यतद्धर्म्मप्रकारकोपस्थितित्वेन कारणत्वं कल्प्यते, न तत्र धर्म्मिविषयताप्रवेशः इति। योग्यतावशात्, तदन्वयीतरपदार्थसम्बन्धाबाधवशात्। अपूर्व्वस्यापि, पूर्व्वाननुभूतस्यापि। तस्येति, मञ्चस्थपुरुषादेरित्यर्थः। प्रतीत्युपपत्तेरिति, तथाच लक्षणिकगङ्गादिपदस्य वाचकत्वापत्तेर्दुर्व्वारत्वमिति भावः। शाब्द-बोधं प्रति ज्ञायमानपदस्य तज्ज्ञानस्य वा स्वातन्त्र्येण कारणता-खण्डनेन पदानां तज्ज्ञानानां सामर्थ्यरूपां शक्तिं निरासयति। तद्विषयकेति, निर्युक्तिकत्वाच्चेति अयं भावः, निराकाङ्क्षपदजन्य-शाब्दबोधानुत्पत्त्या तद्वारणाय साकाङ्क्षपदसमूहरूपवाक्यज्ञानत्वेन

त्वाच्च । इदन्तु तत्त्वं तीरादौ गङ्गापदजन्यबोधविषयत्वसत्त्वेऽपि तदंशे शुद्धबोधविषयत्वत्वादिनैव तादृशविषयत्वादिप्रकारकत्वमीश्वरेच्छाया उपगम्यते न तु गङ्गापदजन्यबोधविषयत्वत्वादिनापि तत्प्रकारकत्वं मानाभावात् तदनभ्युपगमेऽपि तस्याः सर्व्वविषयकत्वव्याघाताभावात् न च तथा सति बोधांशे गङ्गा-

साक्षात्कारणत्वं तन्मतेऽप्यावश्यकं, एवञ्च शक्तिज्ञानजन्योपस्थितेरेव तत्सहकारिकारणत्वेनोपपत्तौ शक्तिमत्पदज्ञानत्वेन कारणत्वान्तरं न कल्पनीयं प्रयोजनविरहात् इति कुतः तदनुकूला शक्तिः पदे तज्ज्ञाने वेति ॥ एवञ्च सङ्केतोऽपि इदं पदं एतदर्थबोधकोपस्थितिं जनयत्वित्याकारकः अयमर्थः एतच्छब्दजन्योपस्थितेर्बोद्धव्यः इत्याकारको वा बोध्य इति ॥ ईश्वरसङ्केतस्य शक्तित्वपक्षे आपन्नां अपभ्रंशशब्दानां वाचकतां गङ्गादिपदानां लक्ष्यतीरादिवाचकताञ्च परिहरति । इदन्त्विति, तीरादाविति आदिना गोसदृशशब्दादिपरिग्रहः । गङ्गादिपदेति, आदिना गोशब्दगावशब्दादिपरिग्रहः । शुद्धबोधविषयतात्वादिनेति, तथाच तीरं बोधविषयतावद्भवत्वित्याद्याकार एव ईश्वरेच्छायाः स्वीक्रियत इति भावः । तत्प्रकारकत्वं, गङ्गादिपदजन्यबोधविषयत्वप्रकारतानिरूपकत्वं, अस्य च उपगम्यत इत्यनेनान्वयः । मानाभावादिति, तस्यातीन्द्रियत्वेन प्रत्यक्षस्याग्राहकत्वात् तादृशशब्दस्य चासत्वात् प्रत्युत अनिष्टापत्तिभिया तत्कल्पनासम्भवाच्चेति भावः । तेन चेश्वरेच्छाया नित्यैकतया विनिगमनाविरहेण च सर्व्वविषयकत्वमवश्यमङ्गीकार्य्यमिति न्यायसिद्धान्तोऽपि न व्याहन्यत इत्याह तदनभ्युपगम इति ।

पदजन्यत्वानवगाहितया सर्व्वविषयकत्वानुपपत्ति-रिति वाच्यं तीरादिनिष्ठविशेष्यतानिरूपितप्रकार-तावच्छेदकघटकतया तदनवगाहित्वेऽपि बोधांशे स्वातन्त्र्येण तदवगाहित्वोपगमात् तथाच तत्पद-जन्यबोधविषयत्वत्वावच्छिन्नप्रकारतानिरूपितविशे-ष्यतासम्बन्धेन ईश्वरेच्छावत्त्वस्य इच्छानिरूपित-तादृशविशेष्यतावत्त्वस्यैव वा तत्पदशक्यतारूपतया नातिप्रसङ्गः । उक्तरीत्यैव च घटादिपदजन्यबोध-

तथा सतीति शुद्धबोधविषयतात्वादिना ईश्वरेच्छायां तादृश-विषयत्वावगाहनमात्रस्वीकारे सति । स्वातन्त्र्येणेति, विशेषणा-नामवच्छेदकतयेत्यर्थः । तदवगाहित्व इति, गङ्गादिपदजन्यत्व इत्यर्थः । तथाच बोधो गङ्गादिपदजन्यो भवत्वित्यकारोऽपि ईश्वरेच्छायाः स्वीक्रियत इति भावः । तथाच शक्यशक्तस्थलमात्र एव तादृशविशिष्टविषयतात्वेनावगाहनस्वीकारे च । ननु तादृशसम्ब-न्धेन ईश्वरेच्छायाः शक्यतात्वे घटपदशक्यत्वं घटे न तु पटे इत्यादि-व्यवहारानुपपत्तिः वृत्त्य-नियामक-तादृश-सम्बन्धाव-च्छिन्न-प्रति-योगिताकाभावाप्रसिद्धेः सम्बन्धान्तरावच्छिन्नतादृशशक्यत्वाभावस्य तु घटेऽपि सत्त्वेन, घटे न घटपदशक्यत्वमित्यादिव्यवहारापत्ते-रित्यत आह, इच्छानिरूपितेत्यादि । नातिप्रसङ्ग इति, पटादौ घटादिपदशक्यत्वप्रसङ्गो नेत्यर्थः । नन्वेतावता मास्तु गङ्गादिपदानां तीरादि-वाचकत्वापत्तिः किन्तु घटमानयेत्यादि-वाक्यजन्य-बोध-स्यापि घटादिपदजन्यतया कर्म्मत्वाद्यंशे घटादिपदजन्यबोधविषयत्वेन

विषयस्य घटान्वितकर्म्मत्वानयनादेर्घटादिसंसर्गस्य च तादृश-बोधविषयत्व-प्रकारकेश्वरेच्छाविषयत्वेऽपि

ईश्वरेच्छाया अवगाहनात्, घटादिपदानां कर्म्मत्वादिवाचकत्वापत्तिर्दुर्वारैवेत्यत आह भक्तरीत्यैव चेति, कर्म्मत्वाद्यंशे शुद्धविषयतात्वादिना तादृशेच्छीयप्रकारत्वस्योपगमेन नतु घटपदजन्यबोधीयविषयतात्वेनेत्यर्थः॥ ननु तीराद्यंशे बोधविषयतात्वेन बोधाद्यंशे च गङ्गादिपदजन्यतात्वेन ईश्वरेच्छाया नानाविषयत्वकल्पनापेक्षया पदपदार्थयोरतिरिक्तसम्बन्धकल्पने लाघवं, तथाच मीमांसका एव विजयेरन्निति चेन्न तीराद्यंशे गङ्गादिपदजन्यबोधविषयतात्वेन तदिच्छीयविषयत्वकल्पने बोधाद्यंशे विशेष्यत्वप्रकारतावच्छेदकतात्मकविषयताद्वयप्रशक्त्या महागौरवात्। मीमांसकमतापेक्षया ईश्वरस्येच्छायास्तद्विषयत्वादेश्च कल्पनन्तु युक्त्यन्तरेणेव नत्वेतदनुरोधेणेति॥ अथ तथापि विनिगमनाविरहेण तत्तत्पदजन्यबोधविषयतात्वेन ईश्वरेच्छीयविषयतावत् ईश्वरज्ञानीयतादृशविषयतातत्तत्पदशक्यत्वमस्तु, न च भगवद्विद्वेषिमीमांसकानामपि शाब्दबोधोत्पत्तिनिर्व्वाहाय शाब्दबोधकारणतावच्छेदक-कोटावीश्वरीयत्व-मनुपादायाधुनिकसङ्केतज्ञानसाधारणकारणत्वस्यावश्यकत्वेन, तादृशज्ञानस्य शक्यत्वत्वे तदनुपपत्तिरिति वाच्यं आधुनिकतादृशज्ञानस्यापि शाब्दबोधोपयोगित्वस्वीकारे क्षतिविरहात्, आधुनिकसङ्केतस्य परिभाषात्ववत् आधुनिकतादृशज्ञानस्य परिभाषात्वाङ्गीकाराच्चेति चेन्न, आधुनिकतादृशज्ञानस्य परिभाषात्वस्वीकारे गवादिवाचकपदानां नदीरहादिपदानाञ्च सर्व्वपुरुषान्तर्भावेण पारिभाषिकत्वापत्तेः। भ्रमतादृशज्ञान-

घटादिपदा वाच्यत्वमुपपादनीयम्। अन्विताभिधानवादिनस्तु पदार्थसंसर्गस्यापि वाच्यतां स्वीकुर्व्वन्ति तन्मते इतरान्वितघटो घटपदशक्य एतादृशमेव

मादाय अन्यार्थेऽपि पारिभाषिकत्वापत्तेश्चेति॥ [नन्वेवमपि वेदस्थाखण्डिकायुःपदादेरायुर्जनकादिवाचकत्वापत्तिर्दुर्वारा आयुःपदादेरायुर्जनकबोधकत्वेन भगवतो बुबोधयिषयावगाहनादिति चेन्न, आयुःपदमिदं आयुर्जनकं बोधयत्वित्याकारकभगवदिच्छया आयुःपदादेरिदन्त्वेनावगाहनेन शक्यताघटकपदनिष्ठविषयताया इदन्त्वानवच्छिन्नत्वेन विशेषणात् वाचकगवादिपदशक्यताघटकविषयता तु गकारोत्तरौकारत्वादिरूपानुपूर्व्व्यवच्छिन्नैवातो नासम्भवः। अथवा भगवद्बुबोधयिषया आयुर्जनकत्वत्वावच्छिन्नविषयताकत्वेन बोधस्यावगाहनस्यावगमात् नतु बोधजनकविषयकत्वेनेत्यास्तां विस्तरः॥ इत्युपस्थापिता एव पदार्थाः शाब्दबोधे भासन्ते इति नियमेन सम्बन्धांशेऽपि वाच्यतां स्वीकुर्व्वतां भट्टानां मतं दूषयितुमुपन्यस्यति अन्विताभिधानेत्यादि, एतन्मते इतरान्वितघटादिविषयकशाब्दबोधानुकूलशक्तिमत्तया घटादिपदानां इतरान्वितघटादिवाचकत्वं इतरान्वितघटादीनामपि घटादिपदनिष्ठशक्तिनिरूपितजन्यतावच्छेदकविषयतावत्त्वेन तद्वाच्यत्वं कार्य्यकारणभावश्च इतरत्वोपलक्षितनिष्ठविषयतानिरूपितान्वयनिष्ठविषयतानिरूपितघटत्वावच्छिन्नविषयताकशाब्दं प्रति अनुकूलशक्तिमत्त्वेन चेति। ननु शक्तिज्ञानं यदि अन्वयांशं नावगाहते तदा तस्य कुत उपस्थितिः शाब्दबोधे प्रवेशश्चेत्यतः अन्वयांशं शक्तिज्ञानेऽन्तर्भावयन् ज्ञानाकारं दर्शयति इतरान्वितेति इतरान्वय-

शक्तिज्ञानं शाब्दबोधप्रयोजकं घटो घटपदवाच्य इत्याकारकस्य अन्वयांशानन्तर्भावेन शक्तिग्रहस्य तथात्वे वृत्तिग्रहाविषयतया पदार्थसंसर्गस्य शाब्दबोधविषयतानुपपत्तेः। न चेतरान्वितघटस्य वाक्यप्रतिपाद्यतया शाब्दबोधात् प्राक् शक्तिग्रह एव दुर्घटः अनुपस्थितत्वात् इति वाच्यं विशेषतः पदार्थान्तरघटितस्य तदन्वितघटादिरूपवाक्यार्थस्य प्रागनुपस्थितावपि इतरपदार्थत्वादिना सामान्यधर्मप्रकारेण तद्घटितस्य तदन्वितघटादेः प्रागुपस्थितिसम्भवेन तत्र ग्रहस्य सुघटत्वात् वस्तुतस्तु पदार्थान्तरमनन्त-

विशिष्टेत्यर्थः तथाच वैशिष्ट्यमर्य्यादया तादृशज्ञानस्यापरान्वयांशेऽपि पदनिष्ठशक्तिनिरूपित-जन्यतावच्छेदक-शाब्दबोधीयसांसर्गिकविषयतारूपशक्यत्वावगाहनमिति। ननु इतरपदेन अत्र घट इत्यादिवाक्यार्थघटकैतद्देशवृत्तित्वादिकं वाच्यं तथाच तादृशेतरान्वितघटादेर्वाक्यादेव प्रतिपत्तिरिन्द्रियाद्यसन्निकृष्टत्वादेवञ्च कुत इतरान्वितघटादेः शाब्दबोधात् पूर्व्वं ग्रहः अग्रहे च कुतस्तादृशशक्तिग्रहः धर्म्मिग्रहाभावादित्याशङ्कते न चेत्यादि दुर्घट इति असम्भवीत्यर्थः एतद्देशवृत्तित्वान्वितघटादेः प्रागनुभवासम्भवेऽपि किञ्चित्पदार्थान्वितघटादेर्व्यवहारादितः प्रागनुभूतत्वेन इतरत्वादिसामान्यधर्म्मेण इतरान्वितघटादेर्मनसैव सुग्रहसम्भवादिति समाधत्ते विशेषत इत्यादि इतरपदार्थस्य पदान्तरलभ्यतया तदन्तर्भावेण शक्तिकल्पने प्रयोजनविरहो गौरवञ्चेत्यतस्तदंशं परित्यजन्नाह वस्तुत-

भाव्यकेवलान्वयांशान्तर्भावेनैव शक्तिग्रहस्यैव शाब्द-धीप्रयोजकतोपेयते पदार्थान्तरस्य पदान्तरलभ्यतया तदंशान्तर्भावेन शक्तिग्रहस्यानुपयुक्तत्वात् न चान्वयस्य पदवाच्यत्वे तदंशे शक्तिग्रहस्य शाब्दबोधोपयोगित्वे च मानाभाव इति वाच्यं तद्विषयकशाब्द-

स्त्वेति केवलान्वयांशेति तथाच अन्वितघटो घटपदशक्य इत्याद्याकारकशक्तिज्ञानमेव घटादिपदं अन्वितघटादिबोधशक्तमित्याद्याकारकं वा ज्ञानं हेतुरिति । ननु तादृशज्ञाने अन्वयस्य सम्बन्धस्य केन रूपेण भानं सम्बन्धत्वेन संयोगत्वसमवायत्वादिविशेषधर्म्मेण वा तत्र नाद्यः सम्बन्धत्वस्यानुगतस्याभावात् संयोगादेः शक्तिज्ञाने संयोगाद्यन्यतमत्वरूपसम्बन्धत्वेन भानोपगमे वा तेनैव प्रकारेण तज्जन्योपस्थित्या तेनैव रूपेण शाब्दबोधे भानापत्तेः संयोगत्वादिना भानानुपपत्तेश्च नाप्यन्त्यः घटवद्भूतलं पचति चैत्र इत्यादौ सर्व्वत्र संयोगत्वानुकूलत्वत्वादिधर्म्मेण सम्बन्धानां शाब्दबोधात् प्रागुपस्थित्यसम्भवतादवस्थ्यात् इति चेन्न घटवद्गृहे गां नयेत्यादिवृद्धव्यवहारतः संयुक्तघटादौ अनुकूलकृत्यादौ च शक्तिग्रहोदयेन पश्चादपि तथैवोपस्थितिसम्भवात् नन्वेवमपि संयोगत्वादिभेदेन घटादिपदानामपि शक्त्यानन्त्यप्रसङ्ग इति चेन्नैवं बुद्धिस्थतावच्छेदकत्वोपलक्षणवत् संसर्गतावच्छेदकत्वोपलक्षणेन तेषामनुगमात् ॥ अन्वयांशे शक्तेः तादृशशक्तिग्रहे शाब्दबोधकारणत्वस्य चावगमे युक्तिं प्रदर्शयितुं शङ्कते न चेति तद्विषयकेति शरेण संयुक्तं पटसमवेतो रक्त इत्यादितः इच्छा संयोगादेरनुपस्थितिकाले शाब्दबोधवारणाय संयोगादिविषयकशाब्दं प्रति इच्छि-

बोधं प्रति वृत्तिज्ञानजन्यतदुपस्थितिहेतुतायाः सामान्यत एव क्लृप्ततया वृत्तिज्ञानादन्वयानुपस्थितौ तस्य शाब्दबोधविषयत्वासम्भवात् अन्वयांशे शक्तिग्रहस्यापि शाब्दबोधेऽवश्यापेक्षणीयत्वात् संसर्गताभिन्न-विषयतायास्तादृशोपस्थिति-जन्यतावच्छेदकत्वे गौरवात्। अत्र वदन्ति सामान्यतस्तविषयकशाब्दबोधे वृत्तिज्ञानजन्यतदुपस्थितित्वेन न हेतुता

ज्ञानजन्यसंयोगादिविषयकोपस्थितित्वेनापि हेतुत्वं वाच्यमिति भावः॥ ननु भट्टमते सामान्यलक्षणाविरहेण वृत्तिज्ञानजन्योपस्थितौ पूर्व्वानुभूता व्यक्तिरेव भासते शाब्दबोधे तु अपूर्व्वव्यक्तिरेव अतो नोक्तकार्य्यकारणभावकल्पनसम्भव इति चेन्न सामान्यतो विषयतासम्बन्धेन तत्तत्पुरुषीयशाब्दबोधं प्रति विषयत्वस्वप्रकाराश्रयत्वान्यतरसम्बन्धेन तत्तत्पुरुषीयवृत्तिज्ञानजन्योपस्थितित्वेन कार्य्यत्वं कारणत्वञ्च कल्पनीयमित्यत्रैव उक्तग्रन्थतात्पर्य्यात् गोत्वघटत्वादौ व्यभिचारवारकं प्रथमदलं सम्बन्धे स्वीयप्रकाराश्रयत्वनिवेशादपूर्व्वव्यक्तिसंग्रहः। न चैवमपि विषयतासम्बन्धेन कार्य्यकारणभावकल्पने पुरुषभेदेन तस्यानन्त्यापत्तिरतः समवायप्रत्यासत्त्या तद्धर्म्मप्रकारकशाब्दबोधं प्रति तद्धर्म्मप्रकारकोपस्थितित्वेन तत् कल्पनमुचितमिति वाच्यं एतन्मतेऽपि धर्म्मधर्म्मिभेदेन कार्य्यकारणभावभेदात् महागौरवापत्तेः एतेन अनन्तधर्म्मव्यक्तिभेदेन अनन्तकार्य्यकारणभावापत्त्या गोत्वादिप्रकारकशाब्दबोधे गोत्वादिप्रकारकोपस्थितेर्हेतुत्वापेक्षया अतीव गौरवभिया यथाश्रुतन्तु न सम्य-

स्वतन्त्र-वृत्तिज्ञानादिशृङ्खलभावेनैकपदोपस्थितयोः पदार्थ-तत्वाव-च्छेदकयो-र्विशेष्य-विशेषणभाव-क्रमेण शाब्दबोधापत्तेः किन्तु तद्धर्म्मप्रकारेण तद्विषयक-

गित्यपि निरस्तम् ॥ स्वतन्त्रेति पशुपदं लोम्नि शक्तं लाङ्गूलवति च शक्तमिति धेनुपदं धानकर्म्मत्वे शक्तं गवि च शक्तमित्यादिपृथक्शक्तिज्ञानादित्यर्थः विशृङ्खलभावेन विशेष्यविशेषणभावानापन्नत्वेन विशेष्येति पदार्थतावच्छेदकप्रकारताकपदार्थनिष्ठविशेष्यताकत्वेनेत्यर्थः वाक्यार्थमर्य्यादयेति भावः। तथाच तादृशोपस्थितिकाले विशिष्टबोधस्य कैरप्यस्वीकारेणेष्टापत्तेरयोग इति। ननु पार्थ एवेत्यादौ एव शब्दात् खण्डश उपस्थितानामितरसम्बन्धाभावादीनां कथं विशिष्टबोध इति चेन्न अगत्या तत्र तत्र तादृशबोधस्येष्टत्वात् एवादिपदानां वा पार्थान्ययोगव्यवच्छेदार्थकत्वमते एतस्योक्तत्वादिति। तद्विषयकेति एतच्च आपातत उक्तं नतु कार्य्यकारणभावे प्रविष्टमिति ध्येयं ननु दण्डमानयेत्यादितो आधेयत्वादौ निरूपितत्वसम्बन्धेन दण्डादिप्रकारकबोधो जायते स च न सम्भवति तत्र दण्डादिप्रकारकोपस्थितिविरहात् न च तादृशकार्य्यकारणभावस्य विशिष्यवक्तव्यतया तत्राकल्पनेन न तदनुपपत्तिरिति वाच्यं यो दण्डी पुरुषः तमानयेत्यादौ दण्डादेः पृथगुपस्थितिकाले तच्छब्देन दण्डप्रकारेण पुरुषस्य शाब्दबोधवारणाय दण्डप्रकारकशाब्दं प्रति दण्डप्रकारकोपस्थितित्वेन कारणत्वस्यावश्यकतया दण्डी पुरुष इत्यादितः शाब्दबोधानुपपत्तेर्दुर्व्वारत्वादिति चेन्न एतद्दोषेणैव वस्तुतस्त्वित्यादिकल्पस्य वक्ष्यमाणत्वात् अथवा तत्र पृथगुपस्थितयोरपि दण्डपुरुषयोः

शाब्दबोधे वृत्तिज्ञानजन्यतद्धर्म्मावच्छिन्नविषयको-पस्थितित्वेनैव हेतुता वाच्या एवञ्च तत्संसर्गक-बोधस्य किञ्चिद्धर्म्मप्रकारेण तद्विषयकत्वाभावात् वृत्तिज्ञानात्तदनुपस्थितावपि तत्संसर्गकशाब्दबोधः सम्भवत्येव ।

शाब्दस्येष्टत्वात्तदकल्पनादिति । तत् संसर्गकबोधस्येति तथाच संसर्गे संसर्गतावच्छेदके च प्रकारत्वाख्यविषयत्वं न स्वीक्रियते अपिच विशेषणतात्मकविषयतेति भावः । केचित्तु तन्मते संसर्गस्य स्वरूपतो भानेन न तादृशकार्य्यकारणभावाक्रान्तता इत्याहुः । तच्चिन्त्यं संयोगादेः स्वरूपतो भानस्यानुभवविरुद्धत्वात् उक्तरीत्या परीहारसम्भवात् भूतलं द्रव्यवदित्यादिभूतलावच्छेद्यत्वावगाहि-प्रतीतेर्भ्रमत्वापाताच्च यावन्तः संयोगाः सन्ति तेषां प्रत्येकं संयोग-व्यक्त्या निखिलभूतले सर्व्वस्यैव द्रव्यस्यैव वाधादिति ॥ ननु उक्त-दोषवारणार्थं विशेषरूपेण तादृशकार्य्यकारणभाव आवश्यकश्चेदस्तु तथापि सामान्यतो विषयतासम्बन्धेन शाब्दबोधं प्रति विषयता-सम्बन्धेन वृत्तिज्ञानजन्योपस्थितित्वेन हेतुत्वस्यान्वयव्यतिरेक-सिद्धस्य सत्वेन संसर्गांशेऽपि वृत्तिरावश्यकी एवकारादाविव तत्र तत्र पृथगुपस्थितयोरपि तयोर्विशेष्यविशेषणभावेन शाब्दबोधे भानन्तु आकाङ्क्षाज्ञाननियम्यं विशेषकार्य्यकारणभावेनैव वा वार-णीयमिति वा यदि कथ्यते तदाप्याह वस्तुतस्त्विति । एतत्पाठस्य पूर्व्वं क्रोड़पत्रम् ।

## अथ क्रोड़पत्रम् ।

एवं तद्विषयकशाब्दबोधे तच्छक्तपदज्ञानजन्य-तदुपस्थिति-तल्लाक्षणिक-पदज्ञानजन्य-तदुपस्थित्योर्द्वयोरेव हेतुतया तयोः परस्परजन्यबोधे व्यभिचारस्य वारणाय तत्तत्कारणानन्तर्य्यस्य तत्तत्कारण-जन्यताव-च्छेदके प्रवेशध्रौव्येण पदार्थद्वय-संसर्गावगाहिबोधे वृत्तिज्ञानजन्यतदुपस्थितेर्व्यभिचाराप्रसक्त्याऽन्वयस्य पदवाच्यत्वमप्रामाणिकम् । न च शक्तिलक्षणयोर्वृत्तित्वेनानुगमसम्भवात्तदुभय-विषयकज्ञानजन्योपस्थित्योरेकरूपेण एव हेतुतया नोक्तव्यभिचारप्रसक्तिरिति वाच्यं उभयसाधारण-वृत्तित्वस्यानुगतस्य दुर्व्वचत्वात् । यत्तु शक्तिविषयक-

अथ क्रोड़पत्रस्य टीका । व्यभिचाराप्रसक्त्येति शरेण संयुनक्तीत्यादितः संयोगादिविषयकशाब्दस्य संयोगांशे शक्तिग्रहाधीनोपस्थित्यव्यवहितोत्तरत्वरूपकार्य्यतावच्छेदकाक्रान्तस्य पूर्व्वं संयोगांशे शक्तिज्ञानसत्वात् दण्डवानित्यादितः संयोगादिविषयकशाब्दे शक्तिज्ञानस्य लक्षणाग्रहस्य वा अव्यवहितोत्तरत्वविरहेण तत् पूर्व्वं तादृशज्ञानजन्योपस्थित्यसत्वेऽपि च न व्यभिचारसम्भव इति भावः॥ यत्त्विति अनुगमसम्भव इति तथाच तत्तदर्थविषयकशाब्दं प्रति शक्तिविषयकज्ञानजन्यतदर्थविषयकोपस्थितित्वेन उभयसाधारणैककारणत्वं कल्प्यमिति भावः । तद्बोध-

ज्ञानजन्यतदुपस्थितित्वेनैव शक्तिलक्षणाधीनपदार्थोपस्थित्योरनुगमसम्भवः । घटशक्तं पदमित्येतादृशशक्तिज्ञानजन्योपस्थितेरिव घटसम्बन्धिशक्तं पदमित्यादिलक्षणाज्ञानजन्योपस्थितेरपि घटादिसम्बन्धि-पटादि-निरूपितशक्तिविषयकज्ञानजन्यत्वादिति नोक्तव्यभिचारप्रसक्तिः । न च घटशक्तं पदमित्यादिज्ञानजन्यघटाद्युपस्थितौ यत्नेोद्बोधकान्तरात्पटादिभानं तादृशपटादिविषयकोपस्थितेरपि पटादिशाब्दबोधजनकत्वापत्तिरिति तद्विषयकशाब्दबोधे तदर्थविशेषित-शक्तिविशिष्ट-पदविषयकज्ञानजन्यतदुपस्थितित्वेन हेतुता वाच्या तथाच तेन रूपेण घटसम्बन्धिशक्तं घटपदमित्यादिज्ञानजन्यघटाद्युपस्थितेः संग्रह इत्युक्तव्यभिचार एव इति वाच्यं शक्तिविषयत्वावच्छिन्नकारणताप्रतियोगिकतद्विषय-त्वावच्छिन्न-कार्य्यता-शालित्वेनोप-स्थितेस्तच्छाब्दबोधे हेतुतया दर्शितोद्बोधकान्तरप्रयोज्यपटादिविषयताकोपस्थितेर्निरुक्त-कार्य्यताशालित्वविरहेण उक्तातिप्रसङ्गानवकाशात् । तदर्थविशेषित-

कान्तरादिति साहचर्य्यादिरूपसम्बन्धिज्ञानादित्यर्थः तदर्थविशेषितेति निरूपितत्वसम्बन्धेन विषयत्वसम्बन्धेन वा तदर्थविशिष्टशक्तिमत्पदविशिष्टज्ञानजन्येत्यर्थः तादृशपदवैशिष्ट्यञ्च विषयित्वसम्ब-

शक्तिविषयतापर्य्यन्तस्य उपस्थितिनिष्ठकारणता-वच्छेदकेऽनिवेशा-दनुगम-सम्भवादुक्त-लक्षणा-ज्ञान-हेतुतायामपि शक्तिविषयताया अवच्छेदकत्वेन प्रवेशादिति तन्न समीचीनं उक्तानुगतरूपेण पदार्थोपस्थितेर्हेतुत्वे घटकालीना या शक्तिस्तद्वत् पट-पदमित्यादिज्ञानजन्यघटाद्युपस्थितितोऽपि घटादि-शाब्दबोधप्रसङ्गात्। तत्कालीनशक्तिरूपपरम्परा-सम्बन्धविषयतान्तःपातिन्याः शक्तिविषयताया अपि तादृशसम्बन्धप्रयोज्यघटादिविषयताप्रयोजकत्वात्। तादृशशक्तिविषयकधियश्च घटादिनिरूपितत्वेन तत्-सम्बन्धिनिरूपितत्वोपरागेण च पदे शक्त्यनवगाहि-तया शाब्दबोधप्रयोजकतदुक्तपदज्ञानतल्लाक्षणिक-पदज्ञानानात्मकतया तज्जन्योपस्थितेः शाब्दबोध-जनकत्वोपगमासम्भवात्। न च यत्किञ्चिन्निरू-पितत्वोपरक्तशक्तिविषयता-प्रयोज्य-तत्तदर्थविषयता-कोपस्थितित्वेनैव शाब्दबोधजनकत्वोपगमान्नायमति-

न्धेन एतच्च अन्यथाख्यात्यनङ्गीकारमतेन तेनान्यमतसिद्धशक्तिभ्रम-जन्योपस्थितेरसंग्रहेऽपि न क्षतिः। तादृशशक्तीति, घटकालीनशक्ति-मत्पटपदादिविषयकधिय इत्यर्थः। घटादिनिरूपितत्वेनेत्यस्य शक्त्य-नवगाहितयेत्यत्र योजना तत्सम्बन्धीति घटादिसम्बन्धित्वोपलक्षितो यस्तन्निरूपितत्वेनेत्यर्थः यत् किञ्चिन्निरूपितत्वोपरक्तेति यत् किञ्चि-

प्रसङ्गः उक्तज्ञानीयशक्तिविषयतायाः किञ्चिन्निरूपितत्वविषयतानिरूपितत्वविरहादिति वाच्यं एवमपि घटकालीना या पटनिरूपिता शक्तिस्तद्वत्पदमिति ज्ञानप्रयोज्यघटाद्युपस्थितेरव्यावृत्तेः। अथ किञ्चिन्निरूपितत्वविषयतानिरूपितत्वेन शक्तिविषयता यादृशकारणतावच्छेदिका तादृशकारणताप्रतियोगिकप्रकृतार्थविषयत्वावच्छिन्न-कार्य्यता-शालित्वेन पदार्थोपस्थितेर्हेतुत्वोपगमान्नायमतिप्रसङ्गः।

न्निरूपितत्वनिष्ठविषयतानिरूपितशक्तिनिष्ठविषयतानिष्ठावच्छेदकताकजनकताकजन्यतावच्छेदकीभूततदर्थनिष्ठविषयताशाल्युपस्थितित्वेन तदर्थविषयकशाब्दनिरूपितजनकत्वाङ्गीकारादित्यर्थः॥ निरूपितत्वविरहादितीति घटकालीनशक्तिमत्पटपदमित्यादिज्ञानीयविषयतायां कालीनत्वविषयतानिरूपितत्वस्यैव सत्वादिति भावः। ननु किञ्चिन्निरूपितत्वविषयतानिष्ठावच्छेदकताकशक्तिविषयतानिष्ठावच्छेदकताकज्ञानत्वावच्छिन्नजनकताकायदर्थनिष्ठविषयत्वावच्छिन्नोपस्थितिनिष्ठजन्यतातदर्थविषयकशाब्दं प्रति तादृशजन्यताशाल्युपस्थितित्वेन कारणत्वस्य कल्पनात् नोक्तदोषः घटकालीना या पटनिरूपिता शक्तिस्तद्वत्पटपदमिति ज्ञाने पदे घटस्य स्वकालीनशक्तिरूपसम्बन्धावगाहित्वेन तज्ज्ञानजन्योपस्थितिनिरूपितजनकतावच्छेदककोटौ तत्सम्बन्धघटकस्य उदासीनस्य पटनिरूपितत्वस्य विषयताया अप्रवेशात् इत्याशङ्कते अथ किञ्चिदिति ननु किञ्चिन्निरूपितत्वनिष्ठविशेषणताभिन्नविशेषणत्वानिरूपित-

शक्त्यंशे उदासीनस्य पटीयत्वादेर्भानेऽपि घटकालीनशक्तिरूपघटीय-परम्परासम्बन्ध-विषयकपदज्ञानस्य घटादिस्मारकतया तत्स्मृतिजनकतायां पटादिनिरूपितत्वविषयतानिरूपितत्वस्य शक्तिविषयत्वेऽनिवेशादिति चेदेवं सति यत्र ज्ञाने घटादेः शक्तत्वसम्बन्धेन पदांशे प्रकारतातज्जन्योपस्थितितोऽपि घटादेः शाब्दबोधोत्पत्त्या तदनुपपत्तिर्दुर्व्वारैव तत्र पदांशेऽर्थसंसर्गतया भासमानशक्तावर्थस्य निरूपितत्वरूपसम्बन्धान्तराभानात्। वस्तुतो घटत्वा-

शक्तिनिष्ठसंसर्गतानिष्ठावच्छेदकतानिरूपितपदनिष्ठविषयतानिष्ठावच्छेदकताकायाज्ञाननिष्ठजनकतातन्निरूपितायातदर्थविषयकत्वावच्छिन्नजन्यतातच्छाल्युपस्थितित्वेन तदर्थविषयकशाब्दं प्रति हेतुत्वेन शक्तिसम्बन्धेन स्वसम्बन्धिनिरूपितशक्तिसम्बन्धेन च घटवद्घटपदमित्यादिज्ञानजन्यघटाद्युपस्थितेः संग्रहोऽसंग्रहस्य स्वकालीनशक्तिसम्बन्धेन घटवत्पटपदमित्यादि ज्ञानस्य नाङ्गीक्रियते च शक्त्यादिप्रकारकज्ञानजन्योपस्थितेः कारणत्वमिति अथवा किञ्चिद्धर्म्मावच्छिन्नविषयतानिष्ठावच्छेदकता भिन्ना सती तादृशावच्छेदकताकसम्बन्धिविषयतानिष्ठावच्छेदकता भिन्ना या अवच्छेदकता तदनिरूपितनिरूपितत्व विषयता-निष्ठावच्छेदकताकशक्तिविषयतानिष्ठावच्छेदकताकजनकताकजन्यताशालितदर्थनिष्ठविषयताशाल्युपस्थितेः कारणतया न तद्दोष इति यदि विभाव्यते तदाप्याह वस्तुत इति द्रव्यपदं घटत्वविशिष्टे शक्तमित्यादिभ्रमेण

द्युपलक्षितवाचकात् द्रव्यादिपदादुक्तया भ्रान्तस्य घटत्वादिप्रकारकशाब्दबोधवारणाय तद्धर्म्मप्रकारकशाब्दबोधे शक्तौ तद्धर्म्मविशिष्टनिरूपितत्वावगाहित्वेन शक्तिज्ञानस्योपयोगिता वाच्या । तथाच तत्सम्बन्धिशक्तत्वावगाहिनो लक्षणाग्रहस्य तेन रूपेणासंग्रहादननुगमेन व्यभिचारप्रशक्त्या उक्तकार्य्यकारणभावे कारणान्तर्य्यस्य प्रवेश आवश्यकः । एवं शक्तिज्ञानमुभयविधं विनिगमकाभावात् शाब्दबोधप्रयोजकं पदेऽर्थवाचकत्वावगाहि अर्थे पदवाक्यत्वावगाहि च तयोरपि नानुगमसम्भवः । वाच्यत्ववाचकत्वयोः शक्तिप्रतियोगित्वशक्त्याश्रय-

द्रव्यादिपदादपि भ्रान्तस्य घटादेरन्वयबोधो भवत्येव इत्यत आह अभ्रान्तस्येति तादृशभ्रमरहितस्येत्यर्थः । तथाच तदानीं तादृशबोधस्य इष्टापत्तेरयोग इति भावः । तद्धर्म्मविशिष्टेति तद्धर्म्मप्रकारकशाब्दबोधं प्रति निरूपितत्वसम्बन्धेन तद्धर्म्मवैशिष्ट्यापन्नशक्तिनिष्ठविषयतानिरूपितपदनिष्ठविषयताशालिनिश्चयत्वेन कारणत्वमित्यर्थः । उपलक्षितावगाहिज्ञानस्य यथा न कारणत्वं अग्रे दर्शयिष्यति तत्सम्बन्धीति तथाच लक्षणाग्रहे तद्धर्म्मावच्छिन्नविषयतानिरूपितसम्बन्धिनिष्ठविषयताकशक्तिनिष्ठविषयतासत्त्वेन न तस्य तादृशकारणतावच्छेदकाक्रान्ततेति भावः ॥ विविधशक्तिज्ञानस्य कारणत्वानुरोधेनापि कार्य्यतावच्छेदककोटावानन्त्यप्रवेशस्यावश्यकत्वं दर्शयति एवमिति सम्बन्धत्वादिनेति सम्बन्धत्वं च विशिष्टधीज-

त्वरूपमिथोविलक्षणसम्बन्धरूपतयानुगताननतिरिक्त-रूपाभावात् । सम्बन्धत्वादिना अनुगमे तदीय-कालिकादिसम्बन्धज्ञानादर्थधर्म्मिकपदवाचकतायाः पदधर्म्मिकार्थवाच्यतायाश्च ज्ञानात् शाब्दबोधापत्तेः । तज्जन्योपस्थित्योरपि परस्परजन्यबोधे व्यभिचारः । एवं लक्षणाज्ञानमपि पदेऽर्थसम्बन्धिवाचकतावगा-हितयाऽर्थे पदवाच्यसम्बन्धितावगाहितया च द्विविधं शाब्दबोधप्रयोजकं तदधीनोपस्थित्योरपि अनतिप्र-शक्तरूपेणानुगमासम्भवात् । परस्परजन्यबोधे व्य-भिचार इति कार्य्यतावच्छेदकगर्भे तत्कारणान-न्तर्य्यप्रवेशो ध्रुव इत्येव धेयम् । इत्यञ्च वृत्त्यनुप-स्थापितस्यापि संसर्गस्य शाब्दबोधोपगमे व्यभिचारा-प्रशक्त्या न किञ्चिद्बाधकमिति किन्त्वत्र वृत्तिकल्पने-नेति । वस्तुतस्तु शक्त्या लक्षणया चोपस्थितस्य

नकत्वं विशेष्यत्वप्रकारत्वान्यविशिष्टधीविषयत्वं संयोगसमवायाद्यन्य-तमत्वं वा । अनुगम इति तथाच तदर्थविषयकशाब्दं प्रति तदर्थ-निष्ठविषयतानिरूपितसम्बन्धत्वसमानाधिकरणधर्म्मावच्छिन्नसंसर्ग-ताकपदनिष्ठविषयताशालिज्ञानजन्योपस्थितित्वेन कारणत्वमिति ध्येयम् । आदिना एकज्ञानीयविषयत्वादिपरिग्रहः । एवं तद्विषयके-त्यादि यस्त्वित्यन्तककोड़पत्रीयपाठस्तु न सम्यक् अग्रेण सह पौन-रुक्त्यदोषग्रस्तत्वादिति ॥ इति कोड़पत्रटीका ॥ वस्तुतस्त्विति शक्ति-

तत्तदर्थस्य शाब्दबोधे भानादुभयविधतत्तदर्थोपस्थितेरेव तत्तद्विषयकशाब्दबोधहेतुता वाच्या तादृशोपस्थित्योश्चानुगता-नतिप्रशक्त-कारणतावच्छेदकस्यागुरोर्दुर्व्वचतया व्यभिचारवारणाय शक्त्यादिज्ञान-जन्यतदुपस्थितिजन्यतावच्छेदककोटौ तत्तत्कारणाव्यवहितोत्तरत्वनिवेश आवश्यकः इत्यञ्च वृत्त्यनुपस्थितसंसर्गस्य शाब्दबोधोपगमे व्यभिचाराप्रशक्त्या न किञ्चिद्बाधकं इति किं तत्र वृत्तिकल्पनेन। अथ तत्र वृत्त्यनुपस्थितस्यापि पदार्थद्वयसंसर्गस्य शाब्दबोधविषयत्वोपगमे सम्बन्धभाने नियामकाभावात्

लक्षणान्यतरत्वस्य अनुगतानतिप्रसक्तस्य सुवचत्वादाह अगुरोरिति तथाच एकभेदविशिष्टापरभेदवद्भेदात्मकस्यान्यतरत्वस्य विशेष्यविशेषणभाववैपरीत्येन द्विविधतया तद्रूपेण कार्य्यकारणभावकल्पने गुरुधर्म्मावच्छिन्नद्विविधकारणत्वापत्तिरिति ननु अन्यतरत्वस्याखण्डोपाधित्वेन न गौरवं न वा विशेष्यविशेषणवैपरीत्यान कार्य्यकारणभावद्वयापत्तिरिति चेन्न तस्याखण्डोपाधित्वे मानाभावात् अन्यथा अनुमित्यादिनिष्ठपरामर्शादिजन्यतावच्छेदककोटावव्यवहितोत्तरत्वादेः प्रवेशस्य मणिकारादिसम्मतस्यानावश्यकत्वापत्तेः॥ अथ तथापि शाब्दबोधोपयिकोपस्थितिजनकसम्बन्धज्ञानजन्यत्वमनुगतमिति चेन्नैवं शाब्दबोधजनकत्वघटितधर्म्मेण तज्जनकत्वनिर्व्वचने आत्माश्रयापत्तेः शाब्दबोधं प्रति शक्तिज्ञानादेः स्वयं कारणत्वखण्डनाच्चेति भावः। इत्यञ्चेति अनुगतरूपेण

सर्व्वत्र अबाधितयावत्संसर्गभानापत्तिरिति चेन्न कयोश्चित् पदयोः केनचित् सम्बन्धेन स्वार्थान्वय-बोधे साकाङ्क्षतया आकाङ्क्षाज्ञानस्यैव पदार्थ-संसर्गभाननियामकत्वाद्वयोः पदयोर्नानासम्बन्धेन

तादृशकार्य्यकारणभावासम्भवे चेत्यर्थः । यावत्संसर्गेति द्रव्यं घट इत्यादौ द्रव्यघटाद्यारभेदस्यैव संयोगसमवायादीनामपि भानं स्यादिति । इदमुपलक्षणं तेन चैत्रः पचतीत्यादौ कालिकादेरपि भानसम्भवेन तादृशतात्पर्य्यादिशून्येऽपि चैत्रादौ तादृशप्रयोगापत्ति-रित्यपि बोध्यम् ॥ कयोश्चिदिति पचतीत्यादौ पच्यादिपदतिङादि-पदयोरित्यर्थः । केनचिदिति अनुकूलत्वादिसम्बन्धेनेत्यर्थः । आकाङ्क्षाज्ञानस्येति अव्यवहितोत्तरत्वसंसर्गेण एकपदविशिष्टापर-पदत्वज्ञानस्येत्यर्थः । तथाच पचतीत्यादौ पचादिपदविशिष्ट-तिबादिपदत्वज्ञानस्य अनुकूलत्वसम्बन्धेनैव पाकादिप्रकारककृति-विशेष्यकबोधं प्रत्येव हेतुतया न तत्र सम्बन्धान्तरभानमिति भावः । एवमन्यत्रापि ॥ ययोरिति द्रव्यं घटवदित्यादौ द्रव्य-घटादिपदयोरित्यर्थः । नानासम्बन्धेन संयोगसमवायादिनाना-सम्बन्धेनेत्यर्थः । संसर्गविशेषेति उक्तं वाक्यं संयोगेन द्रव्ये घटा-न्वयबोधेच्छया प्रयुक्तमित्याद्याकारकज्ञानेत्यर्थकम् । तथाच यदा यत्र यादृशसम्बन्धघटिततात्पर्य्यज्ञानं तद्घटितसामग्रीविशेषबलात् तदा तत्र तादृशसम्बन्धस्यैव भानमिति नानियम इति भावः॥ शक्तिज्ञानजन्यसंसर्गविशेषोपस्थितिरेव नियामिका कुतोऽनियम इत्यत आह सामान्यरूपेणेति सम्बन्धत्वादिसामान्यधर्म्मेणेत्यर्थः । शक्यकटौ अन्वितघटादिघटके उक्तस्यैवेति तात्पर्य्यज्ञानस्यैवेत्यर्थः ।

स्वार्थान्वयबोधे आकाङ्क्षा तज्जन्यशाब्दबोधे संसर्गविशेषतात्पर्य्यज्ञानकारणबलादेव सम्बन्धभाननियमोपपत्तेः। अन्वयांशे शक्त्युपगमेऽपि एकैकस्यैव पदार्थस्य संसर्गविधया क्वचित् कस्यचिदभानमिति एकैकस्यैव संसर्गस्य भानमित्यनियमेन सामान्यरूपेणैवान्वयस्य शक्यकोटावन्तर्भावनीयतया उक्तस्यैव संसर्गभाननियामकत्वात् न च संसर्गविशेषानुपस्थितौ तात्पर्य्यज्ञानासम्भवेन तदुपस्थितेरावश्यकतया तद्गोचरसंस्कारोद्बोधार्थमेव तत्र वृत्तिज्ञानमपेक्षितमिति वाच्यं उद्बोधान्तरोपस्थितेऽपि संसर्गे तात्पर्य्यग्रहसम्भवात् तत्र वृत्तिग्रहस्यानपेक्षितत्वात् तस्मात् घटत्वगोत्वविशिष्टे घटगवादिपदस्य

संसर्गविशेषेति इदं वाक्यं एतद्धर्म्मावच्छिन्नविशेष्यतावे तत्सम्बन्धावच्छिन्नैतद्धर्म्मावच्छिन्नप्रकारताकबोधजनकत्वप्रकारकेच्छावदित्याद्याकारकपर्य्यवसन्ने तात्पर्य्यज्ञानेन चेति, अवच्छिन्नतांशे संयोगादेः प्रकारतया भानात् तादृशप्रकारताप्रयोजकतदुपस्थित्यभावेन तात्पर्य्यज्ञानासम्भव इति भावः। संस्कारोद्बोधार्थमेव संस्कारे फलोपधानार्थमेव तत्र सम्बन्धं। उद्बोधकान्तर इति सम्बन्धान्तरज्ञानादिजन्योपस्थित इत्यर्थकम्। तस्मादिति संसर्गांशे शक्त्यनावश्यकत्वादित्यर्थः। घटत्वेति अस्य सावधारणपदत्वेन नतु अन्वितघटत्वादिविशिष्टे इति भावः। आकाङ्क्षादीति आदिना

शक्तिः । पदार्थद्वयसंसर्गस्तु आकाङ्क्षादिबललभ्य एव इति घटादिपदस्य पदार्थतावच्छेदकीभूतघटत्वादिविशिष्ट एव शक्तिः नतु तदुपलक्षिते घटत्वादेरुपलक्षणत्वे तस्य द्रव्यत्वाद्यविशेषेण घटादिपदात् द्रव्यत्वादिना न बोधः अपि तु घटत्वादिनैवेति नियमानुपपत्तेः अथ घटत्वादेरिव द्रव्यत्वादेरपि वैशिष्ट्यस्य घटादौ सत्वात् घटादिपदशक्तेर्घटत्वादिसामानाधिकरण्यवद्द्रव्यत्वादिसामानाधिकरण्यस्यापि तत्र सत्वात् घटादिविशिष्टे शक्तिर्न तु द्रव्यत्वादिविशिष्टे इत्यस्य कोऽर्थः अत्र वदन्ति तद्विशिष्टे शक्तिरित्यस्य तद्धर्मतद्वैशिष्ट्यादितदाश्रयेष्वेव शक्तिरित्यर्थः घटादिपदशक्तिमति द्रव्यत्वादिवैशिष्ट्यसत्वेऽपि द्रव्य-

योग्यतातात्पर्यज्ञानयोः परिग्रहः ॥ तस्य घटत्वादेः द्रव्यत्वाद्यविशेषात् द्रव्यत्वादिना सह वैलक्षण्याभावात् इति । आशङ्कते अथेति द्रव्यत्वसामानाधिकरण्यस्येति तथाच घटादिपदस्य घटत्वादिविशिष्टे शक्तिरिति वाक्यजन्यप्रतीतौ सप्तम्या वृत्तित्वार्थकतया घटत्वादिशक्त्योः सामानाधिकरण्यावगाहनेनापि न निस्तारः ॥ अत्रेति तादृशशङ्कायामित्यर्थः । वदन्तीति स्वयन्तु जातौ अवयवसंस्थानरूपाकृतौ व्यक्तौ च गवादिपदानां शक्तिस्वीकारात् एतस्मिन्न निर्भरसूचनाय तदुक्तम् एतच्चाग्रे व्यक्तीभविष्यति ॥ तद्वैशिष्टेति तद्धर्मवैशिष्ट्येत्यर्थः वैशिष्ट्यञ्च सम्बन्धः स च

त्वादौ तच्छक्तिविरहात् तेषामुपलक्षणता घटत्वादौ तत्सत्वाच्च तेषां विशेषणता एवञ्च प्रवृत्तिनिमित्ते-ऽपि शक्तेः सत्वात् तस्यापि वाच्यतया वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वमिति

समवायादिः। उपलक्षणतेति सामानाधिकरण्यमात्रमित्यर्थः॥ वाच्यत्वे सतीत्यादि आकाशादिशब्दस्य शब्दाश्रये स्वरूपतः शक्ति-वादिप्राचां नये शब्दाश्रयत्वे प्रवृत्तिनिमित्तत्ववारणाय वाच्यत्वे सतीति नव्यनये तु द्रव्यादिपदादपि घटत्वाद्युपलक्षितघटादौ शक्तिग्रहात् घटत्वादिना घटाद्युपस्थितिर्जायते अतो द्रव्यादि-पदानां घटत्वादौ प्रवृत्तिनिमित्तत्ववारणाय तत्। नन्वेवं घटादि-पदाविशेषेणाकाशादिपदस्यापि विशिष्टवाचकत्वं नतु निरवच्छिन्न-शक्तिकत्वं एवञ्च प्रवृत्तिनिमित्तलक्षणे वाच्यत्वविशेषणमनुपादेयमे-वेति दीधितिकारस्य तद्विशेषणखण्डनमसङ्गतं उक्तरीत्या द्रव्या-दिपदानां घटत्वादौ प्रवृत्तिनिमित्तत्ववारकतया नव्यमतेऽपि तत् सार्थक्यसम्भवादिति चेन्न सामान्यतः शक्तिविषयत्वविशेषणेनोपपत्तौ वाच्यत्वपर्य्यन्तप्रवेशो व्यर्थ इत्यत्र तात्पर्य्यात् न च तादृशज्ञानस्य घटत्वाद्यंशे सम्बन्धानवगाहनात् घटत्वादिना तत् स्मरणं दुर्घट-मिति वाच्यं स्मृतिजनने प्रकारांशे सम्बन्धभानानपेक्षणात् अन्यथा लक्ष्यतावच्छेदकतीरत्वादिना तीरादेः स्मृत्यनुत्पत्तेः॥ गवादि-पदानां जात्या कृतिविशिष्टवाचकतमते तेषां संस्थाने प्रवृत्ति-निमित्तत्ववारणाय वाच्यवृत्तित्वे सतीति। न च अवयवविशेष-संयोगरूपस्य संस्थानस्य स्वसमवायिसमवेतत्वसम्बन्धेन गवादौ वृत्तित्वात्तन्निवेशेऽपि अतिव्याप्तितादवस्थ्यमिति वाच्यं साक्षात्सम्ब-

**प्रवृत्तिनिमित्तलक्षणे वाच्यत्वे सति इति विशेषणदानमुपपद्यते अथ घटशब्दाद्घटो बोद्धव्य इत्याकारिकाया भगवदिच्छाया बोधविशेषविषयतात्वेन बोधविषयत्व-प्रकारता-निरूपितविशेष्यता-घट एव**

न्धेन तद्विवक्षणात् एतच्चाग्रे स्वयमेव वक्ष्यते । वृत्तित्वञ्चात्र वाच्यताघटकसम्बन्धेन विवक्षणीयं नातः संस्थानस्य कालिकादिसम्बन्धेन गवादौ सत्त्वेऽपि तत्रातिव्याप्तितादवस्थ्यम् । वृत्तित्वपदेन सम्बद्धत्वस्य विवक्षणीयतया गम्यादिधातूनां प्रवृत्तिनिमित्तसंयोगादेरनुकूलत्वादिसम्बन्धेन वृत्तित्वविरहेऽपि न क्षतिः । पशुपदस्य तु एतन्मते लोमवल्लाङ्गलविशिष्ट एव शक्तिः न तु स्वाश्रयलाङ्गूलसमवेतत्वसम्बन्धेन लोमवति नातस्तत्राव्याप्तिः यत्र बुद्धिस्थतादृशपरम्परासम्बन्धेन लोमविशिष्टः तच्छब्देन परामृश्यते तत्र तच्छब्दस्य लक्षणैव न तु शक्तिरतो न तत्राव्याप्तिः तच्छब्दस्य लक्षणा नास्ति सर्वत्रैव शक्तिरिति तु नाशङ्कनीयं अवयवग्रन्थे जगदीशतर्कालङ्कारेण तच्छब्दस्याऽपि लक्षणास्वीकारात् ॥ द्रव्यदधिपदादेः घटदध्यादौ प्रवृत्तिनिमित्तत्वापत्तिः घटादिरूपद्रव्ये अवयविरूपदध्यादौ च वाच्यत्वस्य सत्वात् तद्वाच्यात्मककपालादौ अवयवे दध्नि च वृत्तेश्चातो वाच्योपस्थितीति तदर्थस्तु भ्रमान्यशक्तिज्ञानजन्या या उपस्थितिः तन्मुख्यविशेष्यताकप्रकारताश्रयत्वम् । द्रव्यपदं द्रव्यवति शक्तमिति शक्तिभ्रमजन्योपस्थितिमादाय द्रव्यपदादेर्घटादावतिव्याप्तितादवस्थ्यात् भ्रमान्येति द्रव्यपदं द्रव्यवति लाक्षणिकमिति ज्ञानजन्योपस्थितिमादाय उक्तातिव्याप्तिवारणाय शक्तीति मुख्यविशेष्यतानिवेशात् पशुपदादीनां शक्यतावच्छेदक-

ननु घटत्वादौ विषयतामात्रञ्च वस्तुमात्र एव इति कथं घटपदशक्तिर्घटत्वादिषु विश्वेव इति नियम इति चेदीश्वरेच्छायास्तत्पदजन्यशाब्दबोधविषयता-प्रयोजकसम्बन्ध एव तत्पदशक्तिव्यपदेशनियामकः घटपदाद्वटो बोध्य इत्येतादृशेच्छायाञ्च घटत्वाव-च्छेदेन बोधविषयत्वमवगाहमानायां समवायाव-च्छिन्नं बोधविषयत्वावच्छेदकत्वं घटत्वे सम-वायेन घटत्वाद्यवच्छेद्यत्वं वा विषयतायां संसर्ग-मर्य्यादया भासते एवञ्चाश्रयत्वसम्बन्धावच्छिन्न-

तावच्छेदके लोमादौ नातिव्याप्तिरिति॥ विषयतामात्रञ्चेति अस्य ईश्वरेच्छीयविषयतात्वावच्छिन्नं तत्पदजन्यबोधविषयत्वप्रका-रकेश्वरेच्छीयविषयतात्वावच्छिन्नं वेत्यर्थः। वस्तुमात्र एवेतीति तथाच घटत्वादौ वाच्यत्वोपपत्तावपि सर्व्वेषु पदार्थेषु सर्व्वेषां पदानां वाच्यत्वापत्तिरिति भावः। ईश्वरेच्छाया इति अत्र षष्ठ्यर्थो निरू-पितत्वं तस्य च विषयतात्मकसम्बन्धेऽन्वयः। भगवदिच्छा तु तत्त-त्पदजन्यबोधीययादृशविषयत्वेन यमवगाहते तत्र शाब्दबोधीय-तादृशविषयतां प्रयुनक्ति इति नियममङ्गीकृत्याह घटपदादिति इत्येतादृशेच्छायामित्यत्र सप्तम्यर्थो निरूपितत्वं तस्य च भासते इत्यत्र भासधात्वर्थविषयतायामन्वयः। घटत्व इत्यत्र सप्तम्यर्थो विशेष्यत्वं तस्यापि निरूपितत्वसम्बन्धेन भासधात्वर्थेऽन्वयः। भासत इत्यत्र आख्यातार्थं आश्रयत्वरूपं कर्तृत्वं तस्य चावच्छेदकत्वमि-त्यत्रान्वयः। संसर्गमर्य्यादयेति सांसर्गिकविषयतयेत्यर्थः अभेदोऽत्र

बोधविषयत्वप्रकारतानिरूपितविशेष्यत्वं घटस्याव-
च्छेदकत्वसंसर्गावच्छिन्नघटविशेषणतापन्नबोधविष-
यत्वस्य या प्रकारकता तन्निरूपितविशेष्यत्वं घट-
विशेषणतापन्नबोधविषयत्वांशे अवच्छेद्यत्वसम्बन्धेन
प्रकारत्वं वा घटत्वस्य घटत्वबोधविषयत्वायाः संसर्ग-

त्तीयार्थः तस्यापि भासत इत्यत्र भासधात्वर्थेऽन्वयः। तथाच
ईश्वरेच्छानिरूपितघटत्वनिष्ठविशेष्यतानिरूपितसांसर्गिकविषयत्वा-
भेदवद्विषयत्वाश्रयः बोधविषयतावच्छेदकत्वमित्यन्वयबोधः । बोध-
विषयतापर्य्यन्तं परिचायकं बोध्यम् । द्वितीयपक्षे बोधविषयताया-
मित्यत्र सप्तम्यर्थो विशेष्यत्वं तथाच ईश्वरेच्छीयबोधविशयता-
निष्ठविशेष्यतानिरूपितसांसर्गिकविषयत्वाभेदवद्विषयत्वाश्रयो घट-
त्वावच्छेद्यत्वमित्यन्वयबोधः। अत्र प्रथमकल्पे तादृशबोधविषयत्वं
घटे भासमानं सद्विशेष्यपारतन्त्र्येण अवच्छेदकतासम्बन्धेन घटत्वे
भासते द्वितीयकल्पे घटत्वं स्वधर्म्मितावच्छेदकके तादृशेच्छायां भास-
माने तादृशविषयत्वे समवायसम्बन्धावच्छिन्नावच्छेद्यतासम्बन्धेन
तथा भासते इति बोध्यम् ॥ घटविशेषणतापन्नबोधविषयते-
त्यनेन परतन्त्रा तादृशबोवविषयत्वनिष्ठप्रकारताकविशेष्यता न
तु स्वतन्त्रेति सूचितं तथाच आश्रयत्वसम्बन्धावच्छिन्नस्वतन्त्र-
बोधविषयत्वनिष्ठप्रकारत्वावच्छिन्ना या अवच्छेदकत्वसम्बन्धाव-
च्छिन्ना इच्छीयप्रकारता तन्निरूपितविशेष्यता घटत्वादिविशे-
षणस्य शक्तिः एवञ्च अवच्छेद्यावच्छेदकभावापन्नविषयताद्वयमेव
पृथग्विशेष्यविशेषणतत्संसर्गाणां शक्तिस्तु विशेष्यभेदादिव विरु-
द्धस्वभावमिति। अवच्छेदकत्व इत्यत्र सप्तम्यर्थो विशेष्यत्वं तस्य च

विधया भासमाने अवच्छेदकतया भासमानत्वं समवायस्य इति त्रितयमेव घटपदजन्यबोधविषयतायां ज्ञातमुपयुज्यते इति त्रयाणां वाच्यतोपपत्तिः

निरूपितत्वसम्बन्धेन भासमान इत्यत्र भासधात्वर्थविषयताया-मन्वयः। अवच्छेदकतयेति अवच्छेदकत्वसंसर्गेण तृतीयार्थोऽवच्छिन्नत्वं तस्यापि भासधात्वर्थेऽन्वयः। ज्ञातमुपयुज्यत इति अयात्र किमाकारकं ज्ञानं उपयोगि अत्र नव्याः तत्तत्पद-जन्यबोधीय-विषयता-त्वावच्छिन्नेच्छीय-प्रकारताक-विशेष्यतानिष्ठ-प्रकारतानिरूपितघटादिनिष्ठमुख्यविशेष्यताकं तादृशविषयतात्वा-वच्छिन्नेच्छीय-प्रकारत्वाव-च्छिन्नाव-च्छेदकत्वसम्बन्धावच्छिन्नप्रका-रतानिरूपितविशेष्यताप्रकारताकं घटत्वादिमुख्यविशेष्यकं इच्छीया-तादृशप्रकारत्वावच्छिन्नप्रकारतानिरूपितावच्छेदकत्वनिष्ठसंसर्गता-निरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठाधे-यत्वसम्बन्धावच्छिन्नावच्छेदकताप्रकारकं समवायादिविशेष्यकञ्च ज्ञानं समवायेन घटत्वादिप्रकारकघटादिविशेष्यकान्वयबुद्धौ हेतु-रिति प्राहुः। यत्तु घटत्वादिनिष्ठविशेष्यताकसमवायसम्बन्धाव-च्छिन्नावच्छेदकत्वनिष्ठसांसर्गिकविषयताकप्रकारत्वावच्छेदिका या तादृशविषयतात्वावच्छिन्नेच्छीयप्रकारता तन्निरूपितविशेष्यतावान् घट इत्याकारकं एकं विशिष्टवैशिष्ट्यावगाहि ज्ञानं हेतुरिति तत्तुच्छं एतद्ग्रन्थस्य तादृशज्ञानपरत्वे अग्र घटत्वेत्याद्यग्रिमग्रन्थेन घटत्वविशेष्यकज्ञानस्य कारणत्वे घटत्वत्वानुपस्थितिकाले तादृश-शाब्दबोधानुपपत्तिशङ्कनस्यासङ्गत्यापत्तेः तत्र घटत्वादेर्विशेषणतया प्रवेशादिति॥ परे तु तत्तत्पदजन्यबोधविषयतात्वावच्छिन्नेच्छीय-

घटघटत्वसंसर्गेषु सङ्केतविषयतानां मिथो वैलक्षण्ये-ऽपि तन्निरूपकबोधनिष्ठविषयताया ऐक्याच्छक्त्यैक्य-प्रवादः नतु सङ्केतैक्यात् शक्यत्वशक्तत्वावच्छेदक-भेदेनापि शक्तिभेदानुपपत्तेः भगवत्संङ्केतस्याभेदात् । तदंशे आश्रयत्वसम्बन्धावच्छिन्नबोधविषयत्वप्रका-

प्रकारतानिष्ठैकप्रकारतानिरूपितं घटत्वादिनिष्ठविशेष्यतात्रयं त-न्निरूपकं ज्ञानमेव हेतुः सम्भवति च तादृशज्ञानं यथा घटपटमठा इत्यादौ घटत्वाद्यवच्छिन्नविशेष्यतात्रयनिरूपितवित्वादिनिष्ठैकप्रका रतानिरूपकं ज्ञानं तद्वदिहाऽपि अत्र घटेत्यादौ व्यासज्यवृत्तिधर्म्म-निष्ठैकसम्बन्धावच्छिन्नैकप्रकारता प्रकृते तु अव्यासज्यवृत्तिधर्म्म-निष्ठाविभिन्नसम्बन्धावच्छिन्ना तादृशसम्बन्धाश्च स्वनिरूपितविशे-ष्यत्व-स्वावच्छिन्न-प्रकारताक-विशेष्यत्वस्वावच्छिन्नप्रकारतावच्छेद-कतानिरूपितावच्छेदकत्वस्वरूपाः इयान् विशेष इति ध्येयमिति वदन्ति ॥ नन्वेतावता सङ्केतविषयतानामेव शक्तित्वमायातं सा च पदार्थतदवच्छेदकादिभेदेन विभिन्ना इति कुतस्त्रिष्वेका शक्ति-रिति प्रवादोपपत्तिरित्याशङ्कायां समाधत्ते घटघटत्वेत्यादि तन्नि-रूपकेति सङ्केतनिरूपकेत्यर्थः बोधविषयताया बोधनिष्टविषय-तायाः शक्त्यैक्यप्रवाद इति उपपद्यत इति शेषः तथाच एका एक-निरूपका साक्षात् परम्परासाधारणनिरूपितत्वसम्बन्धेन एकत्व-विशिष्टा वा इत्यर्थः ॥ हर्य्यादिनानार्थकशब्दानां शक्ततावच्छेदकैक्ये-ऽपि विष्णुत्वसिंहत्वादिशक्यतावच्छेदकभेदेन शक्तिभेद इत्यत उक्तं शक्यत्वेति ननु घटत्वादावपि शक्तिस्वीकारे तेषां पदार्थत्वेन इतर-पदार्थान्वये घटो नित्य इत्यादितोऽपि अभ्रान्तानां अन्वयबोधः

रतानिरूपितसङ्केतविषयतावगाहिज्ञानस्यैव पदार्थान्तरान्वयबोधोपयोगित्वं इति शक्तिभ्रमं विना न

स्यादित्यत आह तदंश इत्यादि ज्ञानस्यैवेति एवकारेण अवच्छेदकत्वसम्बन्धावच्छिन्नबोधविषयत्वनिष्ठ-प्रकारतानिरूपितसङ्केतविषयत्वावगाहिज्ञानादेर्व्यवच्छेदः। पदार्थान्तरान्वयबोधोपयोगित्वं भिन्नवृत्त्युपस्थापितार्थान्वयबोधोपयोगित्वं तेन गच्छतीत्यादौ तिङुपस्थाप्यवर्त्तमानत्वादेर्न तदुपस्थाप्यतावच्छेदकक्रतित्वादावन्वयः। शक्तिभ्रमं विना भ्रमात्मकतादृशज्ञानं विना न पदार्थतावच्छेदक इति एतच्च प्रायिकाभिप्रायेण तेन पक्तेत्यादौ तृजाद्युपस्थाप्यतावच्छेदकक्रत्यादौ पाकादेरन्वयेऽपि न क्षतिः॥ अथ कुत्र स्थले पदार्थतावच्छेदके पदार्थान्तरान्वयापत्तिः यद्वारणाय तादृशकार्य्यकारणभावकल्पनम्। न च यत्र घटत्वे नित्यस्य लोम्नि पशुभेदस्याबाधितस्य योग्यताज्ञानं तात्पर्य्यज्ञानं तदवच्छिन्ने शक्तिग्रहात् घटत्वावच्छिन्नस्य लोमावच्छिन्नस्य वा उपस्थितिश्च वर्त्तते तत्र घटो नित्यः पशुर्न पशुरित्यादिवाक्यात् घटत्वे अभेदेन नित्यस्य लोम्नि च पशुभेदस्यान्वयबोधः स्यादिति वाच्यं तादृशबोधं प्रति घटत्वं नित्यं लोम न पशुरित्याद्याकाङ्क्षाज्ञानस्यैव कारणतया तद्विरहादेव तादृशापत्तेरसम्भवात् ननु यत्र घटपदस्य घटत्वे पशुपदस्य वा लोम्नि शक्तिभ्रमो लक्षणाग्रहो वास्ति तत्र इतरकारणसत्त्वात् तादृशवाक्यात् घटत्वे नित्यस्य लोम्नि वा पशुभेदस्य अन्वयबोधजननेन तादृशबोधं प्रत्यपि आकाङ्क्षाज्ञानात्मकस्य तादृशवाक्यज्ञानस्य कारणताया वक्तव्यत्वेन उक्तस्थले तादृशापत्तिर्भवत्येवेति चेन्न तत्र तादृशशक्तिभ्रमादिजन्याया लक्षणाग्रहजन्याया वा घटत्वादेरुप-

पदार्थतावच्छेदके पदार्थान्तरान्वयः । यत्तु तदंशे

स्थितेरसत्वेन तादृशापत्तेरयोगात् यादृशयादृशकारणसत्वे कुत्रचित् कार्य्यमुत्पद्यते तादृशकारणस्तोमस्यैव कार्य्योपादकत्वनियमात् इति चेत् । नैवम् । यस्मादेतद्ग्रन्थस्यायम्भावः उपस्थितेर्हेतुतायां मुख्यविशेषत्वादिरूपविषयताविशेषस्याप्रवेशेन तद्धर्म्मप्रकारेण तद्विषयकशाब्दं प्रति शक्तिग्रहजन्यतद्धर्म्मप्रकारेण तद्विषयकोपस्थितित्वेनैव हेतुत्वं यदि वाच्यं तथाच घटादिपदानां घटत्वादौ शक्तिभ्रमाद्यधीनघटत्वामुपस्थितेरपि घटत्वादिविषयकान्वयबोधं प्रति शक्तिज्ञानजन्यघटत्वादिविषयकोपस्थितित्वेनैव हेतुतया घटत्वविशिष्टे शक्तिग्रहाद्यधीनघटादिविषयकोपस्थितेर्घटत्वादिविषयकतया तादृशकारणतावत्त्वेन शक्तिग्रहाद्यधीनघटत्वादिप्रकारकघटाद्युपस्थितिकाले इतरकारणसत्वे तादृशापत्तिर्दुर्वारैव कारणतावच्छेदका यावन्तो धर्म्माः प्रत्येकं तत्तद्धर्म्मावच्छिन्नं यत् किञ्चिच्छक्तीनां सत्वस्यैव कार्य्योत्पादकत्वनियमेन तदापादकत्वात् । अथ स्वानधिकरणादिषु तत्तच्छाब्दबोधव्यक्त्यापत्तिवारणाय तत्तच्छाब्दव्यक्तिं प्रति शक्तिज्ञानजन्यतत्तदुपस्थितिव्यक्तित्वेन हेतुताया आवश्यकत्वेन शक्तिभ्रमाद्यधीनतदुपस्थितिव्यक्तेस्तदानीमसत्वेन न तदापत्तिरिति चेत् यदि तत्तद्व्यक्तित्वस्य कार्य्यतावच्छेदकत्वं कल्प्येत तदा तद्व्यक्तित्वावच्छिन्नं प्रति कारणमेव तद्व्यक्तित्वावच्छिन्नमापादयति तदेव न प्रयोजनविरहात् अथवा भवतु तत्तद्व्यक्तित्वं कार्य्यतावच्छेदकं मा वा तथापि तत्र घटत्वादिधर्म्मिकघटादिभेदप्रकारकाद्यन्वयबुद्धित्वरूप-सामान्यधर्म्मावच्छिन्नस्यापत्तेर्दुर्व्वारत्वात् सामान्यसामग्रीसत्वात् तत्र तद्व्यक्तिकारणानपेक्षणात् अन्यथा

अन्वयव्यतिरेकदर्शनादिना सामान्यधर्म्मावच्छिन्नं प्रति सामान्य-धर्म्मावच्छिन्नस्य कारणताग्रहो न स्यात् यस्मात् यस्य व्यतिरेके दृष्टचरेभ्य इतरकारणेभ्यः कार्य्योत्पत्तिर्नावलोक्यते जायते चैतद्यदि एतत् कार्य्यं प्रति कारणं न स्यात् एतत् कार्य्यमवश्यमुत्पद्येते-त्यापत्तिस्तदा तत् कार्य्यं प्रति तस्य कारणत्वं परिच्छिद्यते यस्य व्यतिरेके तादृशापरसकलेत्यादितर्कदीधितेरपि तत्रैव तात्पर्य्यं बोध्यं तत्र यदि इतरकारणमध्ये तद्व्यक्तिरूपकारणमप्यपेक्षते तदा यद्वह्निव्यक्तिसत्त्वे महानसादौ धूमोत्पत्तिरवलोकिता अन्यत्र तद्वह्नि-व्यक्तेरसत्त्वेन तदापत्तेरसम्भवः स्यादतएव अनुमितिनाशकाले-ऽनुमित्युत्पादो दुर्व्वार एवेति दीधितिरपि सङ्गच्छते वस्तुतस्तु यत्र यत्र स्थले यद्यच्छरीरावच्छेदेन पदार्थतावच्छेदकधर्म्मिकशक्ति-भ्रमादिजन्यपदार्थतावच्छेदकोपस्थितिघटितसामग्री एकदैव समव-हिता न तु तत्पूर्व्वं तत्परतो वा तत्तच्छरीरावच्छेदेनात्मनि पदा-र्थतावच्छेदकान्वयबोध एकैक एव तत्तच्छाब्दबोधव्यक्तिं प्रति तु तत्तच्छरीरवृत्तेरेव कारणत्वं कल्प्यते नान्यस्य तत्र तत्र तद्धर्म्म-विशिष्टधर्म्मिकशक्तिग्रहाद्यधीनोपस्थितिघटिततादृशसामग्रीतः पदा-र्थतावच्छेदके इतरपदार्थान्वयबोधापत्तिर्दुर्व्वारेति ॥ यत्तु तादृश-पारमार्थिककारणकुटाभावादेव न तादृशबोधापत्तिरित्येतद्ग्रन्थस्य तात्पर्य्यं नत्वतिरिक्तकार्य्यकारणभावकल्पनया तादृशापत्तिवारणे तात्पर्य्यं तदसत् उक्तापत्तेरवारणात् गतिसम्भवे ग्रन्थस्य यथाश्रुता-र्थपरित्यागानहत्वाच्चेति ॥ अथ कीदृशकार्य्यकारणभावः कल्पनीयः येन न तदापद्येत इत्यत्र नव्याः किञ्चित्प्रकारतानिरूपिता या उप-स्थितिप्रयोज्या सांसर्गिकविषयता तन्निरूपिततत्पदार्थनिष्ठविशे-ष्यताशालिशाब्दत्वावच्छिन्नं प्रति किञ्चित्पदजन्यबोधविषयत्वनिष्ठा-

सङ्केतमुख्यविशेष्यताग्रहस्तत्र इतरान्वयबोधप्रयो-
जकः लोमादिमान् पशुपदाद्बोद्धव्य इत्याकारक-
सङ्केते लोमाद्यंशे बोधविषयतायाः प्रकारकत्वे-
ऽपि लोमादेर्द्धर्म्मिविशेषणतापन्नस्यैव तादृशविष-
यताविशेष्यत्वं नतु मुख्यविशेष्यत्वं अतो न लोमादौ
पदार्थान्तरान्वय इति तन्न लोमपशुपदजन्यबोध-
विषयतावच्छेदकं भवत्वित्याद्याधुनिकसङ्केतविष-
यकात् अवच्छेदकतासंसर्गावच्छिन्नतादृशबोधविष-
यत्वप्रकारताकमुख्यविशेष्यं लोम इति ज्ञाना-
ल्लोमादि-मुख्यविशेष्यकशाब्द-बोधानुदयेनाश्रयत्वस-
म्बन्धावच्छिन्नत्वेन तादृशबोधविषयत्वप्रकारताव-
गाहिताया अवश्यं निवेशनीयत्वात् तत्र च लोमा-

श्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितेश्वरीयविशेष्यत्वनिष्ठप्रकारता-
कतत्पदार्थनिष्ठविशेष्यताशालिज्ञानत्वेन तादृशविशेष्यतासम्बन्धेन
शाब्दं प्रति तादृशविशेष्यतासम्बन्धेन उपस्थितित्वेन वा हेतुता
वाच्या अतएव पशुर्धावतीत्यादौ लोमनिष्ठविशेष्यता या उप-
स्थितिप्रयोज्यसांसर्गिकविषयतानिरूपितत्वेन न क्षतिरित्याहुः॥
यस्त्विति विशेष्यताया मुख्यत्वं प्रकारत्वानवच्छिन्नत्वं, प्रकारत्वेऽपीति
अवच्छेदकतासम्बन्धेनेति शेषः। न तु मुख्यविशेष्यत्वमिति पार-
तन्त्रीयतादृशविशेष्यतायाः स्वातन्त्रीयतादृशप्रकारत्वावच्छिन्नत्वा-
दिति भावः॥ ईश्वरसङ्केतस्य तादृशत्वे मानाभावादाह आधु-
निकेति सङ्केतेति लोम अवच्छेदकतासम्बन्धेन पशुपदजन्यबोधीय-

वच्छिन्नविषयकबोधस्यैव सङ्केतविषयतया तादृश-सङ्केत-ग्रहेणान्यादृश-बोधोत्पत्ते-रनुभव-विरुद्धतया इष्टापत्तेरयोगात् तादृशविशेष्यतायां मुख्यत्वनिवेशे प्रयोजनाभावात् एवञ्च पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेन इत्यत्र पदार्थत्वं बोधविषयता-

विषयतावच्छेदकत्वमित्याकारकेत्यर्थः तत्रेति तादृशसङ्केतग्रहात्तादृश-बोध इत्यर्थः। सप्तम्यर्थो विषयत्वं तस्य चेष्टापत्तावन्वयः। एवञ्च सङ्केतीयमुख्यविशेषत्वस्य इतरपदार्थान्वयाप्रयोजकत्वे च॥ ननु स्वमते लोमपशुपदजन्यबोधविषयत्वनिष्ठावच्छेदकत्वसम्बन्धावच्छिन्न प्रकारतानिरूपितसङ्केतीयमुख्यविशेष्यताकमिति ज्ञानात् लोमांशे इतरपदार्थान्वयवारणेऽपि लोमविशिष्टांशे इतरपदार्थान्वयानुप-पत्तिः तदंशे आश्रयत्वसम्बन्धावच्छिन्नप्रकारताकविशेष्यत्वस्याभा-नादिति चेन्न यतो लोमवतः पशुपदजन्यबोधविषयत्वनिष्ठाश्रयत्व-सम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वप्रकारकज्ञानस्य तज्ज-न्योपस्थितेश्च सत्त्वे उक्तज्ञानसत्त्वेऽपि लोमवति इतरपदार्थान्वये बाधकाभावात् तादृशबोधो भवत्येव तादृशज्ञानजन्यलोमवदनुप-स्थितौ तु तत्कारणविरहादेव न तदुत्पत्तिः। यत्त्विति मतेऽपि तादृशोपस्थितिकाल एव दोषं दत्तवानिति न कोऽपि दोषः। एतेन वायसदशनानुसन्धानवत् केषाञ्चित् तदुपपादनान्तर-प्रयासो विफल एव इति ध्येयम्। ननु तथापि पशुपदं पशुं बोधयत्वित्यादिवाचकत्वज्ञानात् पश्वादावितरपदार्थान्वयो न स्यात् तदंशे आश्रयत्वसम्बन्धावच्छिन्नप्रकारताकविशेष्यत्वज्ञानवि-रहादिति चेन्न अस्माच्छब्दादयमर्थो बोद्धव्य इत्यत्तरकल्प एव

श्रयत्वेन सङ्केतविषयत्वं तदेकदेशञ्च बोधविषय-
तावच्छेदकत्वेन तथात्वरूपं शक्यतावच्छेदकत्व-
मित्यवधेयम्। अथ घटत्वाद्युपलक्षिते द्रव्यपद-
शक्त्यवगाहिप्रमातो घटत्वादिप्रकारकस्य घटादि-
पदशक्तिप्रमातः कालिकादिसम्बन्धेन घटत्वादि-
प्रकारकस्य च शाब्दबोधस्य वारणाय तत्सम्बन्धेन
तद्धर्मविशिष्टांशे तत्पदवाच्यत्वावगाहि ज्ञानं कारणं
वाच्यं विशिष्टांशे वाच्यत्वावगाहित्वञ्च विशेषणी-
भूततद्धर्मतदीयतत्सम्बन्धतद्धर्म्यंशे तदवगाहित्वरूपं
वाच्यं नतु तेन सम्बन्धेन तद्धर्मं धर्म्मितावच्छेदकी-
कृत्य तदवगाहित्वमात्रं घटत्वादिकं धर्म्मितावच्छे-
दकीकृत्य द्रव्यादिपदशक्तिज्ञानस्यापि कालिकादि-
सम्बन्धेन घटत्वादिकं धर्म्मितावच्छेदकीकृत्य घटादौ
घटादिपदशक्तिग्रहस्यापि च प्रमात्वेनोक्तातिप्रस-
ङ्गावारणात् एवमपि घटत्वांशे निर्द्धर्म्मितावच्छेदक-
कात् प्रमेयत्वादिधर्म्मितावच्छेदककाच्च घटादि-

भट्टाचार्य्यस्य निर्भरत्वात् शब्दमणौ मिश्रेण तथैव लिखितत्वाच्च। विषयत्वसम्बन्धावच्छिन्नताहशसङ्केतीय-प्रकारताप्रकारकज्ञानस्यापि इतरान्वयबोधप्रयोजकत्वकल्पनीयत्वाच्चेति॥ आशङ्कते अथेति घटत्वाद्युपलक्षिते घटत्वाद्याश्रये तदवगाहिस्वरूपमिति वाच्यत्वा-द्यवगाहित्वस्वरूपमित्यर्थः। मात्रमिति मात्रपदेन घटत्वाद्यंशे

पद-निरूपित-वाच्यताग्रहात्तत्प्रकारकबोध-वारणाय स्वरूपतो घटत्वादिप्रकारकबोधे घटत्वत्वावच्छिन्न-धर्म्मिकवाच्यत्वग्रहापेक्षा उपेया तथाच घटत्व-त्वाद्यनुपस्थितिदशायां घटादिपदाच्छाब्दबोधानुप-पत्तिः न च तदंशे वाचकताज्ञानमेव शाब्दबोधहेतुः एवञ्च स्वरूपतो घटत्वादिप्रकारकबोधे वाचकत्वांशे स्वरूपतो घटत्वादिप्रकारकज्ञानस्यैव हेतुत्वमिति घटादिपदजन्यबोधे घटत्वत्वाद्युपस्थिते नापेक्षा इति वाच्यं एवमपि घटादिपदांशे समवायवाचकताप्रका-रकज्ञानस्य शाब्दबोधे घटत्वादिसम्बन्धतया स्वरूपतः समवाय-भानप्रयोजकताया वाच्यतया समवायवाच-

वाच्यत्वावगाहित्वव्यवच्छेदः। एवमपीति घटत्वादित्रितये वाच्य-त्वावगाहिज्ञानस्य हेतुत्वे चेत्यर्थः निर्द्धर्म्मितावच्छेदकेति घटादि-पदजन्यबोधविषयत्वनिष्ठावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारताकविशे-ष्यतावदित्याकारकादित्यर्थः ताट्टशविशेष्यत्वनिष्ठप्रकारताककिञ्चि-दवच्छिन्नविशेष्यताशालिज्ञानत्वेन हेतुत्वे चाह प्रमेयत्वादीति प्रमेयं घटादिपदजन्यबोधविषयत्वनिष्ठावच्छेदकत्वसम्बन्धावच्छिन्न-प्रकारताकसङ्केतीयविशेष्यतावदित्याकारकादित्यर्थः वाचकता-ज्ञानमेवेति तत्सम्बन्धेन तद्धर्म्मप्रकारकशाब्दं प्रति तत्सम्बन्धाव-च्छिन्नतद्धर्म्मनिष्ठप्रकारताशालिशाब्दं जनयत्वित्याकारकसङ्केतीया या तद्धर्म्मनिष्ठाधेयत्वसम्बन्धावच्छिन्नप्रकारताकतत्सम्बन्धावच्छिन्न-प्रकारतात्वावच्छिन्नविषयताकबोधनिष्ठविषयताकजनकत्वनिष्ठप्रका-

कताज्ञाने वाचकतांशे समवायादेः स्वरूपतः प्रकारत्वासम्भवेन समवायत्वादिप्रकारेणैव तज्ज्ञानस्यैव उपगन्तव्यतया तदनुपस्थितिदशायां घटादिपदाच्छाब्दबोधानुपपत्तेः तथाच केन रूपेण तत्र शक्तिधीर्हेतुता अत्रोच्यते तत्सम्बन्धेन तद्धर्म्मप्रकारकशाब्दबोधे तत्सम्बन्धावच्छिन्नतद्धर्म्मनिष्ठावच्छेदकताकस्वजन्य-बोधविषयत्व-प्रकारतानिरूपितेच्छाविशेष्यतात्वावच्छिन्न-संसर्गक-तद्धर्म्मनिष्ठ-धर्म्मितावच्छेदकताकपदप्रकारकज्ञानत्वेन विषयता-विशेषसंसर्ग-

रताकविशेष्यता, तत्प्रकारकपदविशेष्यकज्ञानं हेतुः द्वितीयेच्छापक्षेऽपि तादृशेच्छीया या घटत्वनिष्ठविशेष्यतानिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नबोधविषयत्वनिष्ठप्रकारत्वावच्छिन्नाप्रकारता तन्निरूपितबोधनिष्ठविषयतायाः परम्परया निरूपकत्वप्रकारकपदविशेष्यकज्ञानं हेतुः तत्र प्रथमे आधेयत्वसम्बन्धेन प्रकारत्वांशे द्वितीये तु विशेष्यत्वांशे घटत्वादेः प्रकारतया भानात् स्वरूपतस्तत्सम्भवात् जातेः स्वरूपतः समवायेनैक भानमिति तु अनुव्यवसायादौ व्यभिचारेण वक्तुमशक्यमिति भावः॥ प्रकारत्वासम्भवेनेति समवायस्य आत्यखण्डोपाध्यतिरिक्तत्वादिति हृदयम्। तदनुपस्थितिदशायां समवायत्वानुपस्थितिदशायाम्। सिद्धान्तयति अत्रोच्यत इत्यादि॥ स्वजन्येति स्वपदं घटादिपदपरं हेतुतेति तत्सम्बन्धावच्छिन्नतद्धर्म्मनिष्ठप्रकारताकशाब्दबोधं प्रति तत्सम्बन्धावच्छिन्नतद्धर्म्मनिष्ठावच्छेदकताकविषयतानिष्ठाया स्वनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नविष-

कार्यविशेष्यकशक्तिज्ञानस्य हेतुता ईदृशशक्तिग्रहे च सम्बन्धघटकतया एवावच्छिन्नत्वांशे समवाय-भानात् स्वरूपतोऽपि तस्य तथाभानसम्भवेन समवायत्वोपस्थितेर्नापेक्षेति सामञ्जस्यं द्रव्यपदाद्द्रव्यं बोद्धव्यमित्याकारताप्रयोजक-द्रव्यपदजन्यबोधविषयत्वीयभगवदिच्छाप्रकारता न घटत्वावच्छिन्नविषयत्वनिष्ठा अपि तु द्रव्यत्वावच्छिन्नविषयत्वनिष्ठा एव इति द्रव्यपदजन्यबोधीयघटत्वावच्छिन्नविषयत्वनिष्ठ-

यतानिरूपितजन्यतानिष्ठविषयतानिरूपितबोधनिष्ठविषयतानिरूपितविषयतात्वावच्छिन्नप्रकारता तन्निरूपित-सङ्केतीयविशेष्यतासम्बन्धेन घटादिपदप्रकारताकतत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नार्थनिष्ठविशेष्यताशालिज्ञानत्वेन हेतुतेत्यर्थः। स्वपदं घटादिपदपरम्। एवञ्च यथाश्रुतस्वजन्यबोधविषयतानिवेशे घटपटपदोभयजन्यघटपटोभयविषयकसमूहालम्बन-ज्ञानमादाय स्वजन्यबोधीयघटत्वावच्छिन्नविषयतानिष्ठेच्छीयप्रकारताकविशेष्यतासम्बन्धेन घटपदवान् पट इति ज्ञानं धृत्वा नातिप्रसङ्गः। सम्बन्धघटकतयेति तथाच संसर्गांशे विशेषणस्य विशेषणत्वाख्यविषयता स्वीक्रियते नतु प्रकारत्वं उपस्थितेः प्रकारतां प्रति प्रयोजकत्वादिति भावः। स्वरूपत इति जात्यखण्डोपाध्यतिरिक्तपदार्थस्य प्रकारतयैव स्वरूपतोभानानङ्गीकारादिति हृदयम्॥ इत्याकारतेति तादृशशब्दजन्यबोधीयविषयतैकरूपविषयता तादृशशब्दोच्चारणप्रयोजकबोधविषयीयविलक्षणविषयता वेत्यर्थः। तथाच तादृशवाक्येन द्रव्यपद-

प्रकारता-निरूपित-भगवदिच्छा-विशेष्यता-वच्छिन्न-संसर्गेण घटत्वावच्छिन्नद्रव्यपदप्रकारकज्ञानं संसर्गतावच्छेदकघटकघटत्वावच्छिन्नत्वांशे भ्रमः। न च द्रव्यपदजन्यविभक्त्युपस्थापितैकत्वादिप्रकारकद्रव्यत्वावच्छिन्नविशेष्यकबोधीया या एकत्वावच्छिन्नद्रव्यत्वावच्छिन्नविषयता सापि द्रव्यपदजन्यबोधीयद्रव्यत्वावच्छिन्नविषयतात्वेन भगवदिच्छाविषयः एवञ्च द्रव्यपदजन्यबोधीय एकत्वावच्छिन्नविषयत्वप्रकारता-निरूपित-भगवदिच्छाविशेष्यता-सम्बन्धेन एकत्वादिमतो द्रव्यपदवत्त्वात् द्रव्यपदाद्भ्रान्तस्य पदान्तरैकत्व-बोधक-पदानुपस्थितैकत्वप्रकारेणापि

जन्यबोधीयद्रव्यत्वावच्छिन्नविषयतावद्द्रव्यमित्याकारकेच्छेव अभिलप्यते इति भावः। भ्रम इति तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठविशेषणताकत्वरूपभ्रमत्वावच्छिन्न इत्यर्थः॥ न चेति न च द्रव्यमेकत्ववदिति ज्ञानीयद्रव्यत्वावच्छिन्नविशेष्यताया एकत्वप्रकारतानिरूपितत्वं नतु एकत्वावच्छिन्नत्वं कुत एतत् सङ्गतिरिति वाच्यं विशेष्यतायाः प्रकारावच्छिन्नत्वमभ्युपेत्य तथोक्तत्वात् तच्च हेत्वाभासे स्वयमेव प्रत्यक्षमणौ चोक्तम्। केचित्तु द्रव्यं गगन-मित्यादि-वाक्यजन्यगगनप्रकारता-निरूपितैकत्वद्रव्यत्वोभय-धर्म्मावच्छिन्नविशेष्यताशालिज्ञानमादाय तदुक्तमित्याहुः॥ द्रव्यं घट इत्यादिवाक्यत एकवचनेनैकत्वोपस्थितिकाले एकत्वेन द्रव्यबोधस्येष्टत्वादाह पदान्तरैकत्वेति प्रसङ्ग इति द्रव्यगुणः शब्द

शाब्दबोधप्रसङ्गो दुर्व्वार एवेति वाच्यं तादृशविशेष्यतात्वेन तस्य सम्बन्धत्वानुपगमात् अथवा तत्पदजन्यतद्धर्म्मप्रकारकशाब्दबोधे तद्धर्म्मावच्छिन्नत्वावच्छिन्नत्वेन स्वजन्यबोधविषयत्वप्रकारतावगाहितादृशप्रकारतानिरूपित-विशेष्यता-संसर्गकपदप्रकारकं ज्ञानं हेतुः एवञ्च एकत्वादिप्रकारकद्रव्यादिपद-जन्य-बोध-जनक-शक्ति-ग्रहेण द्रव्यादिपदजन्यबोध-विषयत्वीयद्रव्यत्वाद्यवच्छिन्नत्वावच्छिन्नत्ववि-

इत्यादावित्यर्थः। तादृशविशेष्यतात्वेनेति जन्यबोधीयैकत्वावच्छिन्नविषयताप्रकारतानिरूपितभगवदिच्छाविशेष्यतात्वेन तस्येति द्रव्यपदजन्यबोधीय-द्रव्यत्वावच्छिन्न-विषयता प्रकारता-निरूपितभगवदिच्छाविशेष्यत्वस्येत्यर्थः। द्रव्यपदत्वावच्छिन्नप्रतियोगित्वेनेति शेषः तेन एकवचनादिपदजन्यतादृशबोधमादाय तादृशविशेष्यत्वस्य एकत्वावच्छिन्नत्वघटिततादृशविशेष्यतात्वेन एकवचनादेः संसर्गत्वेऽपि द्रव्यादिपदस्य तत्प्रतियोगिकत्वाभावेन तस्य तत्संसर्गावगाहने ज्ञानस्य भ्रमत्वमलीकत्वं वेति भावः॥ तुष्यतु दुर्ज्जन इति न्यायेनाह अथवेति तद्धर्म्मावच्छिन्नत्वावच्छिन्नेति तथाच घटो घटपदजन्यबोधीयघटत्वावच्छिन्नविषयतावान् भवत्वित्याद्याकारक एव भगवत्सङ्केतः बोधविषयत्वांशे तत्तद्धर्म्मावच्छिन्नत्वावगाही शक्तिरिति सा च द्रव्यपदजन्यबोधीय विषयतायां एकत्वाद्यवच्छिन्नत्वसत्त्वेऽपि न तद्रूपेण तामवगाहते इति॥ एवञ्च तत्पदजन्यतद्धर्म्मप्रकारकशाब्दं प्रति तद्धर्म्मावच्छिन्नत्वावच्छिन्ना या

शिष्टभगवदिच्छाप्रकारतायां वाधितस्य एकत्वाव-च्छिन्न-त्वावच्छिन्नत्वस्यावगाहनात् तस्य भ्रमत्वं यत्तु पदार्थांशे घटत्वादेः शाब्दबोधप्रकारतायां तदंशे तत्तत्पदशक्यतावच्छेदकत्वमेव प्रयोजकं शक्य-तावच्छेदकत्वञ्च तत्पदजन्यबोधविषयत्वप्रकारता-निरूपितविशेष्यतावच्छेदकत्वं नतु बोधविषयताव-च्छेदकतया सङ्केतविषयत्वरूपं विशेषणविधया वा-च्यत्वं तथाच तद्धर्मप्रकारकशाब्दबोधे तद्धर्मावच्छि-न्नत्व-विशिष्टतादृश-विषयता-संसर्गक-शक्तिज्ञानमेव कारणमास्तां द्रव्यादिपदजन्यबोधविषयत्वप्रकारता-

स्वजन्यबोधीयविषयतात्वावच्छिन्नप्रकारता-तन्निरूपितेच्छीयविशे-ष्यतासम्बन्धेन तत्तत्पदप्रकारकार्थविशेष्यकज्ञानं हेतुरेवं सम्बन्धांशे ऽपीति॥ दीधितिकारमतं दूषयितुमुपन्यस्यति। यत्त्विति। विशेष्यतावच्छेदकत्वमिति ईश्वरेच्छीयविशेष्यतावच्छेदकत्वमित्यर्थः। बोधविषयतावच्छेदकतयेति अत्र विषयतानिरूपितत्वं तृतीयार्थः तस्य च सङ्केतविषयत्वेऽन्वयः। तादृशेति तत्पदजन्यबोधीय-विषयत्वप्रकारतानिरूपितविशेष्यतेत्यर्थः। तथाच तद्धर्मावच्छिन्न-त्वतादृश-विशेष्यता-त्वोभय-धर्माव-च्छिन्न-संसर्गताक-शक्तिज्ञानमेव हेतुरिति। एकरूपेणैव हेतुत्वादिति लाघवात् कारणतावच्छेदके ऐश्वरीयत्वस्याप्रवेशेन हेतुतानां तुल्यरूपताया अनुभवसिद्धत्वा-दित्यर्थः एतेन शक्त्याधुनिकसङ्केतयोरर्थपदवैलक्षण्येन भिन्नाकारक-तया एकरूपेण हेतुत्वादित्यसङ्गतमित्यपि परास्तं एवञ्च आधुनि-

निरूपित-द्रव्यत्वाव-च्छिन्नभगवत्सङ्केतीय-विशेष्यता-त्वेनैव सम्बन्धता नतु तादृशप्रकारतानिरूपितघटत्वा-वच्छिन्नविशेष्यतात्वेन तादृशप्रकारतानिरूपित-भगवदिच्छाविशेष्यतायां द्रव्यत्वादेरेवावच्छेदकत्वं नतु घटत्वादेरित्येवं स्वीकरणीयं इति नोक्तातिप्रसङ्गः किं प्रवृत्तिनिमित्तस्य वाच्यत्वोपगमेन इति शक्यतावच्छेदकमवाच्यमेव इति दीधितिकारमतं तन्न शोभनं एवं सति शक्तिज्ञानाधुनिकसङ्केत-ज्ञानयोरेकरूपेणैव हेतुत्वात् यत्र द्रव्यपदादगुणव-त्त्वादिना द्रव्यं बोद्धव्यं इत्याकारकाधुनिकसङ्केतीय-

कस्थलेऽपि तद्धर्म्मप्रकारकशाब्दबोधे पदजन्यबोधविषयत्वनिष्ठप्रकारताकसङ्केतीयतद्धर्म्मावच्छिन्नविशेष्यतासम्बन्धेन पदप्रकारकज्ञानत्वेन हेतुत्वं वाच्यमिति भावः। गुणवत्त्वादिनेति अत्र तृतीयार्थोऽवच्छिन्नत्वं तस्य च बोद्धव्यमित्यत्र तव्यप्रत्ययार्थतावच्छेदकविषयतायामन्वयः तादृशसङ्केतस्य ऐश्वरीयत्वे मानाभावादाह आधुनिकेति अनुपपत्तेरिति गुणवत्त्वस्य सङ्केतीयधर्म्मितानवच्छेदकत्वादिति भावः॥ अथ भगवत्सङ्केताधुनिकसङ्केतयोरेकरूपहेतुत्वेऽपि द्रव्यपदात् द्रव्यं बोद्धव्यमिति सङ्केतस्य द्रव्यपदजन्यबोधीयविषयतात्वपर्य्याप्तावच्छेदकताकप्रकारताकसङ्केतीयद्रव्यत्वावच्छिन्नविशेष्यतासम्बन्धेन द्रव्यपदप्रकारकद्रव्यत्वावच्छिन्नविशेष्यताशालिज्ञानत्वेन हेतुत्वे द्रव्यपदात् गुणवत्त्वेन द्रव्यं बोद्धव्यमित्याकारसङ्केतीयप्रकारताया गुणवत्त्वावच्छिन्नत्वतादृशप्रकारतात्वोभय-

द्रव्यत्वावच्छिन्नविषयता द्रव्ये गृहीता तत्र तादृशस-ङ्केतग्रहात् द्रव्यत्वेन द्रव्यबोधापत्तेः गुणवत्त्वादि-प्रकारकशाब्दबोधानुपपत्तेश्च दुर्व्वारत्वात्। अथ पदा-र्थांशे इव प्रकारीभूतधर्म्मांशे वाच्यत्वग्रहस्यापेक्षितत्वे आकाशपदाच्छब्दाश्रयतया बोधो न स्यात् शब्दा-श्रयत्वस्य आकाशपदा वाच्यतायाः सिद्धान्तसिद्धत्वात्

धर्म्मावच्छिन्नत्वेन द्रव्यपदजन्यबोधीयविषयतत्वेतरधर्म्मानवच्छिन्न त्वाभावेन न तदापत्तिः। न च दीधितिकारमते पर्य्याप्तिनिवेशस्य आधिक्येन गौरवमिति वाच्यं द्रव्यत्वादेर्वाच्यत्वमतेऽपि द्रव्यत्वा-वच्छिन्नत्व द्रव्यपदजन्य-बोधीयविषयतात्वोभयधर्म्मपर्य्याप्तावच्छेदक-ताकत्वस्य प्रकारतायामवश्यं निवेशनीयत्वेन गौरवानवकाशात् अन्यथा द्रव्यपदात् गुणवद्द्रव्यत्वेन द्रव्यं बोद्धव्यमित्याद्याधुनिक-सङ्केतग्रहात् द्रव्यत्वमात्रप्रकारेण द्रव्यबोधानुदयेन व्यभिचारापत्तेः न च तादृशाधुनिकसङ्केतज्ञानस्य तादृशशक्तिज्ञानकारणान्तर्भाव-मवलम्ब्य नोक्तापत्तिर्दत्ता अपि तु फलबलेन तादृशज्ञानस्य स्वतन्त्र-भवदभिमतकारणताकल्पनेनेति वाच्यं यस्मात् आपत्तिदानाय न केनचित् किमपि कल्प्यते तस्मात् फलोत्पादोऽपि सविवादः अनु-भवेनापि एकशेषस्य दुष्करत्वं च नन्वेवमपि तादृशापत्तिर्मा भूत् किन्तु दीधितिकारमते तादृशाधुनिकसङ्केतग्रहात् गुणवत्त्वादिना द्रव्यादेर्बोधानुपपत्तिदोषो दुर्व्वार इति चेन्न तस्येष्टत्वात् द्रव्यप-दात् गुणवद्बोद्धव्यमित्याकारकाधुनिकसङ्केतेनैव तादृशबोधोदयात् अथवा तादृशसङ्केतग्रहात् तादृशबोधस्यानुभवविषयत्वे चेत् अगत्या

तद्वारणाय प्रवृत्तिनिमित्तलक्षणे वाच्यत्वे सतीति विशेषणोपादानात् इति चेन्न शब्दाश्रयत्वस्याकाश-पदवाच्यत्वमनङ्गीकर्तृभिः प्राचीनैराकाशपदादा-काशांशे तदुपस्थाप्यधर्म्माप्रकारकशाब्दबुद्धेरेवोप-गमात् तदुक्तमस्तु वा पदादपि निर्व्विकल्पकमिति

स्वजन्य-बोधीय-गुणवत्त्वावच्छिन्न-विषयतात्वावच्छिन्नप्रकारताक-सङ्केतीयविशेष्यतासम्बन्धेन द्रव्यपदप्रकारकगुणवत्त्वावच्छिन्नवि-शेष्यताकज्ञानत्वेन स्वातन्त्र्येणैव हेतुतायाः कल्पनेन तादृशसङ्केत-ग्रहात्तादृशबोधजननात् स्यादेवमेतदतिरिक्तकल्पने गौरवं न स्यात् भट्टाचार्य्यमतेऽपि तत्कल्पनाया आवश्यकत्वात्। अथ एवमपि तद्धर्म्मप्रकारकशाब्दबोधं प्रति संकेतीयतादृशविशेष्यतायास्तद्धर्म्माव-च्छिन्नत्वेनावगाहिज्ञानमेव कारणं इति नियमो भज्येत इति चेन्न शक्तिज्ञान एव तादृशनियमस्वीकारात्। न च तथापि द्रव्यपदाद्गुणवद्बोद्धव्यमिति सङ्केतग्रहात् तादृशबोधस्य भट्टा-चार्य्येणास्वीकारात् तादृशकारणत्वाकल्पनेन लाघवमिति वाच्यं तथा सति दीधितिकारेणापि द्रव्यपदाद्गुणवत्त्वेन द्रव्यं बोद्धव्य-मित्याकारकसङ्केतग्रहात् गुणवद्बोधस्यानङ्गीकारेण तदकल्पनात् लाघवस्य तुल्यत्वादिति यदि सूक्ष्ममीक्ष्यते तदा दीधितिकारमतं ब्रह्मणोऽपि दूषयितुमशक्यमिति ध्येयम्॥ सिद्धान्तसिद्धत्वादिति शास्त्रकाराद्यवधारणविषयत्वादित्यर्थः। तद्वारणायेति शब्दा-श्रयत्वे प्रवृत्तिनिमित्तत्ववारणायेत्यर्थः। तदुपस्थाप्येति आकाश-पदोपस्थाप्येति धर्म्माप्रकारकेति स्वजन्यबोधीयनिरवच्छिन्नविष-यतानिष्ठप्रकारतानिरूपितसङ्केतीयविशेष्यतासम्बन्धेन आकाश-

निर्व्विकल्पकत्वञ्च तदंशे तत्पदोपस्थाप्याप्रकारकत्वं नतु तदंशे सामान्यतो निष्प्रकारकत्वं विभक्त्युपस्थापितैकत्वादीनां तदंशे प्रकारताया आवश्यकत्वात् तेन समं पदार्थान्तरस्य संसर्गानवगाहने तादृशबोधस्य शाब्दत्वासम्भवाच्च वस्तुतस्तु तत्र निर्व्विकल्पकपदं तत्पदोपस्थाप्यवस्त्वविशेषितधर्म्मिविषयकशाब्दानुभवजनकनिर्विकल्पकस्मरणपरं अतएव तत्र निर्व्विकल्पकरूपस्य स्मरणस्यानुपपत्तिः अनुभवस्य स्वसमानप्रकारकमात्रस्मृतिजनकत्वात् इत्याशङ्क्य प्रकारान्तरेण तादृशस्मरणमुपपादितं मिश्रैः

पदवान् शब्दाश्रय इत्याकारकज्ञानत्वेन आकाशनिष्ठनिरवच्छिन्नविषयताशालिशाब्दं प्रति हेतुत्वावगमादिति भावः। तदंश इति तत्पदशक्यांश इत्यर्थः। तत्पदोपस्थाप्येति आकाशादिपदोपस्थाप्यशब्दाश्रयत्वादित्यर्थः नन्वाकाशैकत्वयोः समूहालम्बनबोधस्वीकारे का क्षतिरित्यत आह तेनेति आकाशेनेत्यर्थः एतद्याख्याने शब्दाश्रयत्वप्रकारकोपस्थितेः स्वरूपत आकाशशाब्दजनने अनुभवविरोधः निर्विकल्पकपदस्य संसर्गानवगाहिज्ञानरूपमुख्यार्थपरित्यागतो न्यूनता च स्यादित्यत आह वस्तुतस्त्विति तत्पदेति आकाशपदेत्यर्थः तदुपस्थाप्यं यद्वस्तु तदविशेषितधर्म्मी तद्विषयकशाब्दानुभवजनकेत्यर्थः प्रकारान्तरेणेति तद्धर्म्मनिष्ठप्रकारत्वान्य-प्रकारत्वानिरूपिततद्धर्म्मिनिष्ठ-विषयता-शालिस्मरणं प्रति तद्धर्म्मनिष्ठप्रकारतानिरूपिततद्धर्म्मिनिष्ठविशेष्यता-शाल्यनु-

अत्र च मते जात्यतिरिक्तस्य तस्य स्वरूपतः पदार्थानुभवप्रकारत्वासम्भवात् आकाशवासीत्यादौ शाब्दबोधानुपपत्तिः अन्वयितावच्छेदकावच्छिन्न एव पदार्थान्तरान्वय इति नियमानुपपत्तिश्चेति पदार्थ इव पदार्थप्रकारीभूतधर्म्मांशेऽपि शक्तिग्रहापेक्षायां गोत्वादेर्गवादिपदवाच्यत्ववत् शब्दाश्रयत्वस्यापि आकाशपदवाच्यत्वमस्त्येव अतएव दीधितिकृता

भवत्वेन कारणताकल्पनेनेत्यर्थः। तादृशस्मरणस्य यदा प्रकारांशे, नोद्बोधकस्य धर्म्मांश एवोद्बोधकस्य सम्बलनं तदैवेति तत्कल्पने च फलबलादिति मिश्राणामाशयः। अत्र च मत इति आकाशादिपदानां स्वरूपतः शक्तिवादिमत इत्यर्थः। जात्येति जातिपदं अखण्डोपाध्युपलक्षकं ते जात्यखण्डोपाध्यतिरिक्तस्येत्यर्थः; तस्य आकाशस्य स्मृतौ स्वरूपत आकाशस्य प्रकारत्वसम्भवादाह पदार्थानुभव इति प्रकारत्वासम्भवादिति योग्यताज्ञानादीनां आकाशांशे किञ्चिद्धर्म्मभानं विना जननासम्भवात् तत्र यस्य यद्रूपेण भानं तस्य तद्रूपेणैव शाब्दबोधजननादिति भावः। जात्यखण्डोपाध्यतिरिक्तपदार्थस्यापि स्वरूपतः कर्य्यङ्गानाङ्गीकारेण अत्र बाधनिश्चया प्रतिबध्यतया योग्यताज्ञानस्य कारणत्वाकल्पनेन च लक्षणया वा तदुपपादने त्वाह अन्वयितावच्छेदकेति गगनमित्यादि वाक्यजन्यबोधानुरोधादिति इष्टापत्तौ शब्दाश्रयो नैक इति बाधनिश्चयकाले सर्व्वानुभवविरुद्धस्य तादृशबोधस्यापत्तेरिति भावः। अत्र दीधितिकृत्सम्मतिं दर्शयति अतएवेति

गुणटीप्पण्यां रूपग्रन्थे अत्रेदं तत्त्वं इत्यादिना गोत्वादिना शब्दाश्रयत्वस्याविशेषं व्युत्पाद्य प्रकाशस्यप्रवृत्तिनिमित्तलक्षणे वाच्यत्वविशेषणस्योपादानं दूषितमेव प्रत्यक्षमणिदीधितौ च पदार्थांशे गोत्वादेः प्रकारतायां शक्यतावच्छेदकत्वस्य प्रयोजकत्वमुपगम्य शक्यतावच्छेदके शक्तिर्दूषितेव तत्रोक्तानुपपत्तिश्चिन्त्या । यत्तु शक्त्याकाशपदादष्टद्रव्यातिरिक्तद्रव्यत्वादिना आकाशबोधो भवति नतु नियमतः शब्दाश्रयत्वेनैव तथा सति आकाशः शब्दाश्रयः इति सह-प्रयोगस्य मुख्यतानुपपत्तिः प्रत्येकं नानाधर्म्मविशिष्ट एवाकाशे तत्पदस्य नानाशक्तिकल्पनं न सम्भवति नानाधर्म्मावच्छिन्नस्य एकधर्म्मिणि एकपदवाच्यतायाः क्वाप्यदृष्टत्वात् इति शब्दाश्रयत्वोपलक्षित एवाकाश-

शब्दाश्रयत्वस्य शक्यतावच्छेदकत्वादेवेत्यर्थः गुणटीप्पण्यां गुणप्रकाशटीप्पण्यां गोत्वादिनेति दृष्टान्तेनेत्यर्थः अविशेषं तुल्यानुभवयुक्तिकं व्युत्पाद्य प्रदर्श्य पदार्थांश इत्यत्र सप्तम्यर्थो विशेष्यत्वं तस्य च प्रकारतायामित्यत्रान्वयः शक्यतावच्छेदकत्वस्य सङ्केतीयविशेष्यतावच्छेदकत्वस्य शक्तिः पदजन्यबोधविषयत्वेन सङ्केतीयविषयत्वं उक्तानुपपत्तिः गुणवत्त्वेन द्रव्यपदादित्याद्यनुपपत्तिः । सह प्रयोगस्येति एकार्थकपदद्वयप्रयोगस्येत्यर्थ इति केचित् मुख्यतेति सा च शक्त्या स्वार्थप्रतिपादकता अत्र आकाशपदस्य शब्दाश्रयस्य शक्यार्थस्य बोधकता न सम्भवति उद्देश्यताविधेयतावच्छेदकयोरैक्ये-

पदशक्तिरिति प्राचीनमतमेव साधु उपलक्षणस्यापि विशिष्टावाचकपदजन्यशाब्दबोधे प्रकारत्वेन कि-ञ्चित् वाधकं न च शब्दाश्रयत्वस्य उपलक्षणत्वे तस्यैवाविशेषात्प्रमेयत्वादेरपि आकाशपदजन्यानु-भवप्रकारतापत्तिरिति वाच्यं तत्प्रकारकशाब्दबोधे तदंशेऽनतिप्रसक्तत्वरूपशक्त्यवच्छेदकत्वावगाहित्वेन उपलक्षिते शक्तिज्ञानस्य हेतुत्वात् इति तन्न आकाशः शब्दाश्रय इति सहप्रयोगस्य मुख्यत्वा-सिद्धा अष्टद्रव्यातिरिक्तद्रव्यत्वाकाशपदवाच्यत्वाद्येक-तररूपेण लक्षणया एव तत्रोपगमात् इति। एवञ्च

नान्वयानुपपत्तेः लक्षणया आकाशपदार्थत्वावच्छिन्नबोधकत्वे अन्व-योपपत्तावपि मुख्यता हान्यापत्तेरिति भावः॥ अनतिप्रसक्तेति नच गगननिष्ठतत्तद्व्यक्तित्वस्य शब्दध्वंसस्य चानतिप्रसक्ततया तत्त-द्रूपेणापि आकाशादिपदाच्छाब्दबोधापत्तिरिति वाच्यं इष्टत्वात्। हेतुत्वादिति एतन्मते आकाशादिपदजन्यबोधविषयतावान् भव-त्वित्याकारक आकाशविशेष्यको भगवत्संकेतः शब्दाश्रयत्वाद्यन्यूना-नतिरिक्तवृत्तिकसङ्केतीयविशेष्यतासम्बन्धेन आकाशपदवान् शब्दा-श्रय इत्याद्याकारकं ज्ञानं हेतुरिति भावः। मुख्यत्वासिद्धेति प्रमाणाभावेणेति शेषः अष्टद्रव्यातिरिक्तेति पृथिवीत्वादिप्रत्येक-धर्मावच्छिन्नभेदाष्टवदित्यर्थः। ननु पदानां तत्तद्धर्मोपलक्षिता-वाचकत्वे सुवर्णादितात्पर्य्येणापि लोकैर्द्रव्यादिपदं प्रयुज्यते तत्र का गतिरित्यत आह एवञ्चेति पदानां उपलक्षितावाचकत्वे चेत्यर्थः।

सुवर्ण-वह्नयोग्य-गवादिविषयरूपपरसामान्यवाच-
कपदघटितं द्रव्यं नास्ति गौर्नास्तीत्यादिकं वाक्यं
प्रयुज्यते तत्र विशेषधर्म्मावच्छिन्ने लक्षणैव विशेष-
धर्म्मस्य सामान्यशब्दावाच्यतया शक्त्या तद्रूपप्रका-
रकबोधानिर्व्वाहात् एवं यत्र दुःखासम्भिन्नसुखत्व-
धानकर्म्मगोत्वादिविशिष्टवाचकं स्वर्गधेन्वादिपदं
केवलसुखत्वगोत्वाद्यवच्छिन्नतात्पर्य्येण प्रयुज्यते
तत्र लक्षणैव शक्त्या प्रवृत्तिनिमित्तैकदेशं परित्यज्य
न बोध इत्यनुभवनिर्व्वाहाय शुद्धतद्धर्म्मप्रकारक-

द्रव्यान्तरवति द्रव्यं नास्तीति प्रयोगो द्रव्यपरत्वेन सम्भवति अपि
तु सुवर्णादिपरत्व एव इति विशेषसूचनाय नञ्पदघटितवाक्यमुक्तं
एवं गवान्तरवति गौर्नास्तीति प्रयोगेऽपि बोध्यम्। प्रथमे शक्यता-
वच्छेदकं परित्यज्य सुवर्णत्वावच्छिन्ने लक्षणा द्वितीये तु शक्यता-
वच्छेदकगोत्वघटितहलवहनयोग्यताविशिष्टगोत्वावच्छिन्ने सा इति
विशेषसूचनाय द्वयमुपात्तम्। बोधानिर्व्वाहादिति तथा च तत्पद-
जन्यतद्धर्म्मपर्य्याप्तप्रकारताकशाब्दबोधं प्रति स्वजन्यबोधीयतद्धर्म्मप-
र्य्याप्तावच्छेदकताकत्वविषयतात्वोभयधर्म्मावच्छिन्नप्रकारताकसङ्केती
यविशेष्यतासम्बन्धेन पदप्रकारकार्थविशेष्यकज्ञानत्वेन हेतुत्वादिति
भावः। न्यूनधर्म्मावच्छिन्नबोधनस्थलेऽपि लक्षणामाह एवमिति
उक्तस्थलवदित्यर्थः दुःखासम्भिन्नेति तत्त्वञ्च स्वाव्यवहितोत्तरत्वस्वा-
वच्छेदकीभूत-शरीरावच्छिन्नत्व-स्वसामानाधिकरण्यैतत्त्रितय सम्ब-
न्धेन दुःखविशिष्टान्यत्वम् शुद्धतद्धर्म्मेति तद्धर्म्मनिष्ठप्रकारनिरूपिता

शाब्दबोधे तदन्यरूपावच्छिन्नत्वानवच्छिन्नबोधविषयत्वीयप्रकारतात्वेन प्रकारताघटितसम्बन्धावगाहिशक्तिज्ञानस्य कारणत्वमुपगन्तव्यं शक्यतावच्छेदके शक्यत्वानभ्युपगन्तुमते तादृशबोधे तद्रूपांशे शक्तिविशेष्यतावच्छेदकता पर्य्याप्त्यवगाहिज्ञानत्वेन हेतुत्वान्नोक्तातिप्रसङ्ग इति तु उक्तानुपपत्त्या हेयम् ॥ यदि च आकाशः शब्दाश्रय इत्यादिवाक्यस्थमाकाशपदं मुख्यमेव निर्द्धर्म्मितावच्छेदककस्य नान्वयबोधः कुत्रापि तदाकाशादिपदात् अष्टद्रव्यातिरिक्तद्रव्यत्वादिना बोधनिर्व्वाहाय विशिष्टा-

सती तदन्यधर्म्मनिष्ठप्रकारत्वानिरूपिता, या विशेष्यता तच्छालिशाब्दबोधं प्रति तद्धर्म्मावच्छिन्नत्वावच्छिन्नतदितरधर्म्मानवच्छिन्नत्वावच्छिन्नस्वजन्यबोधीय-विषयतात्वावच्छिन्नसङ्केतीयप्रकारताकविशेष्यतासम्बन्धेन स्वर्गादिपदवत् सुखमित्याकारकं ज्ञानं हेतुः हेतुता च तद्धर्म्मावच्छिन्नत्वावच्छिन्नत्वावच्छिन्ना सती तदितरधर्म्मावच्छिन्नत्वाभावावच्छिन्नत्वावच्छिन्ना सती स्वजन्यबोधीयविषतात्वावच्छिन्नत्वावच्छिन्ना सती सङ्केतीयप्रकारतात्वावच्छिन्ना-विशेषणता तन्निरूपितविशेष्यतात्वावच्छिन्नसंसर्गताकस्वर्गादिपदत्वावच्छिन्न-प्रकारताक-सुखत्वादिधर्म्मावच्छिन्न-विशेष्यताशालिनिश्चयत्वेन इति ध्येयम् । दीधितिकारमतेऽपि उक्तापत्तिवारणप्रकारं दर्शयति शक्यतावच्छेदक इति आकाशपदस्य स्वरूपतः शक्तिवादिनामाचार्य्याणां मतं परिष्करोति यदि चेति तत्र मुख्यत्वे

वाचककाकाशादिपदस्य प्रकारांशे वाच्यत्वानवगाहि-शक्तिग्रहस्यैव तत्तद्धर्म्मावच्छिन्नविशेष्यकतत्तद्धर्म्म-प्रकारकान्वयबोधहेतुत्वं अगत्या स्वीकार्य्यं विशिष्ट-वाचकगवादिपदस्य च प्रकारांशे वाच्यत्वावगाहि शक्तिज्ञानमेव तत्तद्धर्म्मप्रकारकशाब्दबोधहेतुरिति न शक्तिभ्रमलक्षणाग्रहमन्तरेण गवादिपदात् गोपदवाच्यत्वाद्यवाच्यधर्म्मप्रकारको बोधः आकाशादिपदमिव गवादिपदमपि विशिष्टावाचकमिति भ्रमवतो गवादिपदात् अवाच्यधर्म्मप्रकारकबोध-निर्व्वाहाय तत्तद्धर्म्मप्रकारकशाब्दबोधे तत्तद्धर्म्मसामा-

विवादसूचनाय। प्रकारांश इति स्वजन्यबोधीयविषयतात्वाव-च्छिन्नप्रकारतानिरूपितसङ्केतीयविशेष्यतासम्बन्धेन आकाशपद-प्रकारकशब्दाश्रयत्वावच्छिन्नविशेष्यकज्ञानं शब्दाश्रयत्वप्रकारक-शाब्दबोधं प्रति हेतुः एवं तादृशविशेष्यतासम्बन्धेन आकाशपद-प्रकारकाष्टद्रव्यातिरिक्तद्रव्यत्वावच्छिन्नविशेष्यताकज्ञानं अष्टद्रव्या-तिरिक्तद्रव्यत्वप्रकारकशाब्दं प्रति कारणमिति एवं रीत्यैव गगन-कालादिकशब्देऽपि हेतुहेतुमद्भावो बोध्यः॥ गोपदवाच्यत्वादिति गोपदवाच्यत्वादिरूपो योऽवाच्यधर्म्मः तत् प्रकारक इत्यर्थः। विशिष्टावाचकमितीति किञ्चिद्धर्म्मावच्छिन्नत्वानवच्छिन्ना या तत्त-त्पदजन्यबोधीयविषयतात्वावच्छिन्नासङ्केतीय-प्रकारतातन्निरूपित-विशेष्यतायाः परम्परया निरूपकमितीत्यर्थः॥ तत्तद्धर्म्मसामाना-धिकरण्यमात्रावगाहीति अवच्छिन्नत्वसम्बन्धेन गोपदवाच्यत्वादि-

नाधिकरण्य-भावाव-गाहि-तत्तत्पदवाच्यताव-गाहि-ग्रहस्य हेतुत्वेऽपि तद्धेतुतायां वाच्यतांशे विशेषणा-नन्तर्भावित्वावगाहित्वमप्यवच्छेदकमुपेयतेऽतो अवा-च्यधर्म्मप्रकारकबोधहेतुगवादिपदशक्तिग्रहस्य भ्रम-त्वनियमः अतो नाभ्रान्तपुरुषस्य ततस्तादृशबोध इति। प्राभाकरास्तु धेनुपदस्य धानकर्म्मताविशिष्ट

समानाधिकरणा गवादिपदजन्यबोधीयविषयतात्वावच्छिन्नासङ्के-तीयप्रकारता तन्निरूपितविशेष्यतासम्बन्धेन गवादिपदप्रकारक-गोपदवाच्यादिविशेष्यकं ज्ञानं हेतुरिति भावः॥ विशेषणानन्त-र्भावित्वेति तादृशकारणतावच्छेदककोटौ प्रकारत्वांशे किञ्चिद्धर्म्मा-वच्छिन्नत्वानवच्छिन्नत्वमपि विशेषणीयं तथाच गवादिपदजन्यबो-धीयविषयतात्वावच्छिन्नत्व-किञ्चिद्धर्म्मावच्छिन्नत्वावच्छिन्नत्वाभावो-भयधर्म्मावच्छिन्न-सङ्केतीय-प्रकारतात्वावच्छिन्न-विशेषणताकविशे-ष्यतात्वावच्छिन्नसंसर्गताकगवादिपदत्वावच्छिन्न-प्रकारताकगोपद-वाच्यत्वाद्यवच्छिन्नविशेष्यताकज्ञानत्वेन हेतुतेति वाच्यतावच्छेद-कस्य तादृशविशिष्टावाचकत्वज्ञानाव्यवहितोत्तरगवादिपदज्ञानजन्य-गोपदार्थत्वादिप्रकारकशाब्दत्वं अतो गवादिपदानां गोपदवाच्य-त्वादिविशिष्टवाचकत्वभ्रमजन्यतादृशशाब्दबोधेन व्यभिचारः। वि-शिष्टशक्तिज्ञानकार्य्यकारणभावस्तु पूर्व्वरीत्यैव बोध्यः॥ तत्रापि विशिष्टवाचकत्वज्ञानाव्यवहितोत्तरत्वनिवेशान्न व्यभिचारः इति ध्येयम्॥ भ्रमत्वनियम इति गोपदादिसङ्केतीयप्रकारतायां किञ्चि-द्धर्म्मावच्छिन्नत्वावच्छिन्नत्वसत्त्वेन तदभावावगाहने भ्रमत्वमेवेति। शक्यपार्थिवादिनां गुरूणां मतमुत्थापयति। प्राभाकराश्चिति।

एव शक्तिर्नतु गोत्वमपि विशेषणं गोत्वस्य शक्त्युपा-
धित्वेन शक्तिनियन्त्रकत्वात् धानकर्मत्वस्य महि-
ष्यादिसाधारणत्वेऽपि न धेनुपदात्तद्बोधः । नच

धानकर्मताविशिष्ट एवेति धानकर्मता च दुग्धपानकर्मता दुग्ध-
पानञ्च दुग्धप्रतियोगिकविभागजनकत्वे सति दुग्धप्रतियोगिक-
गलाधःसंयोगानुकूलो यो व्यापारः तद्रूपं तत् कर्मता च तादृश-
विभागानुयोगित्वं तदाश्रयतया गवादिकं कर्म्म अतएव गां
धयति स्तनं पिबतीत्यादिकः प्रयोगः ॥ धानकर्मताविशिष्ट एवेति
ननु गवादिपदानां गोत्वादाविव धेनुपदस्य धानकर्मत्वे कुतो
न शक्तिरिति चेन्न यस्मात् यत् येन विना न भासते तद्भासक-
सामग्र्येव तद्भासयति न तु तद्भानार्थं सामग्र्यन्तरं अतो जातिस्तु
व्यक्तिं विना न भासत इति जातिभासकसामग्री व्यक्तिं भासयति
अतो व्यक्तिभानेन सामग्र्यन्तरकल्पनं धानकर्मता च व्यक्तिं
विनापि भासते अतस्तद्भानसामग्र्या व्यक्तिभानसम्भवाभावात्
तद्भानार्थं धानकर्मताविशिष्टे शक्तिरावश्यकी । एवकारव्यवच्छेद्यं
स्पष्टयति नतु गोत्वमपीति विशेषणमिति शक्ताविति शेषः । ननु
धेनुपदस्य यदि धानकर्मतामात्रविशिष्टे शक्तिस्तदा धानकर्मत्वेन
कुतो न महिष्यादीनां धेनुपदशक्यत्वं न वा तद्बोध इत्यत आह
गोत्वस्येति शक्त्युपाधित्वेनेति सम्बन्धान्तररूपशक्तिकल्पनस्य धर्म्मि-
तावच्छेदकत्वेन शक्त्यभावप्रयोजकाभावप्रतियोगित्वेनेत्यर्थः । तत्तु
अशक्यत्वे सति शक्यतावच्छेदकत्वमिति तु यावत् । शक्ति-
नियन्त्रकत्वात् शक्तिसङ्कोचकत्वात् तत्यन्त्वाप्रयोजकस्वसत्त्वाकत्वा-
दिति तु पर्य्यवसितम् । तद्बोध इति महिष्यादिबोध इत्यर्थः ।

धेनुपदाद्गोत्वप्रकारकबोधस्यानुभविकतया धानक-र्म्ममहिष्यादिमतिदेशे धेनुर्नास्तीति विशेषदर्शिनां प्रयोगस्य मुख्यतया च धेनुपदजन्यबोधे गोत्वभान-मङ्गीकरणीयं तथाच धानकर्म्मत्ववद्गोत्वेऽपि शक्ते-रावश्यकतया अशक्यस्यापि प्रकारतया शाब्दबोधे भानोपगमे द्रव्यत्वप्रमेयत्वादेरपि प्रकारतया शाब्द-बुद्धौ भानापत्तिरिति वाच्यं शाब्दबोधेऽशक्यस्य गोत्वादेः प्रकारतया भाने शक्यतावच्छेदकत्वस्य नियामकत्वात् गोत्वस्य चाशक्यत्वेऽपि शक्यताया-मवच्छेदकताख्यसम्बन्धविशेषोपगमात् द्रव्यत्वादे-स्तथात्वेनातिप्रसङ्गविरहात् नच गोत्वस्य दृप-भादिसाधारणस्यातिप्रसक्ततया शक्तौ नावच्छेदकत्व-

तत्र गोत्वाभावेन शक्त्यभावादिति भावः। ननु धेनुपदजन्यबोधे गोत्वाभाने महिष्यादिमद्देशे धानकर्म्मत्वावच्छिन्नाधिकरणतया धेनुर्नास्तीति प्रयोगानुपपत्तेरतो गोत्वभानमावश्यकं तच्च शक्ति-भ्रमेण लक्षणया वा उपपादनीयमित्यत आह विशेषेति मुख्य-तयेति च। समाधत्ते शाब्दबोध इति नियामकत्वादिति तथाच तत्तत्पदजन्यतत्तद्धर्म्मप्रकारकशाब्दबोधं प्रति तत्तद्धर्म्मावच्छिन्न-शक्यताकत्वसम्बन्धेन तत्तद्धर्म्मावच्छिन्नप्रकारकपदविशेष्यकज्ञानं हेतुरिति भावः। नन्वेवं धानकर्म्मत्वादेः शक्यतानवच्छेदकत्वेन प्रकारतया तस्य भानानुपपत्तिरिति चेन्न अग्रे तस्यापि शक्यताव-

सम्भव इति वाच्यं अवच्छेदकत्वस्य प्रकृते अनतिप्रसक्तत्वानियतत्वान्नियत्वे बाधा न कर्म्मत्वसहितस्यैव तस्यावच्छेदकत्वोपगमात्। अथ गोत्वमेव शक्यं धानकर्मत्वमेव शक्त्युपाधिरिति वैपरीत्यमेव कुतो न स्यात् वस्तुतो धानकर्मत्वापेक्षया लाघवेन गोत्वस्यैव शक्यत्वमुचितं नच गोत्वमतिप्रसक्तं धानकर्म्मत्वन्तु धानकर्म्मव्यक्तिभेदेन भिन्नमिति गोनिष्ठं तदवच्छेदकत्वाङ्गीकारात्। प्रकृते एतन्मते अनतिप्रसक्तत्वानियतत्वादिति अवच्छेद्यस्येति शेषः तथाच अवच्छेद्यानतिप्रसक्तत्वाव्याप्यत्वादित्यर्थः। अतिप्रसक्तधर्म्मेऽपि अवच्छेदकत्वस्वीकारादिति भावः। धानकर्म्मत्वसहितस्येति धानकर्म्मत्वगोत्वयोरैक्यासज्यवृत्त्यवच्छेदकत्वस्वीकारादिति॥ अथ एतन्मते पदपदार्थयोरतिरिक्त एव सम्बन्धः शक्तिपदार्थः नतु ईश्वरेच्छारूपः तैरीश्वरानङ्गीकारेण असम्भवात् तत्प्रतियोगित्वं शक्यत्वं वाच्यं प्रकारान्तरस्य दुर्व्वचत्वात् तच्च धानकर्म्मतावतीव धानकर्म्मत्वेऽपि स्वीकार्य्यं अन्यथा तस्य शक्यत्वानुपपत्तेः एवञ्च धानकर्म्मत्वसहितं गोत्वं तन्न्यूनवृत्त्येव तत्र कुतस्तदवच्छेदकत्वसम्भवः इति चेन्न ताहृशसम्बन्धप्रतियोगित्वमेकं व्यक्तिनिष्ठमपरञ्च धानकर्म्मत्ववृत्ति अतो व्यक्तिवृत्तिप्रतियोगित्वान्यूनानतिरिक्तवृत्तित्वस्य तत्र सत्त्वात् एवञ्च शक्तिप्रतियोगित्वे सति शक्तिप्रतियोगितावच्छेदकत्वं विशेषणविधयाशक्यत्वं बोध्यम् ताहृशसम्बन्धप्रतियोगितावच्छेदकत्वं विशेषणनिष्ठशक्यत्वमिति केचित्॥ विशेषणाविधयाशक्यत्वमेव इतरपदार्थान्वयप्रयोजकं अतो न धानकर्म्मत्वादावितरान्वय इत्यलं विस्तरेण॥ शक्यते अनेति शक्यं

नतिप्रसक्तमिति न वैपरीत्यमिति वाच्यं तस्यातिप्रस-क्तत्वेऽपि शक्यत्वोपगमे क्षतिविरहात् वृषभादि-बोधस्य शक्त्युपाधिधानकर्मत्वस्यापि प्रकारतया वार-णात् नच गोत्वस्य शक्यत्वे जातिशक्त्यैव व्यक्तिभान-सम्भवेनान्यलभ्यतया गवादिपदस्य व्यक्तिशक्त्यवच्छेद-

शक्तिप्रतियोगित्वे सति तदवच्छेदकम्॥ गोत्वस्यैवेति गोत्वे निरव-च्छिन्नशक्यत्वं वक्तुमर्हत्यतो लाघवमिति भावः। जातिशक्त्यैवेति प्रभाकरमते यद् येन विना न भासते तद्भासकस्यैव तद्भासकत्वं तद्भासकान्तरकल्पने प्रयोजनविरहो गौरवञ्चेति तथाच जातिर्व्यक्तिं विना न भासत, इति जातिभासकसामग्र्या एव व्यक्तिभासकत्वात् धानकर्मत्वस्य तु दोग्धृव्यापारप्रयोज्यदुग्धविभागरूपस्य जाति-भिन्नतया व्यक्तिभानं विनापि भानात्त तद्भासकस्य व्यक्तिभासकत्व-मिति भावः। अथ जातिर्व्यक्तिं विना नेत्यस्य व्यक्त्यविषयक-ज्ञानाविषयत्वं पर्य्यवसितं वाच्यं तच्च न सम्भवति यदा गोत्वादिना गवयादेः प्रत्यक्षादिकं तत्र गोत्वं नित्यमित्यत्र ज्ञाने च व्यक्तिं भानं विनापि गोत्वादेर्भानादिति चेन्न व्यक्तिविषयतानिरूपितयत् सांसर्गिकविषयत्वं तदनिरूपितविषयत्वशून्यत्वं व्यक्तिं विनेत्यादेः पर्य्यवसन्नार्थत्वात् अन्यथाख्यात्यनङ्गीकर्त्तृणां, तेषां मते गोत्वा-दिना गवयादेर्ज्ञानं गोत्वादिवैशिष्ट्याभावेन तत् सम्भवात्, गोत्वं नित्यमित्यादावपि गवेतराद्भिन्नत्वरूपगोत्वत्वादेर्भानेन तत्र गवादेर्भानाच्चेति। वस्तुतस्तु व्यक्तिविषयत्वानिरूपितशाब्दविष-यताशून्यत्वं तादृशप्रकारताशून्यत्वं वा तत् पर्य्यवसितार्थो वाच्यः अतो न पूर्व्वोक्त दोषः एतेन गोत्वेन गवयज्ञानोत्तरं गोत्वेन

प्रसङ्गः तथाच धानकर्मत्वस्य शक्यतावच्छेदकत्वानु-पपत्त्या वृषभादिबोधोत्वम्बौ एवेति वाच्यं एतदनुरोधे-नापि व्यक्तौ शक्तिस्वीकारसम्भवात् इति चेन्न यद्ध-र्म्मविशिष्टे शक्तिस्तद्धर्म्माश्रयस्य यावतः शक्यत्वनिय-मेन गोत्वस्य शक्यत्वे वृषभादेरपि तथात्वापत्तेः धानकर्मताविशिष्टाया गोः शक्यत्वे च गोनिष्ठधान-

गवयं जानामीत्यनुव्यवसायादौ गवादेरभानेऽपि न क्षतिर्लाघव-स्येति, धानकर्म्मत्वं पश्येत्यादौ गवादिव्यक्तिभानं विनापि तद्भानान्न धानकर्म्मत्वभासकसामग्र्या व्यक्तिभासकत्वमिति निगर्व्वः। गोत्व-कर्म्मत्वं गोकर्म्मत्वं विना अनुपपन्नमिति ज्ञानसहकृतशाब्द-सामग्रेव व्यक्तिं भासयति इति केचित् ॥ शक्यतावच्छेदकत्वा-नुपपत्त्येति धानकर्म्मत्वे गोत्वनिष्ठशक्यत्वसामानाधिकरण्याभावेन तदसम्भवादित्याशयः॥ तदनुरोधेनापीत्यत्र, अपि शब्दो, व्यक्ता-वित्यनन्तरं योजनीयं तेन व्यक्तावपीति लाभः यावतः इति अन्यथा पश्वादिपदं लोमवति शक्तमिति निश्चयेऽपि एष पशुपद-शक्यो न वा इति संशयापत्तेरिति भावः॥ गोनिष्ठेति धानकर्म्मता-नामाश्रयभेदेन भिन्नत्वादिति भावः। प्रभाकरमते गोत्वस्य धेनुपदाशक्यत्वे धानकर्म्मताविशिष्टगोत्वोपलक्षिते शक्तं धेनुपद-मित्याकारकशक्तिज्ञानस्य कारणत्वं वाच्यं एवञ्च धेनुपदात् धान-कर्म्मगौर्बोद्धव्य इत्याकारकाधुनिकसङ्केतज्ञानस्यापि शाब्दबोध-जनकतया पृथक् कारणत्वं वक्तव्यं, न्यायमते तु तादृशज्ञानस्य शक्तिज्ञानात्मकतया न पृथक कारणत्वं अतस्तन्मते गौरवं भवति

कर्मताव्यक्तीनामेव विशेषणतया तासाञ्च महि-ष्यादिव्यावृत्ततया महिष्यादेश्च शक्यतापत्तिविरहात् इति वदन्ति॥ तन्मते यद्यपि शक्तिज्ञानाधुनिक-सङ्केतज्ञानयोः कारणताभेदेन गौरवं न वाधकं भग-वद्विद्वेषिणां मीमांसकानां शक्तेः सङ्केतानामेकतया तयोरेककारणतायाः कथमप्यसम्भवात्। तथापि गोनिष्ठधानकर्मताव्यक्तीना-मनतिप्रसक्तानु-गतरूपा-भावान्न शक्यत्वसम्भवः। नच सामानाधिकरण्य-सम्बन्धेन गोत्वमेव धानकर्मतात्वसहितं धानकर्म्मत्व-विशेषाणां अनुगमकमिति वाच्यं अशक्येन शक्यानु-गमे सर्व्वत्रैव विशेषणशक्त्युच्छेदप्रसङ्गात्। अति-प्रसक्तेनापि धानकर्म्मतात्वेन विशिष्टे धानकर्म्मता-विशेषे शक्तिग्रहोपगमे लाघवात् गोत्वविशिष्ट

ताहृशगौरवस्य तन्मते सार्व्वत्रिकतया गत्यन्तरविरहेण स्वीकृत-तया तद्दोषेण तन्मतदूषणं सन्दर्भविरुद्धमित्याह तन्मते यद्यपीति न शक्यत्वसम्भव विशेषणविधया शक्यत्वमित्यर्थः तथाच नानाव्यक्ती-नामेकशक्यत्वकल्पनं अनुगतानतिप्रसक्तधर्म्मं विनाऽसम्भवयुक्तिकं, अन्यथा धेनुपदादेरनन्तगवादिव्यक्तिष्वेकशक्तिकल्पनं शक्यतावच्छे-दकं विनापि कुतो न स्यादिति भावः॥ सामानाधिकरण्येति सामानाधिकरण्यसम्बन्धेन धानकर्म्मत्वे वर्त्तमानं सदिति शेषः गोत्वमेवेति वह्नित्वसहितं महानसीयत्वं महानसीयवह्नीनामनु-गमकमिवेत्यर्थः। लाघवादिति धानकर्म्मत्वापेक्षयेत्यर्थः। अनु-

एव गोविशेष एव शक्तिर्धानकर्म्मत्वमेव शक्त्युपाधि-
रित्येवौचितं अननुगतेन तत्तद्धानकर्म्मतात्वेन शक्ति-
ग्रहोपगमे च अपूर्व्वव्यक्त्यलाभप्रसङ्ग इत्यनुपपत्ति-
श्चिन्त्या ॥

इति सामान्यकाण्डम्

गमकेति अनुगतव्यवहारनियामकं, तथाच तादृशधर्म्मेणैव अनु-
गतशक्यतासिध्येदित्यर्थः अथवा धानकर्म्मताविशेषत्त्येकशक्यता
सत्त्वप्रयोजकस्वसत्ताकमिति वा अर्थः । शक्त्युपाधिरिति अश
क्यत्वे सति शक्यतावच्छेदकः तज्ज्ञानजन्यनियतशाब्दबोधप्रकारं
वेत्यर्थः । अपूर्व्वेति शाब्दबोधे पूर्व्वाननुभूतव्यक्त्यविषयकत्वप्रस
इत्यर्थः । अयम्भावः तत्तद्धानकर्म्मताव्यक्तौ शक्तिस्वीकारे व्य
हारेण यद्यद्धानकर्म्मताव्यक्तौ शक्तिर्गृहीता अनन्तरं धेनुप
घटितवाक्यात् तत्तद्धानकर्म्मत्वव्यक्तिरेव स्मरणेन योग्यताविरहा
शाब्दबोधे भानासम्भव इति ।

इति श्रीहरिनाथतर्कसिद्धान्तविरचिता
सामान्यकाण्डटीका ।

PRINTED BY PITÁMBARA VANDYOPÁDHYÁYA
AT THE SANSKRIT PRESS. NO. 62, AMHERST STREET. CALCUT
1885.

# शक्तिवादः।

महामहोपाध्याय गदाधर भट्टाचार्य्य प्रणीतः

पण्डितप्रवर

श्रीहरिनाथ तर्कसिद्धान्तेन विरचितटीकासहितः

तदीयमध्यमात्मजेन

श्रीसर्व्वेश्वरभट्टाचार्य्येण प्रकाशितः।



द्वितीयखण्डम्।

कलिकाता राजधान्यां

२ नवाबदि ओस्तागरलेनस्थ वं राजी-संस्कृतयन्त्रे

श्रीश्यामलीवन्द्योपाध्यायेन मुद्रितं।

शकाब्दाः १८१२।

# विज्ञापनं ।

इह खलु नवद्वीपनिवासिभिः सत्तर्ककाननपञ्चाननवरै-महामहोपाध्याय श्रीमद्भिर्गदाधर भट्टाचार्य्यैः कतिपय पद-पदार्थानां सम्बन्धरूपशक्तिनिर्णयाय शक्तिवादाख्यः परं प्रबन्धोऽयं निरमायि। अस्य च परमकाठिन्यतया पाठार्थिनां पठन-कार्य्यं कथमपि निर्व्वहति। तेषाञ्च, पठनसौकर्य्यार्थं नवद्वीप निवासिना परमपूज्यपाद मदीय पितृदेवेन पण्डितप्रवरेण श्रीमता हरिनाथ तर्कसिद्धान्त भट्टाचार्य्येणैषा विवृतिः कृता, इतः पूर्व्वमस्याः प्रथमखण्डं प्रकाशितञ्च। कियत्कालात्परं, परं लोकं गते च तस्मिन् विवृहरे, अर्थाभावादिनानाप्रति-बन्धकवशाद्द्वितीयखण्डस्य कथमपि मुद्रणसम्भावना नासीत्। परन्तु, पञ्चाप्प्रदेशीयः पण्डितवरः श्रीरामकृष्ण तर्कशास्त्री महाशयो मुद्रणव्ययभारं स्वयमेव स्वीकृत्य, मां प्रोत्साहितवान्। मन्ये तदीयानुग्रहं विना, मुद्रितेयं भवेन्न वेति॥

तथा, अस्मत्पितामह महामहोपाध्याय श्रीमद्गोलक-नाथ न्यायरत्न भट्टाचार्य्याणां शिष्यवरैर्वाराणसीस्थ राजकीय संस्कृत-विद्यालय-भूषण-भूतैस्तार्किक-शिरोमणिभिः श्रीमद्भिः कैलासचन्द्र शिरोमणि भट्टाचार्य्य महाशयैः संशोधनसाहाय्येन परमनुकम्पितोऽस्मि। नोचेदस्याः संस्करणकार्य्यं मम साध्यं कथमपि न भवेत्। तदत्रानुग्राहकैः पाठकवर्गैर्निबन्धस्यास्य मुद्रणदोषाः क्षन्तव्या इत्यलमधिकेनेति शिवं॥

| नवद्वीप<br>पाकाटोल<br>शकाब्दाः १८१२<br>माघस्य २२ | प्रकाशकः<br>श्रीसर्व्वेश्वर शर्म्मा। |
|---|---|

## शक्तिवादसामान्यकाण्डस्य शुद्धिपत्रं ।

### ( मूलस्य )

| पृष्ठा | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| २१ | ८ | तज्ज्ञानप्रकारत्वं | तज्ज्ञानप्रकारत्वं तद्बोधकत्वं |
| २७ | ३ | बोधोपपत्त्या | बोधोत्पत्त्या |
| ४७ | १ | पदाद्युक्त्या | पदाद्युक्त्या |
| ४७ | ७ | कारणान्तर्य्यस्य | कारणतानन्तर्य्यस्य |
| ६४ | ६ | तद्धर्म्मांशे | तद्धर्म्मांशे |
| ६८ | १ | विशेष्यतावच्छिन्न | विशेष्यतात्वावच्छिन्न |
| ६८ | २ | घटत्वावच्छिन्न | घटत्वावच्छिन्नांशे |
| ६८ | ११ | पदान्तरकत्वबोधकपदानुपस्थित | पदान्तरानुपस्थित |
| ७८ | १ | गवादिविषयरूप | गवादिरूपविशेष |
| ८० | २ | विशेष्यक | विशेष्यकस्य |
| ८६ | २ | वृषभादिबोधोत्पत्त्या | वृषभादिबोधो दुर्व्वारः । |
| ८७ | ५ | नामेक | नामक |

### टीकायाः ।

| पृष्ठा | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ८ | १२ | विषयताश्रयः | विषयताश्रयः पदं । |
| ६ | १६ | ईश्वरेच्छीय विशेष्यता | ईश्वरेच्छीया या विशेष्यता |
| १० | १५ | नचापभ्रंशशब्दस्य • | नन्वपभ्रंशशब्दस्य |
| २२ | ६ | धर्म्मत्वमर्थः | धर्म्मवत्त्वमर्थः |
| २८ | १७ | स्वभिन्नत्व स्वव्यापकत्व | स्वभिन्नत्व स्वाव्यापकत्व |
| ५१ | १५ | तात्पर्य्यज्ञानेन चेति | तात्पर्य्यज्ञाने चेति |
| ६४ | २० | स्वरूपमिति | त्वरूपमिति |
| ६४ | २१ | गाढ़त्वस्वरूप | गाढ़त्वरूप |
| ७३ | २२ | पदीपश्चाप्येति | पदीपश्चाप्यर्थः । |
| ८० | १७ | हेतु हेतुमभावो | हेतु हेतुमद्भावो । |

# शक्तिवादद्वितीयखण्डस्य शुद्धिपत्रं ।

## ( मूलस्य )

| पृष्ठा | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| १०६ | ५ | तद्दनात् | तद्दलात् । |
| १०६ | ७ | प्रसवकबोधे | प्रकारकबोधे |
| १०७ | ३ | प्रकार सङ्केत | प्रकारक सङ्केत । |
| १०७ | ५ | ैकत्वनिवेशात, | ैकत्र निवेशात् । |
| १११ | १ | विशिष्ट | विशिष्य । |
| १११ | ७ | नामशक्यता | नामपदशक्यता |
| ११२ | ३ | नपुंसा | येन पुंसा |
| ११५ | ८ | वुद्धिविषयत्वादिना | वुद्धिविशेष विषयत्वादिना । |
| ११७ | ५ | अरणनतुभाविकतया | अरणस्यानुभविकतया |
| ११८ | ६ ७ | अपि अनुगत स्वप्रयोगानुकूल वक्तृवुद्धिविषयतावच्छेदकत्व | अपि विषयताया अनुगत |
| ११९ | ८ | घटपदादि | घटपटादि |
| १२० | १ | प्रकारीभूत नाना लोमादि | प्रकारीभूत लोमादि |
| १२० | १२ | नुच्यते | नुच्यन्ते |
| १२० | १४ | गम्यते | गाह्यते |
| १४८ | ६ | सामान्य प्रत्या | सामान्य प्रत्यासत्त्या |

## टीकायाः ।

| पृष्ठा | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| १०० | ९ | अवच्छेदकत्वाभानात | अवच्छेदकत्वभानात् । |
| १०१ | १ | उभयत्वप्रकारेण | उभयप्रकारेण । |
| १०२ | ८ | प्रकृत्यांशे | प्रकृत्यांशे |
| १०२ | १४ | भवतापि स्वीकार्य्या | भवतापि कथं स्वीकार्य्या। |
| १०२ | १६ | सति मर्थस्य | सति यत मर्थस्य |
| १०४ | १२ | सङ्केतजन्यस्य | सङ्केतज्ञानजन्यस्य |
| १०७ | ७ | पुष्पवत्पदं | पुष्पवत्पदपदं |

| पृष्ठा | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ०७ | १७ | समूहालम्बनात्मकं | समूहालम्बनानात्मकं |
| १०९ | ७ | चितयं | द्वितीयं |
| ०९ | | यत् स्वार्थवत् | सत् स्वार्थवत् । |
| १०९ | १४ | तस्यैव | विधेयान्वयि तस्यैव |
| १०९ | १५ | पदस्यैकशक्ति | पदनिष्ठैकशक्ति |
| ११० | १६ | एकोच्चरितादपि | सकृदुच्चरितादपि |
| १११ | १२ | तादृशबोध्य भाने | तादृशबोधे भाने |
| ११५ | १२ | बुद्धिविषयत्वादे | बुद्धिविशेषविषयत्वादे |
| ११७ | २ | दृष्टान्तबोधतया | दृष्टान्ततया |
| ११८ | ४ | सामान्यलक्षणामङ्गीकुर्व्वता | सामान्यलक्षणामनङ्गीकुर्व्वता |
| १२२ | ७ | शाब्दबोधप्रकारतया | शाब्दबोधे प्रकारतया |
| १२२ | १२ | विशेषणत्वस्य | विशेषणत्वस्यैव |
| १२६ | ११ | स्वरूपतः शक्यतावच्छेदकता | स्वरूपतः शक्यतावच्छेदक शक्यतावच्छेदकता |
| १२८ | ७ | प्रक्लृप्त | प्रसुप्त |
| १२९ | १० | बोधस्य | मोक्षस्य |
| १४१ | २ | सम्बोध्यतेति, | सम्बोध्यतेति, तयोः |
| १४१ | ८ | त्वयैवेत्यर्थः | त्वमेवेत्यर्थः |

# सटीक शक्तिवादः।



यथा नानाधर्म्मविशिष्टैकधर्म्मिवाचकात् शक्तिभ्रमात: नैकधर्म्मं परित्यज्य, धर्म्मी प्रतीयते। तथा, चन्द्रत्वसूर्य्यत्वादिनानाधर्म्मविशिष्टनानाधर्म्मिवाचकपुष्पवन्तादिपदाच्चन्द्रत्वादिकं परित्यज्य, न सूर्य्यत्वादिप्रकारको बोधः। अथात्र हरिपदादिशक्तिज्ञानवद्दिवाकरः पुष्पवन्तपदवाच्य इत्याकारकशक्तिज्ञानात् केवलसूर्य्यत्वप्रकारको बोधो दुर्वारः। न च पुष्पवन्तपदशक्तिज्ञानेन सूर्य्यत्वादिप्रकारकशाब्दबोधजनने चन्द्र-

पुष्पवन्तादिपदानां शक्त्या चन्द्रत्वसूर्य्यत्वादिप्रत्येकधर्म्मेण नियतचन्द्रसूर्य्यादुभयबोधकत्वस्यानुभवं दृष्टान्तेन द्रढ़यति, यथा नानेति। पदादिति, दुःखासम्भिन्नत्वसुखत्वोभयधामकर्म्मत्वगोत्वोभयादिविशिष्टवाचक स्वर्गधेन्वादिपदादित्यर्थः। पुष्पवन्तादिपदादिति, आदिपदात् दम्पतिपित्रादिपदपरिग्रहः। चन्द्रत्वसूर्य्यत्वयोः प्रत्येकधर्म्मेण वाच्यत्वे पुष्पवन्तपदं सूर्य्ये शक्तमित्याकारादिवाच्यत्वग्रहस्यापि प्रमात्वेन भ्रमान्तस्यापि तादृशज्ञानात् हर्य्यादिपदजन्यः केवलविष्णादेर्बोध इव शुद्ध सूर्य्यादिबोधो दुर्व्वारः, कारणविरहादर्शनादित्याशङ्कते, अथेति। कारणाभावं सम्पादयन् कार्य्योत्पत्तिवारणमाशङ्कते न चेत्यादि। नानार्थतायहदशायामिति, सूर्य्यत्वावच्छिन्ने चन्द्रत्वावच्छिन्ने च पृथग्वाचकताग्रहदशायामित्यर्थः।

त्वादिप्रकारकशक्तिज्ञानस्यापि सहकारितोपगमा-
न्नातिप्रसङ्ग इति वाच्यं, तस्य हर्य्यादिपदवन्नानार्थत्व-
ग्रहदशायां भ्रान्तस्य केवलसूर्य्यत्वादिप्रकारक-
बोधस्यापुत्पत्तेः। एवं तत्पदस्य हर्य्यादिपदवन्नाना-
धर्म्मावच्छिन्नवाचकतया नानार्थत्वप्रसङ्गो दुर्वारः।
न चार्थद्वये तस्यैकस्या एव शक्तेरुपगमान्न नानार्थता
नानाशक्तिमत एव नानार्थत्वोपगमादिति वाच्यं।
शक्यतावच्छेदकभेदेन शक्तिभेदस्यावश्यकत्वात् अव-

सहकारित्वोपगमादिति, पुष्पवन्तपदशक्तिग्रहजन्यसूर्य्यत्वप्रकारक-
शाब्दबोधं प्रति पुष्पवन्तपदं चन्द्रत्वावच्छिन्ने शक्तमिति ज्ञानस्य
पुष्पवन्तपदशक्तिज्ञानजन्यचन्द्रत्वावच्छिन्नविषयकशाब्दं प्रति पुष्प-
वन्तपदं सूर्य्ये शक्तमिति ज्ञानस्य च फलानुरोधेन कारणत्वकल्प-
नादित्यर्थः। उत्पत्तेरिति, तथाच तदानीं चन्द्रत्वप्रकारकशक्ति-
ज्ञानादेरसत्त्वेन व्यभिचारात् तादृशज्ञानस्य सहकारिताया वक्तु-
मशक्यत्वादिति भावः। तादृशनानार्थताग्रहस्य उक्तसहकारि-
तायामुत्तेजकत्वोपगमेन व्यभिचारवारणसम्भवादाह, एवमिति।
नानाधर्म्मावच्छिन्नेति, एकधर्म्मिविशेषणतानापन्ननानाधर्म्माव-
च्छिन्नेत्यर्थः। तेन स्वर्गादिपदानां न तदापत्तिः। नानार्थतापत्तिः,
नानार्थशब्देन व्यवहारस्य तापत्तिः। व्युत्पन्नानां पुष्पवन्तशब्दो नानार्थ
इति व्यवहाराभावादिष्टापत्तेरयोगादिति भावः। यत्तु नाना-
र्थतेत्यस्य नानाशक्यतावच्छेदकतात्वेत्यर्थ इति। तत्तुच्छं, तादृ-
शार्थस्य इष्टत्वेनापत्तेरयोगात्। नानाधर्म्मावच्छिन्नवाचकतयेति,

च्छेदकभेदस्यावच्छेद्यभेदनियतत्वात्। अन्यथा, हर्य्यादिपदेष्वपि शक्त्यैक्यापत्तेः। अत्र शक्याख्यपदपदार्थसम्बन्धान्तरवादिमीमांसकानुयायिनः। यथाधामहेत्वभिधानस्यासङ्गत्यापत्तेश्च। शक्यतावच्छेदकभेदेनेति, अत्र अवच्छेदकत्वं निरवच्छिन्नं। तदाश्रयश्च विशेषणविशेष्यतावच्छेदकादिभावानापन्नो ग्राह्यः। तेन पद्मादिपदानां शक्यतावच्छेदकस्य लोमादेः स्वर्गादिपदानां शक्यतावच्छेदकस्य दुःखासम्भिन्नत्वसुखत्वादेर्भेदेऽपि न क्षतिः। अवच्छेदकपदस्यावच्छेदकतापरत्वेन लोमादौ दुःखासम्भिन्नत्वसुखत्वादौ च अवच्छेदकताया ऐक्येन न क्षतिरित्यप्याहुः॥ अवच्छेद्यभेदनियतत्वादिति, अत्र तादृशभेदनियतत्वं न तादृशभेदप्रयोज्यत्वं भेदस्य नित्यत्वेन तदसम्भवात्। नापि तादृशभेदव्याप्यत्वं। तत् अवच्छेद्यभेदाभाववति अवच्छेद्ये अवच्छेदकभेदस्य सत्वेन तद्विरहात्। नापि तादृशभेदाभाववद्भिन्नानुयोगिकस्वरूपसम्बन्धावच्छिन्नं तादृशभेदाभावव्यापकभेदप्रतियोगितावच्छेदकत्वं तत् इत्यपि सम्यक्। तथा सति, हर्य्यादिपदानामपि विष्णुसिंहादिष्वेकशक्तिकत्वेऽपि तादृशव्याप्यत्वसम्भवेन तस्य शक्तिभेदासाधकतया अकिञ्चित्करत्वापत्तेरतो दुर्व्वचमादिति चेन्न। यतो नियतत्वं व्याप्यत्वमेव तच्च अवच्छेद्यभेदाभावव्यापकभेदप्रतियोगितावच्छेदकत्वं। अत्राभावश्च स्वप्रतियोगिनिरूपितावच्छेदकतावद्भिन्नानुयोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः। भेदाभाववत्वञ्च, स्वप्रतियोगिभिन्नानुयोगिकस्वरूपसम्बन्धेन ग्राह्यं। स्वं अवच्छेद्यभेदः। अतो न हर्य्यादिपदस्य नानाशक्यतावच्छेदकेषु एकशक्यतावच्छेदकत्वमसम्भवः। न वा अवच्छेदकभेदे व्याप्यत्वहानि-

कर्म्मत्वगोत्वादिरूपशक्यतावच्छेदकभेदेऽपि धेन्वादिपदानां न शक्तिभेदः, अवच्छेदकताया व्यासज्यवृत्तित्वात् । तथा प्रकृते चन्द्रसूर्य्यत्वयोर्व्यासज्यवृत्तिशक्यतावच्छेदकतास्वीकारान्न शक्तिभेदः । नवा एकं परित्यज्य अन्यप्रतीतिः । केवलसूर्य्यत्वादिप्रकारकबोधे केवलतद्धर्म्मनिष्ठशक्यतावच्छेदकतापर्य्याप्तग्रवगा-

रिति । एवञ्च यो यदवच्छेदकः स तद्भेदव्याप्यभेदप्रतियोगिताक इति व्याप्तौ तात्पर्य्यमिति । ननु धेन्वादिपदानां शक्यतावच्छेदकभेदेऽपि न शक्तिभेद इति तादृशव्याप्तौ व्यभिचार इति चेन्न । गोत्वविशिष्टधानकर्म्मत्वादौ शक्यतावच्छेदकत्वकल्पनात् पूर्व्वोक्तविशेषणेन धर्त्तुमशक्यत्वाच्चेति भावः । नव्यास्तु अवच्छेदकभेदसमसंख्यकावच्छेद्यभेदकत्वादिति नियतत्वादित्यन्तस्यार्थ इति प्राहुः । व्यासज्यवृत्तित्वादिति, एकपर्य्याप्तिसम्बन्धेन उभयादिवृत्तित्वादित्यर्थः । न शक्तिभेद इति, तथाच शक्यतावच्छेदकताभेदस्य शक्तिभेदनियामकत्वादिति हृदयम् । परित्यज्य, अविषयीकृत्य । ननु, न वा एकं परित्यजाग्न्यप्रतीतिरिति न युक्तं । पुष्पवन्तपदशक्यतावच्छेदकत्वस्य सूर्य्यत्वचन्द्रत्वोभयपर्य्याप्तित्वेन, सूर्य्यत्वेऽपि पर्य्याप्तमतः पुष्पवन्तपदं सूर्य्यत्वनिष्ठावच्छेदकताकशक्यताकमित्यादिशक्तिप्रमातः सूर्य्यादिपदादिव केवलसूर्य्यादिबोधस्य दुर्व्वारत्वादित्यत आह, केवलेत्यादि । इतरप्रकारतायाः कार्य्यतावच्छेदकत्वाभाव सूचनाय प्रथमकेवलपदमिति केचित् । तन्न सम्यक् । सूर्य्यत्वपर्य्याप्तप्रकारताकशाब्दं प्रति सूर्य्यत्वमात्रपर्य्याप्तावच्छेदक-

छिन्नानस्य हेतुत्वात्, चन्द्रसूर्य्यत्वोभयांशे शक्यता-
ताकशक्यताकं पदमिति ज्ञानत्वेन हेतुत्वे यदा पुष्पवन्तपदं
चन्द्रत्वसूर्य्यत्वोभयपर्य्याप्तावच्छेदकताशक्तिमत् इत्यादिज्ञानाचन्द्र-
सूर्य्योभयविषयशाब्दबोधो जायते, तत्र सूर्य्यत्वमात्रपर्य्याप्तावच्छेद-
कताकशक्तिज्ञानस्यासत्वेन तादृशशाब्दस्य च कार्य्यतावच्छेदका-
क्रान्तत्वेन च व्यभिचारापत्तेः। यदि तु केवलेत्यनेन सूर्य्यत्वभिन्न-
निष्ठप्रकारताशून्यत्वे सति सूर्य्यत्वनिष्ठप्रकारताकशाब्दं प्रति
सूर्य्यत्वमात्रपर्य्याप्तावच्छेदकताक शक्तिज्ञानत्वेन हेतुत्वं कल्प्यते,
तदापि सूर्य्यपदं सूर्य्यत्वमात्रपर्य्याप्तावच्छेदकताकशक्यताकं
चन्द्रपदञ्च, चन्द्रत्वमात्रपर्य्याप्तावच्छेदकताकशक्यताकमित्यादि-
ज्ञानात् सूर्य्याचन्द्रमसावित्यादिवाक्यात् चन्द्रसूर्य्योभयविषयकशाब्द-
बोधानुपपत्तिरिति। अत वदन्ति सूर्य्यत्वनिष्ठप्रकारताभिन्नं यत्
प्रकारताविशिष्टप्रकारत्वं तच्छून्यत्वे सति सूर्य्यत्वनिष्ठप्रकारता-
शालिशाब्दं प्रति सूर्य्यत्वमात्रपर्य्याप्तावच्छेदकताकशक्यताक-
सूर्य्यादिपदज्ञानस्य हेतुत्वात्। प्रकारतावैशिष्ट्यञ्च,स्वभिन्नत्व,स्वप्रयो-
जकशक्तिज्ञानप्रयोज्यत्वोभयसम्बन्धेन। स्वं प्रकारत्वं। पदान्तरजन्य-
चन्द्रत्वादिप्रकारतायां स्वप्रयोजकशक्तिज्ञानप्रयोज्यत्वाभावान्ना-
संग्रहः। एवमन्यत्राप्यूह्यम्। केचित्तु,हेतुत्वादिति पञ्चम्यन्तान्तस्य
अत इति पञ्चम्यन्तस्य च, द्वयोः न सूर्य्यत्वावच्छिन्नान्वयबोध-
प्रसङ्ग इत्यनेनान्वयः। स्वज्ञानस्य च इत्यत्रस्य चकारस्य अत इत्यन-
न्तरं योजनया तत् समर्थनीयं। पञ्चम्यन्तान्तस्य प्रथमस्योपादानात्।
पुष्पवन्तपदस्य तादृशशक्तिभ्रमेण चन्द्राद्यनुपस्थितिकालेऽपि
केवलसूर्य्यस्यान्वयबोधानुभवाचान्वयबोधस्येत्यस्याप्युभयदुष्टिकत्व-
शङ्कानिरास इत्याहुः। यत्तु हेतुत्वादित्यनन्तरं नाम्नान्तानां

वच्छेदकतापर्य्याप्त्यवगाहिज्ञानस्य चोभयप्रकारक-बुद्धित्वं कार्य्यतावच्छेदकं। अतस्तादृशशक्तिज्ञानाच्चन्द्र-पुष्पवन्तपदशक्तिभ्रमात: केवलसूर्य्यत्वप्रकारेण बोध इति पूरणसम्ब-लितव्याख्यानं। तदसत्। उक्तप्रकारेणान्वयसम्भवे पूरणेन व्याख्या-नस्यान्याय्यत्वात्। उभयप्रकारकबुद्धित्वमिति,चन्द्रत्वप्रकारत्वे सति सूर्य्यत्वप्रकारत्वशालिशाब्दत्वमित्यर्थः। ननु पुष्पवन्तपदादिव घटादिपदादपि शक्तिभ्रमेण लक्षणया वा चन्द्रत्वसूर्य्यत्वोभय-प्रकारकशाब्दोदयात् व्यभिचारवारणाय तत्तत्पदशक्यादिज्ञाना-व्यवहितोत्तरत्वस्य कार्य्यतावच्छेदककोटावश्यं निवेशनीयत्वेन तादृशप्रकारकत्वादेः कार्य्यतावच्छेदककोटौ कुतः प्रवेश इति चेत्, मैवं। मीमांसकमते तत्तच्छब्दजन्यबोधे तत्तच्छब्दस्यापि भानाङ्गीकारेण तत्तच्छब्दविषयकतादृशशाब्दबोधं प्रति तत्तच्छब्द-शक्तिज्ञानस्य हेतुतया व्यभिचारवारणसम्भवात् लक्षणाग्रहस्याहेतु-त्वाच्च। अथवा यत्र आदौ केवलसूर्य्यत्वावच्छिन्ने पुष्पवन्तपदस्य शक्तिभ्रमः, चन्द्रत्वावच्छिन्ने पदार्थान्तरस्य बाधनिश्चयात्मकः ततः पुष्पवन्तपदं चन्द्रसूर्य्योभये शक्तमिति शक्तिग्रहः, चन्द्रे पदा-र्थान्तरसम्बन्धाभावज्ञानं भ्रम इति वाक्यविषयकस्मरणात्मकस्ततः चन्द्रे योग्यताज्ञानविरहेण केवलसूर्य्यस्य शाब्दबोधः योग्यता-ग्रहात्मकः ततः चन्द्रसूर्य्योभयस्य बोधः, तत्क्षणे केवलसूर्य्यस्यापि बोधप्रसङ्गः। तादृशशाब्दस्य उभयशक्तिग्रहस्याव्यवहितोत्तरत्ववत्त्वेन कार्य्यतावच्छेदकाक्रान्तत्वात्. योग्यताज्ञानाद्यात्मकापादक-सत्त्वाच्च। चन्द्रत्वप्रकारत्वस्य सूर्य्यत्वप्रकारत्वस्य च कार्य्यतावच्छेद-कत्वे च, केवलसूर्य्यत्वप्रकारकबोधस्य पुष्पवन्तपदशक्तिग्रहकार्य्य-तावच्छेदकशून्यत्वमेव यतो नापत्तिरिति। भ्रम इति तादृश-

**त्वाद्यवच्छिन्नान्वय-बोधौपयिकयोग्यताज्ञानाद्यसत्त्वे न सूर्य्यत्वाद्यवच्छिन्नान्वयबोधप्रसङ्गः। नानार्थपदाच्च प्रत्येकधर्म्मावच्छिन्नस्यापि प्रतीत्या तत्र प्रत्येकमेवावच्छेदकतापर्य्याप्तेरवश्योपगन्तव्यतया शक्यताव-**

धर्म्मद्वयस्य पुष्पवन्तपदशक्तिज्ञानकार्य्यतावच्छेदकतापर्य्याप्त्यधिकरणत्वादित्यर्थः। न सूर्य्यत्वावच्छिन्नान्वयबोधप्रसङ्ग इति, पुष्पवन्तौ उष्णकिरणाविति वाक्यात् चन्द्र उष्णकिरणाभाववानिति बाधनिश्चयकाले सूर्य्य उष्णकिरण इति बोधो न भवतीत्यर्थः। शुद्धसूर्य्यत्वप्रकारकशाब्दत्वस्य तादृशशक्तिज्ञानकार्य्यतावच्छेदकत्वविरहादिति भावः। नानार्थपदात्, हर्य्यादिपदात्। प्रत्येकमित्यस्य सप्तम्यन्तस्य विवरणं त्वत्सूर्य्यत्वाद्यैकैकस्मिन्नित्यर्थः। ननु महानसीयत्व वह्नित्वादिधर्म्मद्वयादिषु एकप्रतियोगितावच्छेदकत्वं विना, महानसीयवह्निर्नास्तीत्यादिप्रतीतेः प्रत्येकाभावावगाहिप्रतीतितो वैलक्षण्यं नोपपद्यते, अतो महानसीयत्ववह्नित्वादिधर्म्मद्वयादिषु एकावच्छेदकत्वं सिध्यतु। पुष्पवन्तपदशक्यतावच्छेदकत्वावगाहिनो विलक्षणा प्रतीतिर्नास्ति, अतः चन्द्रत्वसूर्य्यत्वधर्म्मद्वयादिष्वेकावच्छेदकत्वं कुतः सिध्येदित्याशङ्कते, अथेत्यादि। अवच्छेदकताग्राहकेति, अवच्छेदकतासाधकप्रत्यक्षादिनेत्यर्थः। धर्म्मिनिष्ठैकविशेष्यतेति, तथाच वह्निमति पर्व्वते वह्निशून्ये च महानसे महानसीयवह्निर्नास्तीति प्रतीतिर्जायते। किन्तु महानसीयो नास्ति वह्निर्नास्ति इति प्रतीतिस्तु न जायते, अत एतत् समूहालम्बनप्रतीतितः पूर्व्वप्रतीतौ वह्निनिष्ठैकविशेष्यतानिरूपितः प्रकारताख्यो विशेषः स्वीकार्य्य इति। वह्निनिष्ठैकप्रतियोगिताव-

च्छेदकताभेदेन शक्तिभेदः। अथावच्छेदकताग्राहक-मानेन धर्म्मिनिष्ठैकविशेष्यतानिरूपितविशेषणता-पन्नेषु नानाधर्म्मेष्ववच्छेदकत्वपर्य्याप्तिर्गृह्यते। अतो महानसीयो नास्ति वह्निर्नास्तीत्याकारकं महानसी-यत्ववह्नित्वादिपुरस्कारेण पृथक् पृथक् प्रतियोगि-विषयकं ज्ञानं महानसीयत्ववह्नित्वादिपर्य्याप्तप्रति-योगितावच्छेदकताकं विशेषाभावं नावगाहते। अपि तु शुद्धवह्नित्वावच्छिन्नाभावादिकमेवेति। कथं दिवा-करनिशाकरशक्तं पुष्पवन्तपदमित्यादिशक्तिग्रहे चन्द्र-त्वसूर्य्यत्वोभयस्मिन् शक्यतावच्छेदकत्वपर्य्याप्तिभानं। तत्र धर्म्मिणोश्चन्द्रसूर्य्ययोर्भेदेन तन्निष्ठविशेष्यताया ऐक्यासम्भवादिति चेन्न। यतो यत्रावच्छेदकीभूत-व्यासज्यवृत्तिधर्म्मान्तरधर्म्मितावच्छेदकतया धर्म्म-द्वयादेर्भानं, तत्र विभिन्नधर्म्मिविशेषणतापन्नेष्वपि

च्छेदकतापर्य्याप्त्यधिकरणत्वं महानसीयत्ववह्नित्वोभयस्मिंस्तत्रैव। अन्यथा, वह्निमति पर्व्वतादौ तादृशप्रतीति र्न स्यादिति भावः। दिवाकरनिशाकरशक्तमित्यादि, अयम्भावः एकधर्म्मिणोऽनेकविशे-षणकतया विषयभानेन तादृशशक्तिज्ञानस्य समूहालम्बनतया अनु-भूयमानत्वेन न एकशक्तिविषयत्वसम्भवः। दृष्टान्तान्तरेण उभ-यत्वभानाङ्गीकारेण च समूहालम्बनज्ञानात् तस्य विलक्षणत्व-स्थापनेनोत्तरयति यतो यत्रेत्यादिना। अवच्छेदकीभूतेति, निरूपित-

तावद्धर्म्मेषु एकावच्छेद्यनिरूपितावच्छेदकतापर्य्याप्तिः प्रतीयते। कथमन्यथा घटपटौ न स्त इत्याकारकोभयत्वावच्छिन्नाभावप्रतीतौ घटपटादिरूपप्रतियोगिविषयताया भेदेऽपि अभावविषयताया ऐक्ये न समूहालम्बनविलक्षणायां उभयत्वादिधर्मितावच्छेदकतया भासमानघटत्वादिषु तादृशाभावप्रतियोगितावच्छेदकत्वपर्य्याप्तिभानम् । एवञ्च दिवाकरनिशाकरयोः

त्वादिसम्बन्धावच्छिन्नप्रकारतावच्छेदकीभूतत्यर्थः। तादृशशक्तिज्ञाने एकविशेष्यताकत्वस्वीकारे बाधकमाह,घटपटौ न स्त इति। तादृशप्रतीतौ उभयत्वादिव्यासज्यवृत्तिधर्म्म एव द्वयोरेकमित्यादिरीत्या घटत्वावच्छिन्ने पटत्वावच्छिन्ने च भासमानं सत् तत्तद्धर्म्मावच्छिन्नप्रतियोगितावच्छेदकतया भासते अतस्तादृशप्रतीतिः प्रत्येकधर्म्मावच्छिन्नप्रतियोगिताकाभाववती विलक्षणोभयाभावावगाहिनी। घटत्वादिप्रत्येकधर्म्मावच्छिन्नप्रकारताकनियमेन न बाध्यते। तस्माच्च घटत्वपटत्वोभयत्वादित्रितयादिधर्म्मपर्य्याप्तैकावच्छेदकतानिरूपितैकप्रतियोगितासिद्धिरिति भावः। एतच्च प्रात्यक्षिकप्रतीत्यभिप्रायेण। तादृशशाब्दे तु घटपटोभयत्वावच्छिन्ने वृत्तित्वाभावः प्रतीयते। अन्यथा स्त इत्यत्र द्विवचनानुपपत्तेः। आख्यातार्थविशेष्यबोधकपदस्यैव तत्समानवचनकत्वनियमादिति शाब्दाभिप्रायेणापि एतत्सम्भवाच्च। उपलक्षणस्येति अभावप्रतियोगितावच्छेदकतानापन्नस्येत्यर्थः। अन्यथा महानसीयवह्निर्नास्ति विशिष्टसत्ता नास्तीत्यादिप्रतीतेरपि वह्न्यादिसामा-

शक्तमेतत्पदमित्याकारकग्रहे शक्तिविषयताया ऐक्येन समूहालम्बनविलक्षणे उभयत्वधर्मितावच्छेदकता-पन्नचन्द्रत्वसूर्य्यत्वयोरेव शक्यतावच्छेदकत्वपर्य्याप्ति-भानमविरुद्धमिति न दोषः । न चैवमुभयाभावप्रति-योगितायां उभयत्वस्येव प्रकृते उभयत्वस्यापि अव-च्छेदककोटिप्रवेशप्रसङ्ग इति वाच्यं, अभावबुद्धौ प्रतियोग्यंशे उपलक्षणस्याप्रकारत्वनियमात् उभ-यत्वस्य प्रतियोगितावच्छेदकत्वध्रौव्यात् शक्तिग्रहे च शक्यांशे उपलक्षणस्य उभयत्वस्य प्रकारत्वोपगमे न तस्य शक्यतानवच्छेदकत्वात् । अस्तु वा प्रकृते

थाभावावगाहितापत्तेरिति भावः । उपलक्षणस्य शक्यतानव-च्छेदकत्वनियतशक्तिनिष्ठविशेष्यताकप्रकारताश्रयस्य शक्यतान-वच्छेदकत्वादिति, तदादिपदानां बुद्धिस्थत्वादेरिवेति भावः । ननु उभयत्वस्य शक्यांशे उपलक्षणतया भानोपगमेन शक्तेरैक्यकल्पना यदि स्यात्, तदा धेन्वादिपदानामपि गोत्वधानकर्म्मत्वादेरपि उपलक्षणतया गवादिनानार्थ्येषु शक्तेरैक्यं स्यात् । स्याच्च,गोत्व-धानकर्म्मत्वादौ शक्यतावच्छेदकत्ववैयर्थ्यं इत्यत आह,अस्तु वेति । उभयत्वसहितमिति,तथाच उभयत्वचन्द्रत्वसूर्य्यत्वेतत्त्रितयमेव पुष्प-वन्तपदशक्यतावच्छेदकमित्यर्थः । ननु उभयत्वस्यापि शक्यताव-च्छेदकत्वे पुष्पवन्तपदेनैव उभयत्वावच्छिन्नोपस्थापनात् पुष्पवन्ता-वित्यत्र द्विवचनोपस्थाप्योभयत्वस्य तत्रानन्वयप्रसङ्गः,निराकाङ्क्षत्वा-दित्यत आह द्वावित्यत्रेति । सकृदेव भानमिति,न तत्र द्विवचनो-

उभयत्वसहितमेव चन्द्रत्वसूर्य्यत्वोभयं शक्यताव-
च्छेदकं द्वावित्यत्र इव पुष्पवन्तावित्यत्रापि प्रकृति-
विभक्तिभ्यामुपस्थापितस्य द्वित्वस्य सकृदेव भानं विरु-
द्धयोरेकावच्छेदकत्वपर्य्याप्तिरपि घटत्वपटत्वाद्यो-

स्थाप्य द्वित्वान्वयः। अन्वयबोधानुत्पत्ते तत्र इष्टत्वादिति भावः।
प्रतियोगितावच्छेदकतापर्य्याप्तिवदिति तथाच परस्परं विरुद्धेऽपि
घटत्वपटत्वादौ उभयत्वादिधर्म्मितावच्छेदकत्वं प्रतीतिबलात् स्वी
करणीयं स्वीकार्य्यञ्च उभयत्वादिसहितविरुद्धघटत्वपटत्वादौ एक
प्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणत्वं अन्यथा तादृशप्रतीते
र्विलक्षणाभावविषयकत्वानुपपत्तिः स्यादिति भावः। ननु यदि
घटपटौ न स्त इति दृष्टान्तप्रतीतौ घटत्वपटत्वोभयत्वेतत्त्रितय-
पर्य्याप्तैकावच्छेदकताकप्रतियोगित्वं भासेत तदा पुष्पवन्तपदं
चन्द्रसूर्य्योभयशक्तमिति प्रतीत्यापि चन्द्रत्वसूर्य्यत्वोभयत्वैतत्त्रितय-
धर्म्मपर्य्याप्तावच्छेदकताकशक्तिः सिध्येत तथैव न इत्याशङ्कते न
चेत्यादि केवलोभयत्व इति उभयत्वत्वेन उभयत्वमात्रे इत्यर्थः यत्
किञ्चिदुभयवतीति दण्डमठोभयादिप्रकारकनिश्चयमत्वे इत्यर्थः
तादृशधर्म्मपर्य्याप्तावच्छेदकताकप्रतियोगितासम्बन्धेन तादृशधर्म्मा
वच्छिन्नप्रकारताकाभावबुद्धिं प्रति तादृशधर्म्मावच्छिन्नप्रकारक-
निश्चयत्वेन प्रतिबन्धत्वकल्पनेन मठदण्डोभयवदिति निश्चये सामा
न्यत उभयत्वत्वावच्छिन्नप्रकारताकनिश्चयसत्वात् घटपटौ न स्त
इति प्रतीतिर्न भवितुमर्हतीति भावः। सामानाधिकरण्येति
सामानाधिकरण्यसम्बन्धेन पटत्वनिष्ठावच्छेदकता निरूपिता

रुभयाभावप्रतियोगितावच्छेदकत्ववत् प्रकृते न विरुध्यते नच घटपटौ न स्त इत्यत्र उभयत्व एव प्रतियोगितावच्छेदकत्वं भासते नतु घटत्वपटत्वादाविति वाच्यं केवलोभयत्वे तादृशाभावप्रतियोगितावच्छेदकतायाः पर्य्याप्तौ यत् किञ्चिदुभयवति तादृशाभावप्रतीत्यनुपपत्तेः न च सामानाधिकरण्यसम्बन्धेन घटत्वपटत्वरूपावच्छेदकत्वावच्छेदकधर्म्मेण व्यावृत्तोभयत्वविशेषस्यैव तत्रावच्छेदकत्वं प्रतीयते इति वाच्यं तेन प्रकारेण तत्रोभयत्वस्याभानात्तत्तद्रूपाणां तत्तद्धर्म्मिविशेषणतयैव भानात् अतिप्रसक्तधर्म्मप्रकारेण भासमाने चावच्छेदकतापर्य्याप्तिभानानुपगमात् तत्रोभयत्वविशेषेऽभावप्रतियोगितावच्छेदकत्वपर्य्याप्त्युपगमे अत्रापि उभयत्वविशेषे शक्यतावच्छेद-

मतौ तादृशसम्बन्धेन घटत्वनिष्ठावच्छेदकतानिरूपिताया उभयत्वनिष्ठावच्छेदकता तन्निरूपितप्रतियोगिताकाभाव एव तादृशप्रतीतेर्व्विषय एवञ्च तादृशविशेषणपन्नोभयत्वस्यैवावच्छेदकत्वाभानात् विलक्षणाभावावगाहनमिति हृदयम् । तेनेति सामानाधिकरण्यसम्बन्धेन घटत्वेन पटत्वेन च, तत्र तादृशप्रतीतौ, अभानात् अविषयत्वात् तत्तद्रूपाणां घटत्वपटत्वादीनां धर्म्मिविशेषणतया घटादिविशेषणतया एवकारेण उभयत्वादिविशेषणतया भानव्यवच्छेदः अतिप्रसक्तधर्म्मप्रकारेण उभयत्वान्तर-

कत्वपर्य्याप्तिसम्भवाच्चन्द्रत्व-सूर्य्यत्वयोरवच्छेदकता-वच्छेदकतयैव शाब्दबोधे भानोपपत्तिः न च शक्यतावच्छेदकतावच्छेदकमवच्छेदकविशेषणतयैव भासते इति चन्द्रत्वसूर्य्यत्वयोस्तथात्वे चन्द्रसूर्य्यांशे

साधारणोभयत्वप्रकारेण । भासमान इति घटपटादिवृत्तिद्वित्वविशेष इति हृदयम् । तत्र तादृशप्रतीतौ उभयत्वविशेष इति सामानाधिकरण्यसम्बन्धेन घटत्वपटत्वविशिष्ट इत्यर्थः । अयमभावः । यत्र ज्ञाने यद्यद्धर्म्मविशिष्टे उभयत्वादिकं भासते तत्र तत्तद्धर्म्मसामानाधिकरण्येनापि उभयत्वादिकं भासत इति नियमेन उक्तागत्यादिग्रहे घटत्वपटत्वादिसमानाधिकरणतयापि उभयत्वादेर्भानं भवत्येव एवञ्च घटपटौ न स्त इत्यादिवाक्यज्ञानस्य हि सामानाधिकरण्यसम्बन्धावच्छिन्नघटत्वपटत्वनिष्ठावच्छेदकताकोभयत्वत्वावच्छिन्नावच्छेदकताकप्रतियोगितासम्बन्धावच्छिन्ना या घटत्वावच्छिन्नविशेष्यताकपटत्वाव-च्छिन्न-विशेष्यताकोभयत्वत्वावच्छिन्नप्रकारत्वावच्छिन्नघटत्वपटत्वोभयत्वे तन्निरूपिताभावत्वावच्छिन्नविशेष्यता या तदवच्छिन्नविषयताकशाब्दबोधं प्रति हेतुतायाः कल्पनीयतया तादृशोभयत्वविशेषे प्रतियोगितावच्छेदकत्वादिसम्भवः । ननु नञर्थाभावे यत्सम्बन्धेन यादृशधर्म्मविशिष्टस्य विशेषणतया भानं तादृशसम्बन्धावच्छिन्नतद्धर्म्मनिष्ठावच्छेदकताकप्रतियोगितायाः एव तत्संसर्गतया भाननियमः अन्यथा घटो नास्तीत्यादिप्रतीतेर्विषयित्वसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताकप्रतियोगितासम्बन्धेन तद्व्यक्तित्वावच्छिन्नप्रतियोगितासम्बन्धेन च अभावादौ घटादेर्भानापत्त्या घटवत्यपि तादृशप्रतीत्यापत्तेः एवञ्च घटपटौ न स्त

प्रकारतया शाब्दबोधे भानानुपपत्तिरिति वाच्यं तयोरवच्छेदकतावच्छेदकत्वेऽपि शक्तिग्रहे अवच्छेदकाश्रयचन्द्रसूर्य्यविशेषणतयैव भानात् शाब्दबोधेऽपि तद्विशेषणतया भानसम्भवात्। अथ शक्ति-

इत्यादिप्रतीतौ घटत्वादेः समवायेन घटाद्यंशे भानेन समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताया एव संसर्गत्वमावश्यकमिति चेन्न यत्र उभयत्वादिधर्म्मितावच्छेदकतया घटत्वादेर्भानं तत्र घटत्वपटत्वादिसामानाधिकरण्येन उभयत्वादेः पारतन्त्र्येण भानोपगमात् उक्तप्रतियोगितायाः संसर्गत्वसम्भवात् आकाङ्क्षाभास्य कारणतया विशेषतो विचारमाञ्च। अवच्छेदकतावच्छेदकतयैवेति शक्यतावच्छेदकतावच्छेदतयैवेत्यर्थः। शक्तिज्ञानन्तु चन्द्रत्वसूर्य्यत्वावच्छिन्नोभयत्वनिष्ठावच्छेदकताकस्वनिरूपितशक्तिसम्बन्धेन चन्द्रसूर्य्योभयवत् पुष्पवन्तपदमित्याद्याकारकमिति ध्येयम्। ननु पशुपदादिजन्यबोधे शक्यतावच्छेदकतावच्छेदकस्य लाङ्गूलत्वादेर्यथाशक्यविशेषणलाङ्गूलादिविशेषणतया भानं तथा पुष्पवन्तपदजन्यबोधेऽपि शक्यतावच्छेदकतावच्छेदकचन्द्रत्वादेः शक्यविशेषणोभयत्वादिविशेषणतया भानं स्यादित्याशङ्कते न चेत्यादि तयोरिति चन्द्रत्वसूर्य्यत्वावच्छिन्नोभयत्वनिष्ठावच्छेदकताकस्वनिरूपितशक्तिसम्बन्धेन चन्द्रसूर्य्योभयप्रकारकज्ञानस्य हेतुतया तादृशज्ञाने चन्द्रत्वेन चन्द्रस्य सूर्य्यत्वेन सूर्य्यस्य च भानेन तज्जन्योपस्थितेरपि तादृशचन्द्रसूर्य्यविषयतया शाब्दबोधोऽपि तादृशो युज्यत इति हृदयम्। ननु अवच्छेद्यग्रहे स्वातन्त्र्येण अवच्छेद्याश्रये यस्य भानं तत्र अवच्छेद्यावच्छेदकत्वं तत्र यो विशेषणतया

ग्रहे साक्षात् शक्यतानवच्छेदकस्य तदुभयस्य शक्य-
चन्द्रसूर्य्योभयांशे साक्षात्प्रकारतया भानं न सम्भ-
वतीति चेत् घटपटौ न स्त इत्यादौ घटत्वपटत्वयोः
साक्षात् प्रतियोगितावच्छेदकत्वमन्तरेण प्रति-
योगिविशेषणतया भानासम्भवस्तुल्य एव इत्याहुः।
ज्ञानशक्तिवादिनस्तु चन्द्रत्वसूर्य्यत्वोभयप्रकारकज्ञा-

भासते तत्र अवच्छेद्यावच्छेदकतावच्छेदकत्वं नतु पारतन्त्र्येण
भासमाने अवच्छेद्यावच्छेदकत्वमिति नियमः रजतत्वेन रङ्गस्य
ज्ञानं नास्तीत्यादिप्रतीतौ तु तृतीयान्तार्थस्य रजतत्वप्रकारत्वस्य
निरूपितत्वसम्बन्धेन षष्ठ्यन्तार्थरङ्गविशेष्यत्वेऽन्वयात् रजतत्वप्र-
कारत्वनिष्ठावच्छेदकतानिरूपितरङ्गविशेष्यत्वनिष्ठावच्छेदकताक-
ज्ञानत्वावच्छिन्नप्रतियोगिताकाभाव एव भासते एवञ्च रङ्गरजते
इति समूहालम्बनज्ञानकाले तादृशप्रतीतिरुपपन्ना एवञ्च पुष्प-
वन्तपदं चन्द्रसूर्य्यशक्तमित्यादिप्रतीत्याशक्यांशे विशेषणतया भास-
माने चन्द्रे सूर्य्ये च साक्षात् विशेषणयोः चन्द्रत्वसूर्य्यत्वयोः शक्यताव-
च्छेदकत्वमेव नतु शक्यत्वाद्यवच्छेदकतावच्छेदकत्वं सिध्यतीत्याश-
यः शक्तीति। तुल्य एवेति तथाच यत् साक्षादवच्छेदकं तत्
अवच्छेद्यांशे साक्षाद्विशेषणतया भासते इति नियमो न प्रामा-
णिकः प्रामाणिकत्वे विरुद्धयोरपि घटत्वपटत्वयोः प्रतियोगिता-
निरूपितैकावच्छेदकत्वपर्य्याप्तिर्भवतापि स्वीकार्य्या इति भावः।
ज्ञानशक्तिवादिनां मतमाह ज्ञानशक्तीति चन्द्रत्वसूर्य्यत्वोभयप्रका-
रकेति चन्द्रत्वप्रकारत्वे सति सूर्य्यत्वप्रकारत्वकं ज्ञानमित्यर्थः।

नमेव पुष्पवन्तपदशक्यं पुष्पवन्तपदं उभयप्रकारक-ज्ञाने शक्तमित्याकारकशक्तिग्रहस्य तादृशज्ञानत्वमेव कार्य्यतावच्छेदकमिति व्युत्पत्तिमतः पुरुषस्य नैकै-कबोधापत्तिः अतोऽतादृशस्य भवत्येव तादृशबोधः। नचैवमपि पुष्पवन्तपदं चन्द्रत्वप्रकारकज्ञाने शक्त-

यथाच चन्द्रत्वाद्यंशे उभयत्वाभानेऽपि न क्षतिः। पुष्पवन्तपद-शक्यमिति पुष्पवन्तपदनिष्ठशक्तिनिरूपितजन्यतावदित्यर्थः। शक्त-मिति तादृशज्ञानजनकशक्तिमदित्यर्थः। तादृशज्ञानत्वमिति चन्द्र-त्वप्रकारकं सत् सूर्य्यत्वप्रकारकं यत्तादृशज्ञानत्वमित्यर्थः तथाच तादृशधर्म्मत्रयमेव शक्यतावच्छेदकं शक्तिनिरूपितजन्यतावच्छेद-कमिति तु यावत् इति व्युत्पत्तिमतः इति शक्तिग्रहवतः। शक्ति-निरूपकताशक्तिनिष्ठजनकतानिरूपकता। अन्यच्च सुगमम्। न्यायमतमुत्थापयति ईश्वरेति पक्षे मते इत्यर्थः चन्द्रत्वावच्छिन्न-विषयकेति चन्द्रत्वावच्छिन्नविषयताशालीति चन्द्रत्वप्रकारताशा-लीति वा तदर्थः। न तथाविधबोध इति अत्र शक्तिप्रमात इति पूरणीयम्। चन्द्रत्वादिप्रकारकबोधजनकस्येति। पुष्पवन्तपदात् चन्द्रत्वावच्छिन्नविषयकबोधो भवत्वित्याद्याधुनिकसंकेतजन्यस्य तादृशशक्तिभ्रमजन्यस्य वेति केवलचन्द्रत्वादिप्रकारकशाब्दबोधस्या-नुरोधेन चन्द्रत्वप्रकारताकशाब्दं प्रति पुष्पवन्तपदजन्यत्वप्रकारता-निरूपितचन्द्रत्वावच्छिन्न-विषयकबोधत्वावच्छिन्न-विशेष्यताशालि-सङ्केतग्रहो हेतुर्व्वाच्यः तथाच तादृशशक्तिग्रहात् सूर्य्यत्वप्रकारक-शाब्दसामग्रीं विनापि चन्द्रत्वप्रकारकशाब्दबोधजननादिति भावः।

मित्यादिबोधस्य प्रमावति शक्तिभ्रमं विना प्रत्येकशा-
ब्दबोधानुदय इति कथमुपपद्यते इति वाच्यं केवल-
चन्द्रत्वप्रकारकबोधे तत्तत्प्रकारकबोधाद्यंशे शक्ति-
निरूपकतावच्छेदकतापर्य्याप्त्यग्रहस्य हेतुत्वात् प्रकृत
उभयप्रकारकबोधत्वाद्यंशे शक्तिनिरूपकतावच्छेद-
कत्वपर्य्याप्त्यभ्युपगमात् तादृशस्य चन्द्रत्वप्रकारकज्ञाने
शक्तमित्यादिबोधस्य भ्रमत्वनियमादित्याहुः। ईश्वरे-
च्छारूपस्य सङ्केतस्य शक्तित्वमङ्गीकर्त्तृसिद्धान्तिपक्षे
पुष्पवन्तपदाच्चन्द्रत्वावच्छिन्नविषयकसूर्य्यत्वावच्छि-
न्नविषयकशाब्दबोधो भवतु इत्याकारक एव तादृश-
पदे भगवत्सङ्केतः केवलचन्द्रत्वावच्छिन्नविषयक-
बोधस्य न तत्पदजन्यत्वेन तद्विषय इति तादृशपदान्न
तथाविधबोधः न च तादृशपदजन्यत्वेन केवलचन्द्रत्वा-
वच्छिन्नविषयकबोधस्य संकेताविषयत्वेऽपि चन्द्रत्वा-

एतेन पुष्पवन्तपदघटितसामग्रीतः केवलचन्द्रादिविषयकबोधस्य
कुत्राप्यजननात् तादृशसामग्र्याः केवलचन्द्रादिविषयकबोधस्या-
पादकत्वासम्भवात् केवलचन्द्रत्वावच्छिन्नविषयकबोधो दुर्व्वार
एव इत्यस्यासङ्गतिरित्यपि निरस्तम्। तादृशाधुनिकसंकेतयत्ता-
दिसत्वे केवलचन्द्रादिविषयकबोधस्योत्पत्त्या पुष्पवन्तपदघटित-
वाक्यज्ञानस्य कारणत्वस्यावश्यकत्वेन तद्घटितसामग्र्याः कुत्रचित्
केवलचन्द्रादिविषयकबोधोत्पत्त्या आपादकत्वसम्भवात्। केवल-

द्यवच्छिन्नविषयकबोधविषयकत्वेन संकेतविषयकग्रहस्य चन्द्रत्वादिप्रकारकबोधजनकस्य सूर्य्यत्वाद्यवच्छिन्नविषयकबोधविषयकत्वेन सङ्केतग्रहादिघटितसूर्य्यत्वाद्यवच्छिन्न-विषयकबोध-सामग्र्यामसत्यामपि सम्भवेन तद्दनात् अभ्रान्तस्य केवलचन्द्रत्वावच्छिन्नविषयकबोधो दुर्व्वार एव इति वाच्यं तत्पदजन्यकेवलचन्द्रत्वादिप्रसवकबोधे तत्पदजन्यकेवलचन्द्रत्वाव-

चन्द्रत्वादिप्रकारकशाब्दबोधतज्जनकशक्तिग्रहयोः चन्द्रत्वावच्छिन्नविषयकसूर्य्यत्वावच्छिन्न-विषयक-शाब्दबोधतज्जनक-शक्तिग्रहयोश्च कार्य्यकारणभावावच्छेदकवैलक्षण्यप्रदर्शनेन समाधत्ते तत्पदजन्येति पुष्पवन्तपदजन्येत्यर्थः। केवलचन्द्रत्वादिप्रकारकशाब्दत्वञ्च कार्य्यतावच्छेदकं पूर्व्वं निरुक्तं तत्पदजन्यकेवचन्द्रत्वावच्छिन्नेत्यादिना कारणतावच्छेदकमुक्तं तच्च पुष्पवन्तपदजन्यत्वप्रकारतानिरूपिता या चन्द्रत्वावच्छिन्नविषयकत्वनिष्ठावच्छेदकताभिन्ना सती शाब्दत्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपिता तादृशधर्म्मद्वयावच्छिन्ना विशेष्यता तच्छालिसङ्केतग्रहत्वं तादृशसङ्केतश्च पुष्पवन्तपदजन्यः चन्द्रत्वावच्छिन्नविषयकशाब्दबोधो भवत्वित्याकारकः द्वितीयकारणतावच्छेदकञ्च पुष्पवन्तपदजन्यत्वं प्रकारतानिरूपिता या चन्द्रत्वावच्छिन्नविषयक-सूर्य्यत्वावच्छिन्न-विषयकत्वशाब्दत्वैतत्त्रितयधर्म्मावच्छिन्नविशेष्यतातच्छालिसङ्केतग्रहत्वम्। अथ कीदृशं सङ्केतज्ञानं अत्र कारणम्। न तावत् चन्द्रत्वावच्छिन्नविषयकत्वसूर्य्यत्वावच्छिन्नविषयकत्वशाब्दत्वैतत्त्रितयावच्छिन्न-भगवत्संकेतीयविशेष्य-

च्छिन्नविषयकबोधत्वपर्य्याप्तविषयतावच्छेदकताकत्व-प्रकारसङ्केतविषयकज्ञानस्य हेतुत्वात् पुष्पवन्तपद-जन्यबोधत्वघटितभगवत्संकेतविषयतावच्छेदकशरीरे च सूर्य्यत्वावच्छिन्नविषयकत्वचन्द्रत्वावच्छिन्नविष-यकत्वयोरेकत्वनिवेशात् तत्पदजन्यप्रत्येकधर्म्मावच्छि-न्नविषयकबोधत्वे संकेतविषयतावच्छेदकत्वपर्य्याप्ति-

तानिरूपित-जन्यत्व-प्रकारतानिरूपितपुष्पवन्त पदत्वावच्छिन्नाव-च्छेदकतावत् पुष्पवन्तपदमित्याकारकम् । तादृशज्ञानस्य पद-पदार्थयोः सम्बन्धानवगाहनेनार्थस्मरणानुपपत्तेः । नापि स्वनिष्ठं यत् पुष्पवन्तपदत्वावच्छिन्नावच्छेदकत्वं तन्निरूपितजन्यत्वप्रका-रताकतादृशधर्म्मद्वयावच्छिन्नभगवत्संकेतीयविशेष्यतानिरूपिताव-च्छेदकताश्रयविषयत्वसम्बन्धेन पुष्पवन्तपदप्रकारकचन्द्रसूर्य्यवि-शेष्यकज्ञानं अत्र स्वपदं पुष्पवन्तपरं परिचायकम् । तादृशज्ञानस्य चन्द्रः सूर्य्यश्च पुष्पवन्तपदवानित्याकारकतया समूहालम्बनपर्य्यव-सन्नत्वेन एकशक्तिविषयकत्वानुपपत्तेः । नच द्वयोरेकमिति रीत्या उक्तसम्बन्धेन पुष्पवन्तपदप्रकारकचन्द्रसूर्य्यविशेष्यकज्ञानस्य समू-हालम्बनविलक्षणतया एकशक्त्यवगाहित्वेन नियतचन्द्रसूर्य्योभय-विशेष्यकबोधजनकत्वोपपत्तिरित्यपि न सत् । यस्मात् विरुद्धध-र्म्मद्वयधर्म्मितावच्छेदकीकृत्य व्यासज्यवृत्तिधर्म्मप्रकारकं समूहाल-म्बनविलक्षणमेव स्वीक्रियते नत्वव्यासज्यवृत्तिधर्म्मप्रकारकं अन्यथा विरुद्धघटत्वपटत्वादिकं धर्म्मितावच्छेदकीकृत्य द्रव्यत्वादेर्भाना-पत्त्या द्रव्यघटपटवद्भूतलमित्याकारकस्य द्रव्यत्वादिधर्म्मद्वयाव-च्छिन्नप्रकारताकं समूहालम्बनात्मकं ज्ञानं स्यात् स्याच्च द्रव्य-

विरहात् तदंशे तत्पर्य्याप्तावगाहीग्रहो भ्रम एवेति न शक्तिप्रमातः प्रत्येकधर्म्मप्रकारकबोधापत्तिः तत्-पदजन्यचन्द्रत्वावच्छिन्नविषयक-सूर्य्यत्वावच्छिन्नवि-षयकबोधत्वपर्य्याप्तविषयतावच्छेदकताकत्वप्रकारक-शक्तिग्रहस्य उभयधर्म्मप्रकारकबुद्धित्वमेव कार्य्यताव-च्छेदकमतो न तद्घटितसामग्रीबलात् एकधर्म्मावच्छि-न्नान्वयबोधस्य यत्किञ्चित्कारणविरहदशायां अपर-धर्म्मप्रकारकशाब्दबोधापत्तिः उभयविषयकत्वावच्छि-न्नाया बोधनिष्ठसंकेतविषयताया ऐक्यात् शक्तेरैक्यं इति न तत्पदस्य नानार्थतेति रमणीयः समाधिः ।

स्वघटत्व पटत्वादि-त्रितय-धर्म्मावच्छिन्न-प्रतियोगिताकोऽतिरिक्तो-ऽभावः । इति चेदुच्यते स्वनिष्ठविषयत्वनिष्ठावच्छेदकतानिरू-पिता या चन्द्रत्वावच्छिन्नविषयकत्वसूर्य्यत्वावच्छिन्नविषयकत्वशा-ब्दत्वैतद्धर्म्मत्रयावच्छिन्नभगवदिच्छीय-विशेष्यतातन्निरूपितजन्यत्व-प्रकारतानिरूपितपुष्पवन्तपदत्वावच्छिन्नावच्छेदकतात्वसम्बन्धेन चन्द्रसूर्य्यवत् पुष्पवन्तपदमित्याकारकमेव मन्मते तज्ज्ञानं हेतुः अत्र स्वपदं चन्द्रादिपरम् । अत्र एकत्र द्वयमिति रीत्या चन्द्रसूर्य्यो-भयस्य तादृशपदे प्रकारतया युगपज्ज्ञानेन न समूहालम्बनत्वं अत एतज्ज्ञानस्य एकशक्तिविषयत्वं नानुपपन्नमित्यलं विस्तरेण । शक्ति-ग्राहककोषस्यापि पुष्पवन्तपदस्य उभयस्मिन्नेकशक्तिकत्वपरत्वमु-पपादयति उक्तिपदमिति तदुत्तरतृतीयायाः प्रयोज्यत्वमर्थः तस्य च पुष्पवन्तपदार्थतत्पदप्रतिपाद्यघटकप्रतिपत्तावन्वयः । सूर्य्या-

एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ इत्यमरकोषे उक्तिपदं शक्तिपरं पुष्पवन्तपदं तत्प्रतिपाद्यपरम् । तथाच सूर्य्याचन्द्रमसावेकशक्त्या पुष्पवन्तपदप्रतिपाद्यावित्यर्थः । उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वये तात्पर्य्यात् चन्द्रत्वसूर्य्यत्वयोरेकशक्त्यधीनप्रतिपत्तिविषयतावच्छेदकत्वलाभः नातस्तस्मात् नानार्थादिव तादृश एकधर्म्मावच्छिन्नविषयकबोधः नानार्थे

चन्द्रमसेति चन्द्रसूर्य्यौ पुष्पवन्तपदजन्यैकशक्तिप्रयोज्यप्रतिपत्तिविषयतावन्ताविति तदर्थः । नन्वेतावतापि चन्द्रसूर्य्यनिष्ठकयश्चिदनुगतैकधर्म्मावच्छिन्नशक्तिस्वीकारेण तादृशधर्म्मप्रकारेण तयोः प्रतिपत्तिसम्भवेन न चन्द्रत्वादिप्रत्येकधर्म्मावच्छिन्ने एकशक्तिसिद्धिरित्यत आह उद्देश्यतावच्छेदकावच्छेदेनेति अयमाशयः । वाक्यं हि द्विविधं उद्देश्यतावच्छेदकसामानाधिकरण्येन विधेयान्वयपरं द्वितयं उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयपरम् । आद्यं यथा नीरूपं स्पर्शवन्मनः । अस्य च रूपशून्यं यत् स्पर्शवत् यत् तत् मनः मनःपदार्थं इत्यर्थः अस्य च रूपशून्यत्वविशिष्टस्पर्शवत्त्वसामानाधिकरण्येन मनःपदशक्यत्वान्वये तात्पर्य्यं मनस्त्वजातेरेव शक्यतावच्छेदकत्वात् । एवं गौरिव गवय इत्यतिदेशवाक्यस्यापि । द्वितीयं यथा शङ्खो लक्ष्मीपतेः पाञ्चजन्य इत्यादि अस्य च विष्णोः शङ्खः पाञ्चजन्यपदशक्य इत्यर्थः । तात्पर्य्यमप्यस्य विष्णुसम्बन्धिशङ्खत्वावच्छेदेन तस्यैव शक्यतावच्छेदकत्वात् एवञ्च पुष्पवन्तपदस्यैकशक्तिज्ञानजन्यत्वस्य चन्द्रत्वावच्छिन्नविषयकसूर्य्यत्वावच्छिन्नविषयताकप्रतिपत्तौ लाभः । ननु दिवाकरनिशाकरावित्यत्र

शक्तिभेदेन विशेषादिति लभ्यते। अथवा एकयोक्त्या एकोच्चारणेन सूर्य्याचन्द्रमसौ पुष्पवन्तपदप्रतिपाद्यौ इत्यर्थः। तथाच यथा नानार्थस्थले नावृत्तिमन्तरेण नानार्थबोधस्तथा न प्रकृते अत्र शक्त्यैक्येन सकृदुच्चरितात् सकृदर्थप्रत्यय एव इत्यस्या विषयत्वादिति भावः।

उभयत्वस्यापि उद्देश्यतावच्छेदकत्वेन एकशक्त्यधीनप्रतिपत्तिविषयतावच्छेदकतालाभोऽपि स्यात् पुष्पवन्तपदजन्यबोधे तादृशोभयत्वस्याभानात् इष्टापत्तेरयोगादिति चेन्न तादृशोभयत्वस्य धर्म्यंशे उपलक्षणतया भानस्वीकारेणात्र विधेयावच्छेदकत्वालाभात् स्वरूपसम्बन्धरूपावच्छेदकत्वस्य एकदेशेऽपि स्वीकाराच्च इति भावः। एकयेत्यत्र एकत्वं स्वजातीयद्वितीयराहित्यं न तु संख्याधीविशेषविषयत्वं वा तच्च पुष्पवन्तपदजन्यप्रतिपत्तिप्रयोजकशक्तिनिष्ठभेदाप्रतियोगित्वं एवञ्च पुष्पवन्तपदस्य नानाशक्तिमत्त्वेऽपि न एकयोक्त्येत्यस्य बाध इति निरस्तम्। मिश्रमतानुसारेणाह अथवेति यत्तु पूर्व्वकल्पे उक्तिपदस्य शक्तिपरत्वे लक्षणापत्तिरित्यत आह अथवेति इति भाववर्णनं तत्तुच्छं गां व्यक्तीत्यादिना पूर्व्वोक्तेन भट्टाचार्य्येणैव वच्यादिधातोः शक्तौ शक्तिनिरूढलक्षणा वा स्वीकृता। नावृत्तिमन्तरेणेति तथाच हरिर्गच्छतीति सकृदुच्चरितात् सिंहसूर्य्यादेरेकतरस्यैव बोधः नतु सूर्य्यो गच्छति सिंहो गच्छतीत्यादिनानाविधबोधः। अत्र कल्पेऽनास्थामुद्भावयन् वाकार इत्युक्तं एकोच्चारितादपि उभयबोधस्य मणिकारादिसम्मतत्वात्। अतएव तात्पर्य्यसत्त्वे सकृदुच्चरितादपि शब्दादुभयबोधस्य इष्टत्वात् इति मणिकारेणोक्तम्। इति पुष्पवन्तपदटीका।

पुष्पवन्तपदवत् सर्वनामपदानामपि शक्तेरैक्यान्न नानार्थता। अथ सर्व्वनामपदेन विशिष्टघटत्वपट-त्वादिनैव बुद्धिस्था घटपटादयः प्रत्याय्यन्ते नच बुद्धि-स्थत्वेन अत्र घटोऽस्ति तमानय इत्यादिवाक्यजघटक-र्म्मकानयनादिबोधानन्तरं विशिष्टानयनं घटकर्म्मकं न वेति संशयानुत्पादस्य सर्व्वानुभवसिद्धतया दुरपह्नव-त्वात् तथाच वक्तृबुद्धिस्थत्वं न सर्व्वनामशक्यतावच्छे-दकं अपि तु घटत्वपटत्वादेरेव तादृशनानाधर्म्मावच्छि-न्नेषु पुष्पवन्तादिपदवन्नैकशक्तिसम्भवः एकैकधर्म्ममा-

सर्व्वनाम्नां शक्तिं परीक्षितुकाम आदौ सिद्धान्तप्रदर्शने आशङ्केव नोदेत्यतस्तत्सिद्धान्तमाह पुष्पवन्तपदवदिति सर्व्वनाम-पदानां तदेतदिदमादिपदानां नानार्थतेति पृथक् पृथक्शक्त्या पृथक् पृथगर्थप्रतिपादकत्वेत्यर्थः। परीक्षामारभते अथेत्यादि। बुद्धिस्थाः पूर्व्वबुद्धिविषयाः। बुद्धिस्थत्वेन बुद्धिस्थत्वप्रकारेण ननु तदादिपदजन्यबोधे घटत्वादेरेव प्रकारत्वं नतु बुद्धिस्थत्वस्य इति कुतोऽवधार्य्यते इत्यत आह अत्र घट इति संशयानुत्पादस्येति तमानयेति वाक्यात् यदि बुद्धिस्थकर्म्मकमानयनमिति बोधो जायते तदा आनयनं घटकर्म्मकत्वाभाववदिति बुद्धेः ग्राह्यताव-च्छेदकबुद्धिस्थत्वेन ग्राह्यघटादेरभानादनवगाहितया तादृशनिश्च-याप्रतिबध्यत्वेन तादृशसंशयोत्पत्तिः कुतो न स्यादिति भावः। तथाचेति बुद्धिस्थत्वस्य तादृशबोधाभाने चेत्यर्थः बुद्धिस्थत्वमिति तत्पदजन्यबोधप्रकारस्यैव तत्पदशक्यतावच्छेदकत्वादिति भावः।

वप्रकारकतत्तदर्थबोधानुपपत्तेरिति सर्वनाम्नो नानार्थत्वं दुर्व्वारमेव न वा नानार्थतोपगमेऽपि निर्व्वाहः यद्रूपावच्छिन्नविषयकव्यवहारजनकत्वं न पुंसा तदादिपदेन गृहीतं तदवच्छिन्ने तेन तच्छक्त्यग्रहेण प्रक्रान्तस्यापि तदवच्छिन्नस्य तत्पुरुषीयतदादिपदजन्यबोधविषयतानुपपत्तेः नच बुद्धिस्थत्वं प्रकारीभूतघटत्वादीनामनुगमकं तथाच बुद्धिप्रकारवांस्तत्पदशक्य

न एकशक्तिसम्भव इति सकृदुच्चरितपुष्पवन्तपदात् यथा चन्द्रसूर्य्योभयविषयकबोधः तथा न तदादिपदात् अपितु पृथक् पृथगुच्चरिततदादिपदात् प्रत्येकघटत्वपटत्वाद्यवच्छिन्नस्य बोध इष्यत एकशक्तिकत्वस्य वक्तुमशक्यत्वादिति हृदयम् । ननु तदादिपदानां नानार्थतैवाभ्युपेयात् क्षतिविरहादित्यत आह न वेति । यद्रूपावच्छिन्नेति यद्धर्म्मावच्छिन्ने यत्पदस्य दृष्टव्यवहारो येन पुंसा दृश्यते तद्धर्म्मावच्छिन्ने तत्पदस्य तेन पुरुषेण शक्तिमवगम्यते अनन्तरं तत्पदस्य तद्धर्म्मावच्छिन्ने शक्तिसम्बन्धग्रहेण तत्पदार्थः स्मर्य्यते प्रतिपद्यते च तेन पुंसा तदर्थं एवञ्च यद्धर्म्मावच्छिन्ने येन यत् पदव्यवहारो न दृष्टः तदवच्छिन्ने यत्पदस्य तस्य शक्तिग्रहो नाभूत् कुतः तद्धर्म्मावच्छिन्नाभिप्रायेण प्रयुक्तात् देवदत्तो गच्छति तं पश्येत्यादौ तच्छब्दात् तस्य पुंसः तादृशदेवदत्तप्रतिपत्तेः शक्तग्रहेण तद्धर्म्मावच्छिन्नानुपस्थितेरिति भावः । प्रक्रान्तस्यापि वक्तृबुद्धिस्थस्यापि बुद्धिप्रकारत्वरूपानुगतधर्म्मेण अपूर्व्वचैतत्वादेरपि शक्तिग्रहविषयत्वमुपपाद्य शब्दबोधोपादानमाशङ्कते न चेति शक्तिग्रह इति दृष्टव्यवहारादिना जायत इति शेषः सच तादृशशक्ति-

**इत्याकारकशक्तिग्रहः। स च तद्धर्म्मप्रकारेण सकलतद्धर्म्मविषयक एव सामान्यप्रत्यासत्त्या सम्भवतीति नापूर्व्वप्रकारेण बोधानुपपत्तिः। सामान्यलक्षणानभ्युपगमे तु, शक्तिग्रहविशेष्यतावच्छेदकप्रकाराश्रयस्यापूर्व्वधर्म्मिणः शक्तिग्रहाविषयत्वेऽपि शाब्दबोधे भानवत् शक्तिग्रह-धर्म्मितावच्छेदकतावच्छेदकानुगतरूपाश्रयस्यापूर्व्वधर्म्मस्यापि शक्तिग्रहविषयतां विना शाब्दबोधे न भानानुपपत्तिः। शक्तिधियः शाब्दज्ञानसमानविषयकत्वस्यातन्त्रत्वात् इति वाच्यं, बुद्धिस्थ-**

ग्रहः सम्भवतीत्यनेनान्वितः। तद्धर्म्मप्रकारेण बुद्धिप्रकारत्वरूपधर्म्मप्रकारेणेत्यर्थः। सामान्यप्रत्यासत्त्या सामान्यलक्षणारूपप्रत्यासत्त्या तथाच घटोऽस्ति तमानय पटोऽस्ति तमपसारयेत्यादिवक्तृबुद्धिस्थपरतत्पदघटितनानाप्तव्यवहारतः सविधस्थस्य सामान्यतः पूर्व्वबुद्धिप्रकारत्वेन घटत्वपटत्वादिकं विषयीकृत्य बुद्धिप्रकारवान् तत्पदशक्य इति ग्रहो भवति। ततश्च तादृशप्रकारत्वज्ञानं सामान्यप्रत्यासत्तिः निखिलबुद्धिप्रकारत्वाश्रयघटत्वचैत्रत्वमैत्रत्वादिकं ग्राहयति ततश्च बुद्धिप्रकारत्वेन निखिलघटत्वचैत्रत्वमैत्रत्वाद्यवच्छिन्ने तत्पदशक्यताज्ञानं मानसं सम्पद्यते इति भावः। सामान्यलक्षणानभ्युपगमस्तु मतेऽप्याह सामानेशति शक्तिग्रहेति बुद्धिप्रकारवान् तत्पदशक्य इति शक्तिग्रहविशेष्यतावच्छेदको यः प्रकारः तदाश्रयस्य इत्यर्थः। अपूर्व्वधर्म्मिण इति यत्र गृहे गौरस्ति तं ताड़येत्यादिवृद्धव्यवहारतः बुद्धिप्रकारगोत्वाद्यवच्छिन्ने गोव्यक्तिविशेषे शक्तिग्रहः ततः अपरगोव्यक्तिपदात् गौर्भावति तं

त्वस्य शक्यतावच्छेदकतानवच्छेदकत्वेन शक्यतावच्छेदकानुगमकत्वायोगात्। तदवच्छेदकत्वे च तस्यापि शाब्दबुद्धौ शक्यतावच्छेदकघटत्वादिविशेषणतया नियमतो भानप्रसङ्गात् स्वरूपतो घटत्वादिप्रकारकशब्दबोधानिर्व्वाहात्। उपलक्षणेनापि शक्यतावच्छेदकानुगमे शक्यस्यापि उपलक्षणेनैवानुगमोऽस्तु किं विशिष्टे शक्त्या। अथ द्रव्यादिपदाच्च घटत्वादिप्रका-

पश्येत्यादिवाक्यघटकात् गोशब्दात् शक्तिसम्बन्धग्रहेण कारणेन अनुभूतस्य गोपिण्डस्य उपस्थितिः ततश्च योग्यतावशेन गोत्वेन पूर्व्वं गृहीता गोव्यक्तिरेव शाब्दबोधविषयो यथा भवति तद्वत् अत्र घटोऽस्ति समानय अत्र पटोऽस्ति तं परिधेहीत्यादि वृद्धव्यवहारतः बुद्धिस्थत्वरूपघटत्वपटत्वाद्यनुगमकधर्म्मेण घटत्वपटत्वादिविशिष्टे तच्छब्दस्य शक्तिग्रहात् अत्र चैत्रोऽस्ति तं पश्येत्यादिवाक्यघटकेन पूर्व्वाननुभूतचैत्रत्वाद्यवच्छिन्नपरतत्पदेन अननुभूतचैत्रत्वावच्छिन्नस्य स्मरणासम्भवेऽपि अनुभूतघटत्वाद्यवच्छिन्नस्य स्मरणे सति योग्यतावशेन अपूर्व्वचैत्रत्वाद्यवच्छिन्नस्य शाब्दबोधे भाने बाधकाभाव इति भावः। ननु एकव्यक्तौ शक्तिग्रहेणापरव्यक्तेः कुतः शाब्दबोधः यस्य शक्तिग्रहस्तस्यैव शाब्दबोधनियमादित्यत आह शक्तिधिय इति अतन्त्रत्वादिति अनियमादित्यर्थः। शक्यतावच्छेदकानुगमकत्वायोगादिति नानाशक्यतावच्छेदकनिष्ठशक्तिज्ञानीय-विशेष्यतानिरूपितैकप्रकारत्वायोगादित्यर्थः। तदवच्छेदकत्वे च शक्यतावच्छेदकत्वे चेत्यर्थः। उपलक्षणेनापीति शक्यतावच्छेदकतानवच्छेदकेनापीत्यर्थः। उपलक्षणे-

रकबोधप्रसङ्गवारणाय विशिष्टे शक्तिरूपेयते प्रकृते च बुद्धिस्थत्वस्य उपलक्षणत्वेऽपि तेनानुगमेन किञ्चिद्बाधकमिति चेत्, अस्तु बुद्धिस्थत्वेनानुगतधर्म्मेणानुगतानां प्रकाराणां शक्तिधीविषयत्वं । तथापि सर्व्वनाम्नां नानार्थत्वं दुष्परिहरमेव । साक्षात्परम्परया वा यदवच्छेदकं तदैक्यादेवावच्छेद्यैक्यात्, बुद्धिस्थत्वस्यातथात्वात्, उपलक्षणैक्येन शक्त्यैक्ये हर्य्यादि-पदशक्यतावच्छेदकानामप्युपलक्षणीभूतेनान्ततो बुद्धिविषयत्वादिनानुगमसम्भवेन नानार्थ-

नैवेति शक्यतावच्छेदकतानानात्वेनैवेत्यर्थः अनुगमस्तु नाना शक्यनिष्ठविशेष्यतानिरूपितगोत्वादिशक्यतावच्छेदक-निष्ठैकप्रकारताशालिशाब्दधीरस्तु इत्यर्थः । किं व्यर्थम् । विशेषणे शक्ति-र्निष्प्रयोजनेति यावत् । ननु येषां पदानां विशेषणे शक्त्यकल्पने दोषः स्यात्तेषां विशेषणेऽपि शक्तिरस्तु यस्य च तत्र शक्त्यकल्पने न दोषः तस्य तत्र कुतः शक्तिः कल्प्यते इत्याशङ्कते अर्थेति तत् स्वीकारमाह अस्त्विति अननुगतानां घटत्वपटत्वादीनाम् । साक्षा-दवच्छेदकं घटत्वादिकं परम्परयावच्छेदकं लाङ्गूलत्वादिकं अव-च्छेद्यैकत्वं घटपशुभावादीनां घटपशुपदादीनाञ्च प्रतियोगित्व शक्त्याद्यैक्यं अतथात्वात् साक्षात्परम्परयानवच्छेदकत्वात् । अन्ततः इतरधर्म्माणामनुगमाननुसन्धाने नानार्थमात्रोच्छेदप्रसङ्ग इति हर्य्यादिपदानां नानाशक्तिमत्तोच्छेदप्रसङ्ग इत्यर्थः । ननु हर्य्या-दिनानार्थपदानां बुद्धिविषयत्वादेरनुपस्थितिकालेऽपि सूर्य्यादि-

भावोच्छेदप्रसङ्गात्। एवं बुद्धिस्थप्रकारवान् तत्पद-शक्य इत्याकारशक्तिज्ञानात् स्वरूपतो घटत्वादि-प्रकारकस्मरणशाब्दबोधौ न सम्भवतः जातिमान् हस्तिपकसम्बन्धीत्यादिज्ञानात् स्वरूपतो हस्तित्व-प्रकारकस्मरणानुदयात् स्वरूपतस्तद्धर्म्मप्रकारकस्म-रणे स्वरूपतस्तद्धर्म्मप्रकारेण यस्य सम्बन्धो गृहीत-स्तादृशसम्बन्धिज्ञानस्य कारणत्वात्। यथा याभ्यां रूपाभ्यां धर्म्मिणोः सम्बन्धो गृहीतस्तदेकतररूप-प्रकारकसम्बन्धिज्ञानादेव अपरतद्रूपेणैव सम्बन्धिस्-

शाब्दबोधोदयेन बुद्धिविषयत्वादुपलक्षितधर्म्मावच्छिन्ने एकशक्ति-कल्पना न सम्भवति तदादिसर्व्वनाम्नान्तु बुद्धिप्रकारत्वादेरनुप-स्थितौ शाब्दबोधाजननस्य सर्व्वजनीनत्वेन तत्कल्पने बाधकाभा-वादाह एवमिति असम्भवप्रयोजकं कारणाभावं दर्शयति जाति-मानिति जातित्वावच्छिन्नहस्तित्वनिष्ठावच्छेदकताकविशेष्यता-निरूपितहस्तिपकसम्बन्धप्रकारताकज्ञानादित्यर्थः। स्वरूपतो जातित्वाद्यप्रकारेण तद्धर्म्मप्रकारेणेत्यनन्तरं धर्म्मिणीति पूरणीयं यस्येति यद्धर्म्मावच्छिन्नस्येत्यर्थः तथाच स्वरूपतस्तद्धर्म्मनिष्ठप्रका-रताकधर्म्मिनिष्ठविशेष्यतानिरूपितयद्धर्म्मावच्छिन्नसम्बन्धप्रकारता-शालिज्ञानं जातमित्यर्थः। तादृशसम्बन्धिज्ञानस्येति तद्धर्म्मप्रका-रकधर्म्मिविशेष्यकज्ञानस्येत्यर्थः। याभ्यामिति अविशेषितधर्म्म-प्रकाराभ्यामित्यर्थः तदेकतरेति अविशेषिततदेतरधर्म्मनिष्ठप्रकारता-निरूपितविशेष्यताज्ञानादित्यर्थः। स्वरूपतो धर्म्मप्रकारकज्ञान-

स्मरस्मरणमित्यनुभवस्तथा यादृशरूपाभ्यां धर्म्मिणोः सम्बन्धग्रहस्तादृशैकधर्मप्रकारकज्ञानादेव तादृशापरधर्मप्रकारेण धर्मिस्मरणमित्यपि तथाच यत्र किञ्चिद्विशेषितधर्म्म प्रकारकसम्बन्धज्ञानं तत्राविशेषिततद्धर्मप्रकारकस्मरणस्याननुभाविकतया इष्टापत्तेरयोगात्। अन्यथा कदाचित् स्वरूपतस्तत्प्रकारिका कदाचिद्धर्म्मान्तरावच्छिन्नतत्प्रकारिका स्मृतिरित्यत्र नि-

जन्यानां स्वरूपयतो धर्म्मपुरस्कारेण स्मरणानां बाहुल्येन शीघ्रानुभवकतया दृष्टान्तबाधतया उपन्यासः। यादृशरूपाभ्यामिति किञ्चिद्धर्म्मविशेषितरूपाभ्यामित्यर्थः धर्म्मिणोः प्रतियोग्यनुयोगिनोः। तथाच तद्धर्म्मावच्छिन्नावच्छेदकताकप्रकारतानिरूपितसम्बन्धनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितत द्धर्म्मावच्छिन्नावच्छेदकताकविशेष्यताशालिज्ञानोत्तरं तद्धर्म्मावच्छिन्नप्रकारताकज्ञानात्तद्धर्म्मावच्छिन्नप्रकारताशालिस्मरणं जायते इत्यर्थः। इदमुपलक्षणं यद्यादृशरूपाभ्यां धर्म्मिणोः सम्बन्धग्रहः तादृशैकतरधर्म्मपुरस्कारेणापरतद्धर्म्मावच्छिन्ने सम्बन्धज्ञानादपि तद्धर्म्मप्रकारेण स्मरणं एवं यादृशयद्रूपाभ्यामपि ज्ञेयम्। तथाचेति सम्बन्धज्ञानस्मरणयोरेकरूपावच्छिन्नविषयकत्वानुभवे चेत्यर्थः। अन्यथेति तद्धर्म्मावच्छिन्नतद्धर्म्मनिष्ठावच्छेदकताकविशेष्यतानिरूपिततरसम्बन्धनिष्ठप्रकारताशालिज्ञानत्वेन तद्धर्म्मेतरधर्म्मानवच्छिन्नतद्धर्म्मनिष्ठप्रकारताशालिस्मरणं प्रति कारणत्वकल्पनया तादृशनियमास्वीकारेणेष्टापत्तौ चेत्यर्थः। नियामकाभावप्रसङ्गादिति तथाच किञ्चिद्धर्म्मपुरस्कारेण तद्धर्म्मावच्छिन्ने परसम्बन्धज्ञानात् नियमेन

यामकाभावप्रसङ्गात्। सामान्यलक्षणामनङ्गीकुर्वतां पुनरनिष्कृतिरेव, शक्तिग्रहाविषयस्यापूर्वधर्मस्य स्वरूपतः कथमपि भानासम्भवात्। नहि बुद्धिविषयतावच्छेदकत्वेन धर्म्मान्तरविषयकज्ञानं स्वरूपतोऽपरधर्म्मप्रकारकं ज्ञानं जनयितुं प्रभवति। तथा सति समानप्रकारकत्वनियमस्यापि भङ्गप्रसङ्गादिति। मैवम्। भगवत्सङ्केतरूपायां शक्तौ शक्यतावच्छेदकीभूतघटत्वपटत्वादावुपलक्षणीभूतबुद्धिविषयतावच्छेद-

तादृशद्विविधस्मरणापत्तेरिति भावः। सामान्यलक्षणाङ्गीकारे तु बुद्धिविषयतावच्छेदकत्वरूपसामान्यधर्म्मेण तदादिपदस्य प्रथमशक्तिग्रहात् पूर्व्वं अपूर्व्वचैत्रत्वादिज्ञानसम्भवेन तादृशग्रहस्य तादृशचैत्रत्वादिप्रकारकत्वसम्भवादाह सामान्यलक्षणानङ्गीकुर्व्वतामिति अनिष्कृतिरेव अनुपपादनमेव ननु अत्र गृहे घटोऽस्ति समानयेत्यादिवृद्धव्यवहारतः प्रथमं तत्पदस्य बुद्धिविषयतावच्छेदकत्वेन घटत्वेन घटे शक्तिसम्बन्धग्रहो जातः पश्चात् अत्र चैत्रोऽस्ति तं पश्येत्यादिवाक्यघटकपूर्व्वं चैत्रत्वावच्छिन्नपरतत्पदस्यापि बुद्धिविषयतावच्छेदकत्वेन घटत्वावच्छिन्ने जायमानः शक्तिसम्बन्धग्रह एव स्वरूपतोऽपूर्व्वचैत्रत्वादिप्रकारकस्मरणं जनयेत्तथैव हेतुहेतुमद्भावकल्पनादित्यत आह न हीति भङ्गप्रसङ्गादिति स्मरणानुभवयोः समानप्रकारकत्वस्य सर्व्वानुसिद्धत्वेन तस्यापलपितुमशक्यत्वादिति भावः। सिद्धान्तमारभते मैवमिति शक्तिसम्बन्धस्यातिरिक्तत्वे घटत्वपटत्वादिरूपशक्यतावच्छेदकभेदेन न तस्या ऐक्यसम्भव इत्यत आह भगवदिति शक्ताविति शक्तिपदार्थे

कत्वप्रकारेण भासमाने तदादिपदजन्यबोधविषय-
तावच्छेदकत्वं भासते। एवञ्च बुद्धिविषयतावच्छे-
दकरूपावच्छिन्नस्तत्पदाद्बोद्धव्य इत्याकारकस्य तत्पदं
बुद्धिविषयतावच्छेदकरूपावच्छिन्नं बोधयतु इत्या-
कारकस्य वा संकेतस्य विषयताया अननुगतघटत्व-
पटत्वादिनिष्ठाया अपि अनुगतप्रयोगानुकूलवक्तृ-
बुद्धिविषयतावच्छेदकत्वरूपावच्छिन्नतया शक्तेरैक्यं
घटपटादिसंकेतविषयतानां नानाघटादिव्यक्तिनिष्ठानां

इत्यर्थः। अत्र सप्तम्यर्थो निरूपितत्वं तस्य च भासमाने भासते
इत्युभयत्र भासधात्वर्थविषयतायामन्वयः। प्रकारेणेत्यत्र तृतीयार्थः
प्रकारतानिरूपित्वं तस्य च भासमान एतद्घटकीभूतभासधात्वर्थे
विशेषणतायामन्वयः। घटत्वपटत्वादावित्यन्तं विशेष्यं भासमान-
मित्यन्तं विशेषणं तदुत्तरसप्तम्यविषयत्वमर्थः तस्य च निरूपितत्व-
सम्बन्धेन भासत इत्यत्र भासधात्वर्थेऽन्वयः। भासत इत्यत्राख्या-
तार्थं आश्रयत्वं विषयतावच्छेदकत्वमिति प्रथमान्तार्थेऽन्वेति। अत्र
उपलक्षणत्वं पदजन्यशाब्दबोधीयविषयतावच्छेदकत्वावच्छिन्नप्र-
क्तिविषयताशून्यत्वम्। तथाच भगवत्संकेतविषयतानिरूपिततादृ-
शबुद्धिविषयतावच्छेदकत्वनिष्ठप्रकारतानिरूपितविषयताश्रयीभूतं
यत् घटत्वपटत्वादिकं तन्निष्ठविषयतानिरूपितविषयताश्रयो तदा-
दिपदजन्यबुद्धिविषयतावच्छेदकत्वमित्यन्वयबोधः। एवञ्च घटत्वा-
दावुपलक्षीभूतबुद्धिविषयतयावच्छेदकत्वावच्छिन्नशक्तिविषयत्वे च,
घटत्वाद्यनुगतधर्मेण शक्त्यांशे विषयतैक्ये दृष्टान्तमुक्ता अनुगतधर्मेण

घटत्वाद्यनुगतधर्म्मावच्छिन्नत्वेन पश्वादिपदसंकेतविषयतानां प्रकारीभूतनानालोमादिव्यक्तिनिष्ठानां लोमत्वाद्यनुगतधर्म्मावच्छिन्नत्वेन तत्तत्पदशक्त्यैक्यवत् अननुगतहरित्वसिंहत्वादिनिष्ठानां नानार्थहर्य्यादिपदसंकेतविषयतानां अनुगतयत्किञ्चिद्धर्म्मावच्छिन्नत्वाभावात् न शक्तेरैक्यं । तत्रोपलक्षणीभूतकिञ्चिद्धर्मप्रकारेणाभासमानस्यैव हरित्वादेर्भगवत्संकेतरूपायां शक्तौ हर्य्यादिपदजन्यबोधविषयतावच्छेदकत्वं भासत इति न नानार्थमात्रोच्छेद इति । इयांस्तु विशेषस्तत्र घटत्वलोमत्वादिषु तत्तत्पदजन्यबोधविषयतावच्छेदकत्वं भासते इति तानि विशेषणान्युच्यते प्रकृते च बुद्धिविषयतावच्छेदकत्वे सर्व्वनामपदजन्यबोधविषयतावच्छेदकत्वं संकेतेन नावगम्यते अपि तु तादृशविषयतासामानाधिकरण्यमात्रमिति तदुपलक्षणमिति गीयते यद्यपि घटादिपद-

शक्यतावच्छेदकांशे विषयतैक्ये दृष्टान्तमाह पशुपदेत्यादि ननु भगवत्संकेतरूपायां शक्तौ पशुपदादिशक्यतावच्छेदकलोमाद्यंशे लोमत्वाद्यवगाहनेन तत्तत्पदजन्यशाब्दबोधेऽपि लोमत्वादेर्भानवत् शक्तौ तत्पदशक्यतावच्छेदकांशे बुद्धिविषयतावच्छेदकत्वस्य भाने शाब्दबोधे तस्य कथं भानं न स्यादित्यतस्तयोः शाब्दबोधे भानाभानप्रयोजकवैलक्षण्यमाह इयांस्तु विशेष इति तत्रेति

सङ्केतस्य घटत्वादिविशिष्टविषयकत्ववत् सर्व्व-
नाम सङ्केतेन बुद्धिविषयतावच्छेदकत्वे बोधविषय-
तावच्छेदकत्वानवगाहनेऽपि सङ्केतस्य तद्विशिष्टवि-
षयकत्वमक्षतमेवेति सङ्केतविषये तद्विशेषणमेव ।
एवं शक्यविशेषणघटत्वादिनिष्ठे बोधविषयता-

शक्ताविल्यर्थः। विशेषणानीति, तथाच तत्पदजन्यबोधविषय-
तावच्छेदकत्वनिष्ठविषयतानिरूपितशक्तीयविषयतावत्वं साक्षात्
परम्परया वा तत्पदशक्यविशेषणत्वं, सङ्केतीयताट्टशविषयत्व-
स्यैव शाब्दबोधे प्रकारतया भानप्रयोजकत्वादिति भावः।
प्रकृते च सर्व्वनामस्थले चेत्यर्थः। बुद्धिविषयतावच्छेदकत्व इति
अत्र विषयतानिरूपितत्वसम्बन्धावच्छिन्नवृत्तित्वं सप्तम्यर्थः।
तस्य च अवगाह्यत इत्यत्र अवगाह्यर्थविषयतायामन्वयः।
सङ्केतेनेत्यत्र निरूपकत्वरूपकर्तृत्वं तृतीयार्थः, अस्यापि तत्रा-
न्वयः। अवगाह्यत इत्यत्र कर्म्माख्यातार्थाश्रयत्वस्य अवच्छेद-
कत्वमित्यन्तप्रथमान्तार्थेऽन्वयः। ताट्टशविषयतासामानाधि-
करण्यमात्रमिति, सर्व्वनामपदजन्यबोधविषयतासामानाधि-
करण्यमित्यर्थः। अस्य च अवगाह्यत इत्यनेनान्वयः। तदुप-
लक्षणं शक्योपलक्षणम्। ननु तत्पदजन्यबोधविषयतावच्छेद-
कत्वेन सङ्केतविषयत्वरूपविशेषणत्वं शक्यविशेषणमिति व्यव-
हारप्रयोजकमेवास्तु। शाब्दबोधे प्रकारतया भानप्रयोजकन्तु,
यद्विशिष्टे सङ्केतस्तत्त्वं, तच्च संकेतीयविषयतानिरूपितवैशिष्ट्य-
रूपसम्बन्धविषयताकविषयत्वमेव। एवञ्च बुद्धिविषयतावच्छेद-

वच्छेदकत्व-रूपबोध-विषयता-निष्ठसङ्केतविषयता-निरूपितविषयतारूपशक्यत्वे, तदवच्छेदकमपि तथापि बोधविषयतया सङ्केतविषयत्वरूपशक्यतायास्तत्रासत्वेन शक्ये न तद्विशेषणम्। शक्यव्यावर्त्तकशक्यस्यैव शक्यविशेषणत्वात्, इति तस्य शक्यो-

कत्वं सर्व्वनामपदसंकेतीयताद्दशविषयासत्तेन कुतो न तस्य शाब्दबोधप्रकारतया भानमित्याशङ्कते यद्यपीति, ननु तर्हि घटत्वादेरिव बुद्धिविषयतावच्छेदकत्वस्य घटादौ साक्षाद्भानं न कुत इत्यतस्तत्र आह एवमिति, शक्यत्व इति अत्र सप्तम्यर्थनिरूपितत्वस्य अवच्छेदकघटकपदार्थावच्छेदकतायामन्वयः। तदिति बुद्धिविषयतावच्छेदकत्वमित्यर्थकं। शक्यांश शाब्दबोधीय विषयत्वेन संकेतविषयत्वरूपविशेषणत्वस्य शक्यविशेषणव्यवहारप्रयोजकतावत् शाब्दबोधप्रकारताप्रयोजकत्वात् न तदापत्तिरिति समाधत्ते तथापीति। तत्रेति बुद्धिविषयतावच्छेदकत्व इत्यर्थः। न तद्विशेषणमिति तद्बुद्धिविषयतावच्छेदकत्वं, न विशेषणं, शाब्दबोधप्रकारताप्रयोजकविशेषणत्वाभाववदित्यर्थः। ननु शक्तौ शक्यांश भासमानत्वे सति तदनुगमकस्यैव विशेषणत्वेन बुद्धिविषयतावच्छेदकत्वस्य कुतो न सर्व्वनामपदशक्यविशेषणत्वमत आह शक्यव्यावर्त्तकशक्यस्यैवेति, शक्यव्यावर्त्तकत्वं शक्यानुगमकत्वं, तच्च नानाशक्यनिष्ठविशेष्यतानिरूपितप्रकारत्वं ननु इतरव्यावच्छेदकत्वं सर्व्वादिपदशक्य

पलक्षणतया आकाशपदजन्यशाब्दबोधे शब्दा-
श्रयत्वभानानियमवत् तदादिपदजन्यबोधे तद्भान-
निर्व्वाहः। तद्बीजन्तु तदुपलक्षितघटत्वादिविषयक-
त्वेन तदविषयकघटत्वादिबोधस्यापि सङ्केतविष-
यत्वं घटादिपदसङ्केतस्य च घटत्वादिविशिष्टविष-
यकबोध एव विषय इति तज्जन्यबोधे तादृशधर्म्मभा-
ननियमः। जातित्वादिविशिष्टघटत्वाद्यवच्छिन्नस्य

तावच्छेदकस्य सर्व्वत्वादिनिरवच्छेदकत्वासम्भवात्। शक्य-
स्यैवेति तत्तत्पदजन्यबोधविषयत्वेन सङ्केतविषयताश्रयस्यैवेत्यर्थः।
शक्यविशेषणत्वादिति, तथाच शक्यानुगमकत्वे सति पदजन्य-
बोधविषयत्वेन सङ्केतीयविषयत्वस्यैव शक्यविशेषणतात्वमिति
भावः। शब्दाश्रयत्वाभानानियमवदिति, आकाशपदस्य स्वरू-
पतः शक्यङ्गीकर्त्तॄणां मते शब्दाश्रयत्वस्य उपलक्षणत्वादिति
भावः। तद्भाननिर्व्वाहः बुद्धिविषयतावच्छेदकत्वाविषयत्वनि
र्व्वाहः। ननु शक्तौ बुद्धिविषयतावच्छेदकत्वस्योपलक्षणत्वं नतु
विशेषणत्वमित्यत्र किं नियामकमित्यत आह तद्बीजन्त्विति।
यथा यद्विशिष्टविशेष्यविषयकत्वमिति तद्विशिष्टनिष्ठविशेष्य-
तात्मकविषयताप्रकारताकत्वमित्यर्थः। स्वरूपतो घटत्वादिना
घटादेः शब्दबोधोपपादिकां तद्रूपेण तच्छब्दः शक्तिं व्युत्पाद्य,
जातित्वादिकिञ्चिद्धर्म्मपुरस्कारेण घटत्वादिना घटादेः शाब्दबोध-
प्रयोजिकां शक्तिं व्युत्पादयति जातित्वादिविशिष्टेति। तथाच
तत्पदजन्यजातित्वावच्छिन्नघटत्वनिष्ठप्रकारताकशाब्दबोधं प्रति

तदादिपदाद्यधीनबोधे तु बुद्धिविषयतावच्छेदक-तावच्छेदकत्वोपलक्षितधर्म्मविशिष्टावच्छिन्नविषय-कत्वावगाही सङ्केतः प्रयोजक इति, तत्र जाति-त्वावच्छिन्नघटत्वादिनिष्ठप्रकारता एव विषय इति

तत्पदजन्यत्वप्रकारताकविशेष्यत्वावच्छिन्नप्रकारतानिरूपिता या बुद्धिविषयतावच्छेदकतावच्छेदकत्वनिष्ठसामानाधिकरण्यसम्ब-न्धावच्छिन्नावच्छेदकताकावच्छेदकतात्वावच्छिन्नावच्छेदकता-कप्रकारतात्वावच्छिन्नावच्छेदकताक-विषयतानिष्ठप्रकारताक-जातिमत्त्वावच्छिन्नविशेष्यताशालिसंकेतविषयकज्ञानत्वेन हेतुता वक्तव्या । संकेताकारस्तु जातिमानतत्पदजन्यबोधीयबुद्धिविष-तावच्छेदक-तावच्छेदक-त्वोपलक्षित-धर्म्मावच्छिन्न-प्रकारताक-विषयतावान् भवत्विति तु न वक्तुं शक्यते। यतो यत्र घटत्वत्वादिना घटत्वाद्यवच्छिन्नो वक्तृबुद्धिस्थतस्तात्पर्य्येणापि तच्छब्दप्रयोग, स्तत्र घटत्ववान् तत्पदबोधीयबुद्धिविषयताव-च्छेदकतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्नप्रकारताकविषय-तावान् भवत्वित्यादिरीत्या सङ्केता वाच्याः। तथाच सङ्केतस्य नानात्वेन तस्य नानार्थत्वापत्तेः। अपि तु तत्पदं बुद्धिविषय-तावच्छेदकतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्नप्रकारताकवि-षयताशालिबोधजनकं भवत्वित्याकारो वाच्यः। एवञ्च तत्पदं बुद्धिविषयतावच्छेदकतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्ने शक्त-मित्याकारकसङ्केतज्ञानात्, कदाचिज्जातित्वेन घटत्वावच्छिन्न-स्योपस्थितिः कदाचित् घटत्वत्वादिना घटत्वावच्छिन्नस्योप-

स्थितिरिति । क्वचिज्जातित्वादिना, क्वचिद् घटत्वत्वादिना शाब्दबोध इति नियमस्य चानुपपत्तेरिति चेन्न । यतः श्रोता पुरुषो यदा जातित्वादिना घटत्वावच्छिन्नो वक्तृबुद्धिविषय इति प्रकरणादिना ज्ञात्वा, जातित्वविशिष्टावच्छिन्नस्तत्पदशक्य इति जातिविशिष्टे शक्तिं गृह्णाति, तदा जातित्वेन घटत्वावच्छिन्नं प्रतिपद्यते। यदा तु घटत्वत्वेन घटत्वावच्छिन्ने प्रकरणादिना वक्तृबुद्धिविषयत्वं गृह्णाति तदा तत्तुल्यरीत्या तद्रूपेण तद्रूपेण तत्र शक्तिमवधार्य्य, तं शब्दाद् बुध्यते । एवं सति शक्तिग्रहशाब्दबोधकल्पनेऽनुपपत्त्यभावात्, एतच्चाग्रे व्यक्तयिष्यामः । नन्वेवमपि सर्व्वनामपदात् जातित्वादिना घटत्वावच्छिन्नशाब्दबोधोत्पत्तये बुद्धिविषयतावच्छेदकतावच्छेदकत्वोपलक्षितधर्म्मविशिष्टे पृथक् शक्तिकल्पने नानार्थत्वापत्तिर्दुर्व्वारैवेति चेदत्र केचित्। साक्षात् परम्परासाधारणबुद्धिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यधिकरणत्वेनोपलक्षितेन स्वरूपतो घटत्वावच्छिन्ने जातित्वादिना च घटत्वाद्यवच्छिन्ने एकैव शक्तिः कल्प्यते । नच पृथक् जातित्वादिविशिष्टेत्यादिग्रन्थस्तु तद्रूपेण एकशक्तिग्राहकपरः । अन्यथा नित्यत्वे सति अनेकसमवेतत्वरूपजातित्वस्य सखण्डतया बुद्धिविषयतावच्छेदकतावच्छेदकत्वेन तस्यानुगमासम्भवादिति । घट एकत्ववानिति स्थानीयविशेष्यताख्यविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यधिकरणत्वस्य स्वरूपतो घटत्वे जातिमान एकत्ववानित्यादि-स्थानीयविशेष्यतारूपविषयतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यधिकरणत्वस्य जातित्वविशिष्टघटत्वादौ वर्त्तते।

न। जातिमानित्यादिबोधकाले घट इत्याकारक-बोधः। अथ किञ्चित् प्रकारेण भासमानधर्म्मेऽ-वच्छेदकत्वं भासमाने तद्विशिष्ट एव भासते, न तदुपलक्षिते इति नियमः। कथमन्यथा स्वरूपतो

अथवा तत्तद्बुद्धिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगि-ताकपर्य्याप्तिसम्बन्धेन तादृशावच्छेदकतात्वावच्छिन्नवत्त्वस्य घटत्वादौ तादृशजातित्वाद्यवच्छिन्ने च सत्त्वेन तादृश-तादृशज्ञानमादाय तादृशतादृशतत्तद्धर्म्मे अनुगतोपलक्षित-तत्तद्धर्म्मेणानुगतशक्यतावच्छेदकत्वसम्भव इत्याहुः। नव्यास्तु बुद्धिविषयतावच्छेदकत्वेन घटत्वपटत्वचैत्रत्वादीनां बुद्धिविषय-तावच्छेदकत्वेन स्वरूपत एकशक्यतावच्छेदकत्वं अतो न तत्तद्धर्म्मभेदेन शक्तेर्भिन्नत्वं। समवेतत्वादिना जातित्वादिना च घटत्वादौ च बुद्धिविषयतावच्छेदकतावच्छेदकत्वेन तदवच्छे-दकत्वेन च पृथक्शक्यतावच्छेदकत्वं सर्व्वनाम्नो नानार्थता च स्वरूपतः शक्यतावच्छेदकतावच्छेदकादिभेदेनेष्यत एवेति प्राहुः। वस्तुतस्तु अनुगमघटितवक्ष्यमाणसिद्धान्तकल्पे सर्व्व-साधारणैकशक्तिकल्पनप्रकारो दर्शयिष्यत एवातोऽत्राशङ्का-समाधानाभ्यामलमिति ब्रूमः। न जातिमानिति, तथाच सङ्केतेन यादृशबोधोऽवगाह्यते तादृशबोधं प्रति तादृशसङ्केत-ज्ञानस्य कारणत्वादिति भावः। तदवच्छेदकतानापन्नेन धर्म्मेण भासमानेऽवच्छेदकत्वमङ्गीकर्त्तुं न शक्यत इति [illegible]ने, अथेति। तद्विशिष्ट एवेति. विशेषणेऽपि अवच्छेदकत्वं

घटत्वावच्छिन्नाभावस्य न जातिमान्नास्तीत्याका-
रिका प्रतीतिः। एवञ्च बुद्धिविषयतावच्छेदक-
त्वोपलक्षिते कथं बोधविषयतावच्छेदकत्वं सङ्गते-
नावगाहनीयमिति चेन्न। अवच्छेदकताया अवच्छे-
द्याश्रयविशेषणतापन्नस्य संसर्गविधया भान एव तथा

भानत इति भावः। न जातिमान् नास्तीत्याकारिकेति,
तथाच जातिमान् नास्तीत्याकारकप्रतीतेः सद्रूपतो घटत्वा-
द्यवच्छिन्नाभावविषयकत्वे घटशून्यपटवति देशे जातिमा
न्नास्तीति प्रतीत्यापत्तेरिति भावः। यो धर्म्मो भासते येन
तद्विशिष्टे हि भासते तत्रावच्छेदकत्वं वै ननु तेनोप-
लक्षिते। संसर्गविधया भाने नियमोऽयं प्रकीर्त्तितः।
अन्यथा तत्पदाच्छक्त्या भानमेव हि दुर्लभमिति कारिकोक्तदिशा
सिद्धान्तमारभते। अवच्छेदकताया इति अवच्छेद्याश्रयः प्रति-
योगित्वाद्याश्रयः। तत्र विशेषणत्वं तन्निष्ठविशेष्यताक
प्रकारताश्रयत्वं। तदापन्नस्य तदाश्रयस्य। संसर्गविधया,
तन्निरूपितसांसर्गिकविषयतया। अत्र च तृतीयार्थोऽभेदस्तस्य
च भाधात्वर्थविषयतायामन्वयः। तथा नियमादिति, तद्विशिष्टे
हि भासत इति नियमादित्यर्थः। अयमाशयः, घटो नास्ती-
त्यादिप्रतीतौ घटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटा-
देरभावादौ भानेन तत्रावच्छेदकतायाः संसर्गविधया भानात्,
अवच्छेद्यप्रतियोगित्वाश्रये घटे घटत्वं विशेषणमेव। तथाच
तत्र घटत्वादिकं अवच्छेदकमेव न तूपलक्षणमिति। ननु किञ्चि-

नियमात्। अन्यथा धूमव्यापकतावच्छेदकरूपाव-
च्छिन्नप्रतियोगिता-काभाववानित्याकारकव्यापक-

धर्म्मप्रकारेण भासमाने यत्नावच्छेदकत्वं भासते, तद्विशिष्ट एव तदिति सामान्यनियम एवादरणीयो लाघवादित्यत-स्तत्र बाधकमाह अन्यथेति। अवच्छेदकतायाः संसर्गविधया भान एव तादृशनियम इत्यस्वीकारे इत्यर्थः। धूमव्यापकता-वच्छेदकेत्यादिधूमाभावरूपव्याप्याभावानुव्यापकतादृशप्रतीत्य-नुपपत्तेरित्यर्थः। तया च तादृशानुमित्यनुत्पादभयेन उक्त-ज्ञानस्यापक्षेतुमशक्यत्वादिति भावः। न च तत्र धूम-व्यापकतावच्छेदकत्वावच्छिन्नवह्नित्वनिष्ठावच्छेदताकप्रतियो-गित्वाभाववत्त्वज्ञानस्यैव वाप्याभावानुमितिहेतुत्वमिति वाच्यं। तादृशरूपेण कारणत्वे व्यापकतावच्छेदकवान्नास्तीत्याकार-कज्ञानस्यैव हेतुतया प्रमेयत्वादेरपि धूमव्यापकतावच्छेद-कतया तदवच्छिन्नाभावाप्रसिद्ध्या, विशेषदर्शिनां तादृश-ज्ञानानुपपत्तेः। न च धूमव्यापकतावच्छेदकत्ववह्नित्वो-भयधर्म्मावच्छिन्नावच्छेदकताकप्रतियोगिताकाभाव-ज्ञानत्वेन हेतुता। तथाच धूमव्यापकतावच्छेदकवह्नित्ववान्नास्ती-त्याद्याकाराभावज्ञानस्यैव प्रसिद्धत्वान्न तद्दोष इति वाच्यं। तादृश रूपेण हेतुत्वे, धूमव्यापकतावच्छेदकत्वादेरपि अभाव-प्रतियोगित्वावच्छेदक-कोटिप्रविष्टस्य विषयतायाः कारणतावच्छेदकघटकतया महागौरवापत्तेः। गुरुधर्म्मस्या-भावप्रतियोगितानवच्छेदकत्वे तादृशाभावाप्रसिद्धे स्तादृश-नियमस्य सङ्कोचकल्पनाया न्याय्यत्वाच्चेति। नचेद मप्रामा-

तावच्छेदकत्वोपलक्षितवह्नित्वा-द्यवच्छिन्नाभाव-
प्रतीत्यनुपपत्तेः। प्रकृते च तत्पदं बुद्धिस्थप्रकारा-
वच्छिन्नविषयताकबोधं जनयत्वित्याकारकोऽवच्छे-
द्यावच्छेदकभावप्रकारक एव सङ्केतोऽङ्गीकार्य्य
इत्यानुपपत्तेरभावात्। स्वरूपतो घटत्वादिप्रका-
रकस्मरणाद्युपयोगी शक्तिग्रहः। स्वरूपतो घट-
त्वादिप्रकारक एव यदा स्वरूपतो यद्धर्म्मप्रकार-
कज्ञानसामग्री, तदैव स्वरूपतस्तद्धर्म्मप्रकारेण
शक्तिं गृहीत्वा, स्वरूपतस्तत्प्रकारेण धर्म्मिणं

गिकं, येन रूपेण व्यापकता गृह्यते तद्रूपावच्छिन्नाभावत्वेना-
भाववत्ताज्ञानं हेतुरित्यादिना दीधितिकृता तथा लिखित-
त्वात्। एतच्चाभावसाध्यकस्थले व्यापकत्वविशिष्टवैशिष्ट्या-
वगाहिज्ञानस्यापि कारणत्वमते उक्तं। तेन मतविशेषे
धूमादिव्यापकतावच्छेदकत्वविशिष्टवह्नित्वावच्छिन्नप्रतियोगि
ताकाभाववत्ताज्ञानस्यापि कारणत्वे, न क्षतिरिति मन्तव्यं।
ननु स्वरूपतो घटत्वादिप्रकारकशक्तिग्रहः कदाचित् कुतो
जायते इत्यत आह यदा स्वरूपत इति। घटोऽस्य
वक्तुर्बुद्धिस्थ इत्याकारकयोग्यज्ञानसामग्रीत्यन्वयः। यदेति
कर्त्तृपदमध्याहार्य्यं। ननु यत्र घटोऽस्ति तमानयेत्यादि
व्यवहारदर्शनादिना घटादौ तत्पदस्य शक्तिग्रहः सुघटोऽस्तु
यत्र व्यवहारो न दृष्टस्तत्र शक्तिग्रहः कुतो जायते इत्यत

स्वरत्यनन्तरमनुभावयति च मानसे च शक्तिग्रहे न व्यवहारदर्शनादेरपेक्षा । अपि त्व संसर्गाग्रह-सहितोपस्थितेरेवेति । यद्धर्मावच्छिन्ने तदादि-पदघटितवाक्यात् व्यवहारो न दृष्टस्तदवच्छिन्न-स्यापि मानसशक्तिग्रहणोद्भवः सुघट एव । न च

आह मानसे चेति, असंसर्गाग्रहसहित इत्यादि । असं-सर्गाग्रहः तद्धर्मावच्छिन्ने तत्पदशक्यत्वबाधनिश्चयाभाव-स्तत्सहिताया तत्पदशक्यत्वतत्तत्पदार्थोपस्थितिस्तस्या इत्यर्थः । मानसशक्तिग्रहात् उपनयजन्यालौकिकमानसशक्तिग्रहात् । ननु बाधनिश्चयाभावसहकृततत्तद्विशेषणोपस्थित्या यदि विशिष्टशक्तिग्रहो जायते, तदा शक्तिविपरीतकोटेरपि बाध-काभावेन उपस्थितिसम्भवेन तत्तत्संशयो जायत एवेति कथं शक्तिनिर्णय इत्याशङ्कते न चेति । बाधितस्य शक्त्यादिविरहस्य । ननु लौकिकप्रत्यक्षादौ विषयस्य बाधितस्य भाने, पित्तादि-दोषापेक्षास्तु यत्रालौकिकसन्निकर्षादिना एककोटिरपि निर्वक्तुं न शक्या, तत्र बाधिता कोटि रुपस्थितिबलात् दोष-मनपेक्ष्यैव भासतां । अन्यथा धूमादौ वह्निव्यभिचारस्य रूपादौ वायुवृत्तित्वस्य परमाण्वादौ सावयवत्वस्य च, सन्देहः कदापि न स्यात् । स्याच्च तर्कानुसरणस्य शास्त्रकाराणां युक्त्यन्तरप्रदर्शनस्य वैकल्यमिति तत्तद्विपरीतकोटेः स्वतो भाने बाधकं दर्श-यितुमाह, एवं सतीति । कतिपयविषयेष्विति गोघटादिष्वि-त्यर्थः । सर्वनामघटितवाक्यात् अत्र गृहे गौरस्ति तमा-

व्यवहारदर्शनाद्यविषये मनसा शक्तिनिश्चेतुं न शक्यते। विपरीतकोटेरप्युपस्थितिमात्रेण मानज्ञाने भानसंभवादिति वाच्यं। उपस्थितस्यापि बाधितस्य दोषमन्तरेणाभानान्निश्चयस्याप्युपपत्ते-रिति चेन्न कतिपयविषयेषु सर्व्वनामघटितवाक्यात् प्रयोज्यस्य प्रवृत्तिमुपलभमानः प्रवर्त्तकज्ञानविषय-कतिपयविषये शक्तिं कल्पयन् बुद्धिविषयतावच्छे-

दयेत्यादिवाक्यात्। प्रयोज्यस्य नियोज्यपुरुषस्य प्रवृत्तिं गवानयनादिषु प्रवृत्तिं, उपलभमानः निश्चिन्वन् समीपस्थ-पुरुष इति शेषः। कल्पयन् अनुमिन्वन्, बुद्धिविषयतावच्छेदक-धर्म्मावच्छेदेनेति। न च यदि प्रवर्त्तकज्ञानविषयकतिपय-पदार्थे शक्तिज्ञानेन सामान्यतो बुद्धिविषयतावच्छेदकावच्छे-देन शक्त्यवधारणं जायते, तदा तुरीतन्तुप्रभृतिकतिपयद्रव्येषु पटादिजनकत्वदर्शनेन द्रव्यत्वावच्छेदेन पटादिजनकत्वं गृह्णीयादिति वाच्यं। यथा कतिपयदण्डेषु घटजनकत्वं दृष्ट्वा, व्यभिचारादर्शनलाघवज्ञानादिसहकारेण दण्डत्वाव-च्छेदेन तदवधारयति। तद्वदत्रापि तादृशज्ञानजनने बाधका-भावात्। अन्यथा निखिलधर्म्मिज्ञानासम्भवेन जलाद्यवच्छे-देन वह्निमत्त्वादिज्ञानं कदापि नोत्पद्येत। द्रव्यत्वादव-च्छेदेन पटादिजनकत्वग्रहस्तु व्यभिचारदर्शनेन न जायत इति। ननु बुद्धिविषयतावच्छेदकावच्छेदेन तत्पदशक्तत्वनिश्चय-

दकधर्म्मावच्छेदेन तत्पदशक्यत्वं सामान्यतोऽवधार-यति। एवञ्च चैत्रोऽस्य बुद्धिविषयतावच्छेदक-धर्म्मवान् इति यदा तेन गृह्यते, तदानीमस्य चैत्र-स्तत्पदवाच्यो न वेति सन्देहो नावतरितुमर्हति। यादृशधर्म्मावच्छेदेन यदवधारितं, तादृशधर्म्मनिश्च-यस्य स्वसमानधर्म्मितावच्छेदकतद्विरोधिकोटि-भानविरोधित्वादितिसम्भवत्येवापूर्व्वविषयेऽपि मा-नसः शक्तिनिश्चयः। अथैवमपि तत्पदे चैत्रत्व-

सहकृतस्य चैत्रत्वावच्छिन्ने बुद्धिविषयतावच्छेदकवत्तानिश्च-यस्य विपरीतकोटिनिरासद्वारा सामान्यतश्चैत्रत्वावच्छिन्ने तत् पदशक्यत्वनिश्चायकत्वेऽपि तत्पदशक्यत्वं चैत्रत्वावच्छिन्नं किमन्यधर्म्मावच्छिन्नमिति सन्देहानिरासात् तत्पदे चैत्रत्व-विशिष्टवाचकतासन्देहोदयेन तादृशनिश्चयाजननात् कुत-स्तत्पदात् चैत्रत्वविशिष्टस्य शाब्दबोध इत्याशङ्कते अथैव-मपीति। गवादिपदं सास्नादिमत्त्वादिविशिष्टवाचकमिति भ्रम-वतः सास्नादिमत्त्वं न शाब्दबोधस्येष्टापत्तेराह भ्रान्तस्येति। सिद्धान्तमारभते तत्तत्पदप्रयोजकेति शक्तिं गृहीत्वेत्यन्तेन तत्तद्धर्म्मावच्छिन्नविषयकबुद्धिप्रयोज्यत्वस्य तत्तद्धर्म्मविशिष्ट-वाचकत्वस्य च परस्परं सहचारदर्शनं व्यभिचारादर्शनञ्च व्याप्तिग्राहकं पूर्व्वमस्तीति सूचितं। सामान्यतो व्याप्तिमवधार-यतीति सामान्यतो व्याप्त्यवधारणञ्च यत्र प्रकृतसाध्यसाधनयोः

विशिष्टवाचकतासन्देहस्य दुरुच्छेदतया, तत्पदा-दयवहारदर्शनाविषयचैत्रत्वावच्छिन्न-विषयकशाब्द-बोधो दुरुपपाद एव। तद्धर्म्मप्रकारकशाब्दबोधे तद्धर्म्मविशिष्टवाचकतानिश्चयस्य हेतुत्वा, दन्यथा गवादिपदादभ्रान्तस्य शक्त्या साक्षादिमत्त्वप्रकारेण शाब्दबोधापत्तेरिति चेन्न। तत्तत्पदमयोजक-

सहचाराद्यनिश्चयेन व्याप्तिग्रहासम्भवेऽपि तत्सजातीयसाध्य-साधनयोः सहचारदर्शनादिजन्यव्याप्तिनिश्चयः तादृशव्याप्ति-निश्चयसहितेन, अथवा सजातीयनानाहेतौ सजातीयनाना-साध्यसहचारग्रहस्य प्रकृतहेतौ प्रकृतसाध्यव्याप्तिग्रहं प्रति स्वातन्त्र्येण हेतुताकल्पनात् प्रकृतहेतोः पक्षधर्म्मता-मात्रग्रहेण सजातीयसाध्यहेतुसहचारदर्शनजन्यव्याप्तिग्रहेण वा प्रकृतसाध्यानुमिति रिति भावः। न च प्रकृत-साध्यव्याप्यहेतुमत्तानिश्चयामत्त्वेन कुतोऽनुमितिरिति चेन्न व्यतिरेकसाध्यकस्थले प्रतियोगितावच्छेदकावच्छिन्नव्याप-काभावनिश्चयस्येव तादृशज्ञानस्यापि स्वातन्त्र्येणैव हेतु-त्वात्। अन्यथा स्वकीयस्तनपानादिविषयककृतिसाध्यत्व-ज्ञानप्रवृत्त्योः सहचारदर्शनेन यो यत्र प्रवर्त्तते स तं कृतिसाध्य-तया जानाति इति सामान्यव्याप्तिमवधार्य्य, बालकस्य गवानय-नादौ प्रवृत्तिदर्शनेन, गवानयनादिविषयकप्रयोज्यपुरुषीय-कृतिसाध्यत्वज्ञानानुमित्यनुपपत्तेरनुत्पत्तेश्च लिङ्, स्तदधीन-कार्य्यत्वग्रहत्वज्ञानस्य। ननु साधनसजातीये साध्यसजा-

बुद्धिप्रकारतया गृहीतघटत्वपटत्वादिविशिष्टे व्यवहारदर्शनात्, तत्पदस्य शक्तिं गृहीत्वा, यद्यत्पदं यादृशयादृशधर्मावच्छिन्नविषयकबुद्ध्या प्रयुज्यते, तत्तत्पदं तद्धर्मविशिष्टशक्तमिति सामान्यतो व्याप्तिमवधारयति। तदनन्तरञ्च, प्रत्यक्षगृहीतचैत्रत्वादिविशिष्टविषयकबुद्धिप्रयोज्यत्वं प्रकरणादिना यत्र तत्पदे गृह्णाति, तत्र पक्षे

तीयव्याप्तिनिश्चयादेव यदि प्रकृतसाध्यानुमितिर्भवति, तदा दीधितिकारस्य यो यदीययावद्विशेषाभावान् इत्यादिना सामान्यव्याप्तिं प्रदर्श्याग्रे यत्त्वतत्त्वयोरननुगमादित्यनेन तद्दूषणदानस्यासङ्गत्यापत्तेः। यत्त्वतत्त्वयोरननुगमस्य तद्विघटकत्वादिति चेन्न। यो यदीयेत्यादिवाक्यस्य प्रकृतसाध्यतत्सजातीयसाधारणाद्यनुगतरूपेणैकव्याप्तिपरत्वमभिप्रेत्य प्रथमतो दूषणं प्रदर्श्य, तत उक्तरीत्या दोषासम्भवेन एकावच्छेदेनेत्यनेन दोषान्तरप्रदानात्। साजात्यञ्चात्र स्वसाध्यकानुमितिप्रयोजकोदाहरणघटकहित्वयत्पदतात्पर्य्यविषयत्वेन एव मन्त्रापि यथायथं बोध्यं। तादृशहेतुनेति चैत्रत्वादिविशिष्टविषयकबुद्धिप्रयोज्यतत्पदत्वहेतुनेत्यर्थः। चैत्रत्वविशिष्टवाचकत्वस्य जन्यबोधीयचैत्रत्वनिष्ठनिरवच्छिन्नावच्छेदकताकविषयतात्वावच्छिन्नप्रकारकताकेच्छीयविशेष्यतायाः परम्परया निरूपकत्वस्य प्रागसिद्धस्यापि प्रागननुभूतस्यापि। तत्पदे

तादृशहेतुना चैत्रत्वविशिष्टवाचकत्वस्य प्रागसिद्ध-स्यापि पक्षधर्मतावलात् अनुमित्यात्मकनिश्चये-नावगाहनसम्भवात् न काप्यनुपपत्तिः। केचित्तु बुद्धिविषयतावच्छेदकत्वेनानुगतधर्म्मेण सकलधर्म्म-विषयकसंस्कारस्य सामान्यप्रत्यासत्त्यधीनानुभव-जन्यस्य सत्वे, प्रमुष्टबुद्धिविषयतावच्छेदकतांशं स्वरूपतश्चैत्रत्वादिप्रकारकशक्तिस्मरणं निराबाध-

बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्म्मविशिष्टवाचकमिति वृद्ध-व्यवहारतो जायमानं शक्तिज्ञानं बुद्धिविषयतावच्छेदकत्व-रूपसामान्यप्रत्यासत्त्या ज्ञायमानघटत्वचैत्रत्वादिनिखिलविष-यकं भवति, तज्जन्यसंस्कारोऽपि तथा। तदधीनस्मरणञ्च बुद्धि-विषयतावच्छेदकत्वानवगाहि। तत् पदं चैत्रत्वादिविशिष्टवाच-कमित्याद्याकारकं जायते। तदंशे उद्बोधकाभावात् फलबलेन च तत्तद्विषयकसंस्कारस्यापि तत्तदंशे उद्बोधकाभावमह-कारित्व तत्तदविषयकस्मरणं प्रत्यपि हेतुत्वकल्पनादिति वदतां केषाञ्चिन्मतमाह केचित्त्विति। प्रमुष्टबुद्धिविषयकताव-च्छेदकतांशं प्रमुष्टं त्यक्तं स्वाविषयकबुद्धिविषयतावच्छेदकता-ंशमिति यावत्। अनपेक्षणादिति तथाच जातित्वेतरधर्म्मा-नवच्छिन्नघटत्वनिष्ठप्रकारताकविशेष्यताशालि स्मरणादिकं प्रति जातित्वावच्छिन्नघटत्वनिष्ठप्रकारताकविशेष्यताशालि सं-स्कारत्वेन तादृशविषयतादिशाल्यनुभवत्वेन च कारणत्वमिति

मिति। तन्मूलकमेव स्वरूपतोऽपूर्व्वं चैत्रत्वादि-प्रकारकशाब्दज्ञानं भविष्यतीति। किमनुपपन्नं स्वरूपतस्तत्प्रकारकस्मरणे स्वरूपतस्तत्प्रकारक-संस्कारानुभयोरनपेक्षणात्, तद्बोधकवैचित्र्यादेव कदाचिज्जातिमान् इत्याकारकं कदाचिद्घट इत्याकारकं स्मरणमिति नियमोपपत्तेः। स्वरूपतो घटत्वादिप्रकारकानुभवजनितसंस्कारवतोऽपिजातित्वादिना घटत्वादिप्रकारकात् संस्कारात् कदाचित् स्वरूपतो घटत्वाद्यप्रकारकस्य जाति-

भावः। नन्वेवं सति जातित्वेन घटत्वप्रकारकसंस्कारात् जातित्वेन घटत्वप्रकारकं स्वरूपत्वो घटत्वप्रकारकस्य स्मरणं नियतं स्यादित आह उद्बोधकवैचित्र्यादेवेति। उद्बोधवैलक्षण्यादेवेत्यर्थः। तथा च यदा जातित्वेन स्मरणप्रयोजकं उद्बोधकं सम्भवति तदा तद्रूपेण स्मरणं, यदा स्वरूपतो घटत्वप्रकारकस्मरणप्रयोजकमुद्बोधकं तदा तादृशं स्मरणमित्यनियमो नेत्यर्थः॥ स्वरूपतस्तत्प्रकारकस्मरणं प्रति स्वरूपतस्तत्प्रकारकसंस्कारानुभवयोः कारणत्वेऽपि उद्बोधकस्य नियामकत्वमावश्यकं, न तु मध्यत एवेत्याह स्वरूपत इति। आवश्यकत्वादिति, उद्बोधकविशेषविरहस्य स्मृतिविशेषविरहप्रयोजकत्वे युगपदेव स्वरूपतो घटत्वप्रकारकस्मृतिः जातित्वादिना च घटत्वप्रकारक-

मानित्वाकारकस्मरणस्योदयेन स्वरूपतस्तत्-प्रकारिकायां स्मृतौ तादृशसंस्कारानुभवयोर्विशिष्यहेतुत्वेऽप्युद्बोधकविशेषविरहस्य तादृशस्मृतिविरहप्रयोजकताया आवश्यकत्वात् तादृशहेतुताया अप्रमाणिकत्वात्। कथमन्यथा विशेषणान्तरानवच्छिन्न अस्मदाद्यदृष्टशरीरविशेषनिष्ठजातिविशेषावच्छिन्न शक्केतितरामरावणादिपदेभ्यो वाक्यार्थधीरस्माकं, कथं वा निर्व्विशेषणकातीन्द्रियजातिविशेषावच्छिन्नवाचकमनःपदात् शाब्दधी, स्तत्र जातित्वादिना जातिविशिष्टे शक्तिग्रहेण प्रमुष्ट-

स्मृतिश्च उपपद्येत उभयोः सामग्री सत्त्वादिति भावः। अत एव प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावादयुगपत्स्मरणमिति न्यायसूत्रेण तथैवोक्तं। प्रणिधानादिकन्तु अनुपदं व्याख्यास्यामः। तादृशहेतुताया इति स्मृतिसंस्कारयोर्विशिष्यहेतुताया इत्यर्थः। किञ्चिद्धर्म्मपुरस्कारेण तद्धर्म्मप्रकारकसंस्कारात् स्वरूपतस्तद्धर्म्मप्रकारकस्मरणास्वीकारे दयमुखाद्यवच्छिन्नशरीरवृत्ति-जातिविशेषा-वच्छिन्न-वाचकरामरावणादि-पदेभ्यः स्वरूपतस्तादृशजात्यवच्छिन्नस्याऽस्मदाद्यननुभूतत्वेन शक्तिस्मरणासम्भवात् स्मरणासम्भवेन शाब्दबोधानुदयः स्यादित्याह कथमन्यथेति तत्रेति रामरावणमनःपदादावित्यर्थः जातित्वादिनेति शक्तिग्रहेण स्वरूपतः स्मरणद्वारा शक्तिग्रहप्रयो-

जकताहृशसंस्कारेणेत्यर्थः। तथाच जातित्वावच्छिन्नजातिनिष्ठ-प्रकारताकेन शक्तिग्राहकसंस्कारेणेत्यर्थः। एतेन रामादिपदानां जातित्वेन ताहृशजात्यवच्छिन्नशक्तिग्राहकाभावात्ताहृशशक्ति-ग्रहासम्भवेऽपि न क्षतिः। अयम्भावः जातित्वादिना यत्किञ्चि-द्घटत्वादिप्रत्यक्षान्तरं सामान्यप्रत्यासत्त्या निखिलजाति-मद्विषय-कानुभवेन उपनयनेन जातविशिष्टानुभवजनितताहृशसंस्का-रात् प्रकृष्टजातित्वांशं रामरावणादिशरीरवृत्तिजातिपुरस्कारेण ताहृशजातिमद्विषयकं स्मरणात्मकस्तत्तत्पुराणकोषादिभ्यः स्वरू-पतस्ताहृशजात्यवच्छिन्ने शक्तिग्रहो जायते। तदनन्तरं ताहृश-शक्तिग्रहवशात् स्वरूपतस्ताहृशजात्यवच्छिन्नस्य स्मरणं शाब्द-बोधश्च भवतीति। स्वरूपतस्तद्धर्म्मप्रकारकस्मृतौ स्वरूपतस्त-द्धर्म्मप्रकारकसंस्कारत्वेन हेतुत्वेऽपि रामरावणादिपदेभ्यः शाब्द बोधमुपपादयति रावणादीति। न च रावणादिपदानां शक्ति-ग्रहे शक्यसम्बन्धरूपलक्षणाया ग्रहासम्भवात् कथं तत्तत्पदार्थ-त्वादिना शाब्दबोध इति वाच्यं, यत् पदं साधुपूर्व्वपूर्व्वैर्व्युत्पन्नैः प्रयुक्तं तत्पदं किञ्चिद्वाचकमिति सामान्यव्याप्त्या तत्तत्पद-शक्यत्वग्रहसम्भवात् लक्षणाग्रहे शक्यतावच्छेदकावगाहनस्या-नपेक्षणादिति भावः। केचित्तु इदानीन्तनपुरुषे शक्तस्य रामादिपदस्य लक्षणतया ताहृशबोधो भवतीत्याहुः। तदसत् रावणदशास्यादिपदस्य इदानीन्तनपुरुषे शक्तिग्रहो न यस्य पुरुषस्य जातस्तस्यापि ताहृशपदात् पुराणादितः शाब्दबोध-जननात्। ननु सामान्यतस्तद्विषयकस्मृतित्वावच्छिन्नं प्रति तद्विषयकसंस्कारत्वेन हेतुत्वे घटवद्भूतलमित्यनुभवजन्य-ताहृशसंस्कारात् घटो भूतलवृत्त्याकारकस्मरणापत्तिरनुप-

जातित्वांशे मनस्त्वादिप्रकारेण शक्तिस्मरणं तथा-
पि विशेषणांशमोषमन्तरेण गत्यन्तराभावादिति।
वदन्ति, विवदन्तेऽपरे बहवः। स्मृतेर्विलक्षण-
प्रकारतायां संस्कारानुभवयोः प्रयोजकत्वस्योद्बोध-
कतामाश्रित्य उच्छेदने विशेष्यविशेषणभावांशे-
ऽप्युद्बोधकविशेषस्यैव नियामकत्वसम्भवात्। प्रका-
रत्वविशेष्यत्वानन्तर्भावेन सामान्यतस्तद्विषयक-
स्मृतौ तद्विषयकत्वेनैव संस्कारानुभवयोर्हेतुता-
पत्तेः। रावणादिपदेभ्यः लक्षणया तत्तत्पदार्थ-
त्वादिप्रकारक एवान्वयबोधः। वस्तुतस्तु अनु-
गतोद्बोधकस्थले स्वरूपतस्तत्प्रकारकशक्तिज्ञाना-

पत्तिश्च तादृशविशिष्टस्मरणस्य, प्रकारतादेः प्रयोजकत्वाभावात्
तत्तदुद्बोधकानां तादृशतादृशविशिष्टस्मरणजनकत्वे अनुभव-
संस्कारयोः स्मृतित्वावच्छिन्नं प्रति कारणत्वानुपपत्तिरतो-
विशिष्टस्मरणं प्रत्येतन्मतेऽपि विशिष्टसंस्कारस्य हेतुत्वमाव-
श्यकमित्यालोच्याह, वस्तुतस्त्विति। अनुगतोद्बोधकेति अनु-
गतोद्बोधकश्च सुस्मूर्षितचिह्नज्ञानपित्रादिधर्मिकसादृश्य-
ज्ञानादि, व्यक्तञ्चैतत् प्रणिधाननिबन्धाभ्यामित्यादि सूत्रे।
तत्र च तत्तदर्थविषयकस्मरणं प्रति सुस्मूर्षिततत्तदर्थचिह्न-
ज्ञानत्वेन तादृशसादृश्यज्ञानत्वेन अनुगतरूपेण हेतुतया
तादृशस्थले उद्बोधकवैलक्षण्येन बोधस्य कल्पयितुमशक्यत्व-

सत्त्वे, स्वरूपस्तत्प्रकारकस्मरणापत्त्या तत्र तादृश-ज्ञानस्य हेतुत्वमावश्यकमित्यलमतिपल्लवितेन। अथ सामान्यतो वक्तृबुद्धिविषयतावच्छेदकधर्म्मावच्छिन्नस्य सर्व्वनामशक्यत्वे शक्तिभ्रमं विना कालान्तरीण-पुरुषान्तरीण-बुद्धिविषयतावच्छेदकत्व-रूपधर्म्मावच्छिन्नविषयिकाप्रतीतिः सर्व्वनाम्ना न जन्यते। अपि तु यो यदा यस्य बुद्धिस्थस्तदा तदुच्चरितपदात्तत्प्रकारावच्छिन्नविषयिकैव इति नियमानुपपत्तिः। स्वोच्चारणानुकूलबुद्धिविषयतावच्छेदकावच्छिन्नस्य शक्तिविषयत्वे च, न पदस्य तत्तद्व्यक्तिपरतया तत्तत्पदव्यक्तिभेदेन शक्तिभेद-प्रसङ्गः अननुगमात् व्युत्पत्तिविरोधश्च। एवं

मिति भावः। स्वरूपत इति जातित्वादिना गोत्वावच्छिन्ने शक्तिभ्रमसत्त्वे, स्वरूपत इति किञ्चिदविशेष्यतयेत्यर्थः। अत्र क्रोड़पत्रमावश्यकं। व्युत्पत्तिविरोधश्चेति सर्व्वनाम्न एका शक्तिरिति व्युत्पत्तिविरोधश्चेत्यर्थः। तथाच पूर्व्वाननुभूतचैतत्वादिप्रकारकशाब्दबोधानुपपत्तिरिति ध्येयं। युष्मदस्मत्पदयोरपि अनुगतशक्यतावच्छेदकं दिदर्शयिषुर्लाघवाय अत्रैव तत्पदद्वयं धारयति एवं युष्मदिति। आत्ममात्र इति तयोरात्ममात्रशक्तत्वे त्वं गच्छेः अहं न गच्छेयमिति विधिनिषेधयोरनुपपत्तेः उद्देश्यतावच्छेदकस्य आत्म-

युष्मदस्मत्पदयोरात्ममात्रे न शक्तिः। अपितु सम्बोध्योच्चारणकर्त्रोरेव। सम्बोध्यतावच्छेदकत्वोच्चारयितृतावच्छेदकत्वरूपानुगतधर्म्मोपलक्षितचैत्रात्मत्वादिकमेव प्रवृत्तिनिमित्तमित्यप्यसङ्गतं। सामान्यतः सम्बोध्यता-वच्छेदकत्वादे-रनुगमकत्वे चैत्रस्य यत्पदसम्बोध्यता, तस्मात् युष्मत्पदात् पदान्तर-सम्बोध्य-मैत्रादे-श्चैत्रोच्चारयिता-दस्मत्-पदात् पदान्तरोच्चारयितुश्च मैत्रादेः प्रतीतिप्रसङ्गो दुर्व्वार इति। स्वजन्यबोधाश्रयतया प्रयोक्त्रभिप्राय-विषयतावच्छेदकत्व-रूपस्वसम्बोध्यतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्ने युष्मत्पदस्य स्वोच्चारणकर्त्तृत्वाव-च्छेदक-त्वोपलक्षित-धर्म्माव-

च्छिन्नेऽस्मत्पदस्य शक्तौ तु न दोष इति।

त्वस्यैक्यात्। आत्मत्वसामानाधिकरण्ये न उभयान्वयसमर्थने त्वं गच्छसि इति निश्चयकाले त्वं न गच्छसि इति प्रतीत्यापत्ते-रिति भावः। सम्बोध्यत्वेति वक्त्रुच्चरितवाक्यजन्यबोधावच्छेदकतावच्छेदकत्वेन वक्त्रभिप्रायविषयतावच्छेदकत्वोपलक्षित-जात्यवच्छिन्नशरीरविशिष्टात्मत्वं उच्चारणानुकूलकृत्यवच्छेदका-तावच्छेदकत्वोपलक्षितजातिमच्छरीरावच्छिन्नात्मत्वञ्च तयोः शक्यतावच्छेदकमित्यर्थः। चैत्रात्मत्वादिकमेवेति, चैत्रमैत्र-तत्तच्छरीरविशिष्टावच्छिन्नात्मत्वयोरेवेत्यर्थः। सम्बोध्यतेति तच्च वाक्यजन्यबोधाश्रयत्वेन, मैत्रादेरिति अत्र षष्ठ्यर्थो विषयत्वं

च्छिन्ने चास्मत्पदस्य शक्तेः स्वोच्चारणीयतया स्वत्वान्तर्भावेनाननुगमतादवस्थ्यादिति चेन्न। स्वो- च्चारणानुकूलबुद्धिप्रकारावच्छिन्न-विषयताकत्वस्व- जन्यत्वोभयसम्बन्धेन तदादिसर्व्वनामपदप्रकारको

तस्य च प्रतीतिप्रसङ्ग इत्यत्र प्रतीतावन्वयः। स्वजन्येति, स्वपदं युष्मच्छब्दपरं। स्वोच्चारणेति, स्वपदमस्मच्छब्दपरं। स्वोच्चा- रणेति, स्वपदं तच्छब्दपरं। उच्चारणञ्च वर्णाद्यभिव्यञ्जकत्व- घीनो जनकतावदभिघातसंयोगानुकूल व्यापारः। शब्दमुच्च- रतीत्यादौ द्वितीयार्थो निरूपितत्वं तस्य च तादृशधात्वर्थ- घटकजनकतायामन्वयः। तथाच स्वोच्चारणानुकूला या बुद्धिस्तदीयप्रकारतावद्धर्म्मावच्छिन्नविषयकत्वमेकः सम्बन्धः, अन्यत्वञ्चापरः। न चात्र घटोऽस्ति तमानयेत्यादौ वक्त्रा घटा- दिकं बुद्धिविषयीकृत्य तच्छब्दप्रयोगेऽपि तदुच्चारणप्रयोजकत्वं कुतः घटज्ञानादौ मन्यत इति वाच्यं, बुबोधयिषाधीनवाक्यो- च्चारणं प्रति वाक्यार्थज्ञानस्य हेतुयता तत्सम्पादकताया घट- ज्ञानस्य तदुच्चारणप्रयोजकत्वावश्यकत्वादिति। तदादीति चादिना स्वच्छब्दपरिग्रहः। अभ्युपेयत इति उक्तोभयसम्बन्धेन तत्पदवान् बोध इत्याकारिक भगवतः सङ्केतः स्वोक्तियगत्यन्तर- विरहादिति भावः। अत्र तादृशसङ्केतविषयकं बोद्धाकारं ज्ञानं तत्पदजन्यशाब्दबोधे हेतुरिति चेदत्र नव्याः स्वजन्यत्व,- स्वविशिष्टविषयतावत्त्वोभयसम्बन्धेन तत्पदवान् बोधोभव- त्वितादृशसङ्केत ईश्वरीयः। स्वेकार्थः स्वं तत्पदं। स्ववैशिष्ट्य

बोधविषयत्वसङ्केतोऽभ्युपेयते । तत्र च स्वपदार्थस्य साम्बन्धाघटकतया । तत्तत्पदव्यक्तित्वेन पदानां न विषयता अपितु तत्तत्पदत्वादिरूपानुपूर्व्वीविशेषप्रकारेणैवेति न पदव्यक्तिभेदेन शक्तिभेदः ।

स्वोच्चारणप्रयोजकबोधीयप्रकारता-समानाधिकरण-निरवच्छिन्नावच्छेदकताकत्व, स्वोच्चारणप्रयोजकबुद्धिविषयवृत्तित्वोभयसम्बन्धेन । एवञ्च तत्पदजन्यबुद्धिप्रकारत्वसमानाधिकरण-निरवच्छिन्नप्रकारताकविशेष्यताशालि शाब्दं प्रति स्वनिष्ठ-प्रकारताकबोधत्वावच्छिन्नसङ्केतीय-विशेष्यतानिरूपितताद्दशो-भयत्वावच्छिन्नसंसर्गतानिरूपितवैशिष्टनिष्ठसांसर्गिकविषयता-निरूपितोभयत्वावच्छिन्नसांसर्गिकविषयताकनिष्ठत्वनिष्ठसांसर्गिकविषयताका या निरूपितत्वसम्बन्धावच्छिन्नविषयता एताद्दशविषयतासम्बन्धेन तत्पदवान् बुद्धिप्रकारावच्छिन्नएतादृशसङ्केतज्ञानं हेतुः । एवं उक्तसङ्केतीयसांसर्गिकविषयतावत्त्वमेव पदार्थत्वं । इतरपदार्थान्वयबोधं प्रत्यपि सङ्केतीयताद्दशविषयताज्ञानप्रयोजकमिति । ननु यत्र दोहनयोग्यगवीबुद्ध्या तामानयेति वाक्यं प्रयुक्तवान्, तत्र तच्छब्दस्य शङ्खगोत्वविशिष्टे शक्तत्वज्ञानस्य भ्रमत्वं माभूत् शक्तिभ्रमाधीनतज्जन्यशङ्खगोत्वप्रकारक-शाब्दीयतत्तत्पदजनत्व तत्पदोच्चारणानुकूलबुद्धिप्रकारकताश्रयगोत्वावच्छिन्नविषयतावत्त्वस्य च सत्वादिति । न च स्वजन्यत्वस्वोच्चारणानुकूलबुद्धिप्रकारतापर्य्याप्त्यधिकरणधर्म्मपर्य्याप्तावच्छेदकताकविषयतावत्त्वोभयसम्बन्धेन पदप्रकारबोधविषयकसङ्केतस्यैव प्रयोजकता तथाच दोहन-

योग्यगवीबुद्धा प्रयुक्तस्य तच्छब्दस्य उच्चारणप्रयोजकज्ञानीय-प्रकारतायाः पर्य्याप्तिश्च दोहनयोग्यत्वे गोत्वे च वर्त्तते अतः शुद्धगोत्वे तत्पर्य्याप्त्यधिकरणत्वेन सङ्केतावगाहिज्ञानस्य भ्रमत्वमेवेति वाच्यं, प्रकारताया व्यासज्यवृत्तित्वाभावेन पर्य्याप्तिसम्बन्धे मानाभावात्, द्वित्वादेस्तु तत्वे अयमेको न द्वावित्यादि विलक्षणप्रतीतेर्मानत्वात् इति चेन्न। स्वोच्चारणानुकूलबुद्धिविषयतावच्छेदकतापर्य्याप्त्यधिकरणधर्म्मावच्छिन्नविषयतावत्त्वघटितसम्बन्धविलक्षणात् अवच्छेदकतायाः पर्य्याप्तेस्तु बहुतरासामञ्जस्यभयेन ग्रन्थकारादिभिः स्वीकारात्। न चैवमपि यत्र घट इति मात्र बुद्ध्या वक्त्रा तत्शब्दः प्रयुक्तस्तत्र तादृशज्ञानीयविषयतावच्छेदकत्वविरहेण तादृशनिवेशो न सम्भवतीति वाच्यं। विशेष्यतायाः प्रकारावच्छिन्नत्वमते तत्र घटनिष्ठविशेष्यतायाः घटत्वेऽवच्छेदकत्वसत्वात्। वस्तुतस्तु घट इत्याद्याकारकमात्रज्ञानेन न तच्छब्दः प्रयुज्यते अपि तु घटादिना अमुमर्थं साधयामीत्यादिकं मनसि कृत्वैव। तथाच तादृशघटत्वविशिष्टवैशिष्टावगाहि-ज्ञानीय-विषयतावच्छेदकत्वसत्वेनानुपपत्त्यभावात्। नन्वेवमपि स्वोच्चारणानुकूलेत्यादिसम्बन्धे सत्वस्य परिचायकत्वेन सामान्यत उच्चारणानुकूलज्ञानीयविषयतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताकपर्य्याप्त्यधिकरणत्वं न घटत्वे, अपि तु पटत्वमठत्वादावपि पटादिकं प्रक्रम्यापि तच्छब्दप्रयोगात्, तथाच कथं तच्छब्देन घटादिमात्रबोध इति चेन्नैवं सामान्यतः ज्ञानीयविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाया घटत्वपटत्वादिसमुदायनिष्ठेकपर्य्याप्तेरसत्वेन यतकिञ्चित्विषयतावच्छेदकतात्वाव-

सामान्यतस्तत्पदत्वादिरूपानुपूर्व्वी विशेषावच्छेदेनैवोभय-सम्बन्धावच्छिन्नबोधविषयतानिरूपितसङ्केतप्रकारताग्राह्या इति न व्युत्पत्त्यनुपपत्तिः। कालान्तरीणपुरुषान्तरीयबुद्धिच-

च्छिन्नप्रतियोगिताकपर्य्याप्तेरेव संसर्गघटकत्वात् यत्किञ्चिद्घटद्वयवति सामान्यतो घटद्वयवानिति प्रतीत्या, द्वित्वप्रतियोगिकपर्य्याप्तेरिव, साक्षात् परम्परा-साधारणावच्छेदकतायां निरूपकत्वस्वीकारेण यत्र दण्डादितात्पर्य्येण तच्छब्दप्रयोगस्तत्र तस्य न शक्तिभेदः। अन्यथा स्वोच्चारणानुकूल-बोधविषयताच्छेदकतावच्छेदकावच्छिन्नावच्छेदताक-विषयतादिघटितसम्बन्धेन वैशिष्ट्यं निविश्य भिन्नभिन्नशक्तेर्वक्तव्यतया नानार्थतापत्तिः। ननु स्वोच्चारणेत्यादौ स्वत्वस्य तत्तद्व्यक्तित्वातिरिक्तस्य दुर्व्वचत्वेन तत्तद्व्यक्तित्वस्य सम्बन्धघटकत्वेऽननुगमतादवस्थ्यमित्यत आह स्वपदार्थस्येति। तथाच उच्चारणानुकूलबुद्धिविषयतावच्छेदकावच्छिन्न-विषयतावत्त्वजन्यत्वोभयस्यैव संसर्गत्वं। जन्यत्वञ्च स्वनिष्ठान्यथासिद्धिनिरूपकत्वे सति स्वाव्यवहितोत्तरत्वरूपं, तत्रापि स्वत्वस्य परिचायकत्वेन नाननुगमः, अतिरिक्तं वेति ध्येयं। नन्वत्र तादृशसम्बन्धोऽनुगतस्तथापि भगवत्सङ्केतो यदि तत्तत्पदत्वरूपेण तत्पदं बोधेऽवगाहते तदावच्छेदकभेदेन सङ्केतविषयताभेदात् शक्तिभेद इति कथं सकलतत्पदशक्तिग्रह इत्यत आह सामान्यत इति। व्युत्पत्त्यनुपपत्तिः अपूर्व्वव्यक्तिसाधारणशक्तिग्रहानुपपत्तिरिति। एकदोच्चरितघटतात्पर्य्यक-तत्पदस्यान्यदोच्चरित-तत्पदजन्यघट-

नेदानीन्तनैतत्पुरुषीयतत्पदादिपदोच्चारणानुकूलेति, तत् विषयतावच्छेदकावच्छिन्नबोधेनोपदर्शितो-भयसम्बन्धेनैतत्तत्पदादिवैशिष्ट्यं, अतो नेश्वरे-च्छायां तादृशबोधस्यैतत्तदादिपदप्रकारेण भान-मिति न कालान्तरीण-पुरुषान्तरीयबुद्धिविषय-तावच्छेदकावच्छिन्नस्यैतत्तदादिपदवाच्यता। भग-वत्सङ्केतीयतत्-पदव्यक्तिप्रकारता-निरूपिततथा-विधसंसर्गविषयतान्तःपाति-बुद्धिविषयतावच्छेदका-वच्छिन्नविषयतायाएव तद्वाच्यतारूपत्वात्, अतो न भ्रमं विना तदवच्छिन्नबोधः। तद्धर्म्मावच्छिन्नविषयताशालिबोधे पदांशे तद्धर्म्मावच्छिन्न-विषयता-घटितोक्तोभय-सम्बन्धावच्छिन्नाया बोध-निष्ठविशेष्यतानिरूपितसङ्केतीयप्रकारताया वाच-कता-रूपायाः प्रकारतया संसर्गतया वा ज्ञानस्य हेतुत्वात्। अन्यधर्म्मावच्छिन्नं बुद्धिस्थीकृत्य प्रयुक्ते-पदेऽन्यधर्म्मावच्छिन्नविषयताघटितोभय-सम्बन्धाव-च्छिन्न-सङ्केतीयप्रकारताया असत्त्वात्, तत्र तद-वगाहि-ज्ञानस्य भ्रमत्वनियमात्। युष्मदस्मत्स्थले-

विषयकबोधे एकपुरुषोच्चरितघटतात्पर्य्यकतत्पदस्य पुरुषा-न्तरोच्चरिततत्पदजन्यार्थान्तरविषयकबोधे तत्पदसत्त्वाभावप्रयो-

ऽपोहृश्येव रीतिश्चिन्तनीया। अथ स्वसम्बोध्ये युष्मदः स्वोच्चारयितरि चास्मदः शक्तौ देवुरवाच मया त्वयि हतेवै वर्गाविष्यन्त्यास्यु देवता इत्यादि श्रष्ष्यादि-वाक्यात् देवीकर्त्तृकमहिषासुरकर्मकघातादिबोधा-नुपपत्तिस्तत्र देवुरच्चरितत्वस्य महिषासुरसम्बो-

जकसम्बन्धाभावं दर्शयितुं वाच्यत्वापत्तिं वारयति कालास्त-रीणेति। वाच्यतात्वादिति। तथाच भगवत्‌मर्द्ध नीया या बोध-त्वावच्छिन्नविशेष्यताकतत्पदत्वावच्छिन्नप्रकारतानिरूपितपार-म्परीनसांसर्गिकविषयतावद्विषयतावत्त्वं तत्पदवाच्यत्वमिति पर्य्यवसितं। हेतुरपि शाब्दबोधे इच्छीयबोधत्वावच्छिन्नविशे-ष्यताकजन्यत्वोच्चारणानुकूल-बुद्धिविषयतावच्छेदकावच्छिन्नविष-यतावत्त्वोभयसम्बन्धावच्छिन्न-तत्पदत्वावच्छिन्नस्वनिष्ठप्रकारता-निरूपितोच्चारणत्वावच्छिन्नसांसर्गिकविषयताकानुकूलत्वनिष्ठ सांसर्गिकविषयताकबुद्धित्वावच्छिन्नसांसर्गिकविषयताकविषय तात्वावच्छिन्नविषयताकावच्छेदकतात्वावच्छिन्नविषयताकधर्म्म-निष्टावच्छिन्नत्वसम्बन्धावच्छिन्नविषयताकविषयतात्वावच्छिन्न-सांसर्गिकविषयतावद्विषयतावत्त्वमस्यन्ध न तत्पदप्रकारकघटा दिपदार्थविशेष्यकज्ञानं। अथवा तत्पदजन्यतद्धर्म्मावच्छिन्न-विषयताशालिशाब्दबोधे स्वनिष्ठविषयतानिष्ठसांसर्गिकविषय तायाः परम्परया निरूपिका या जन्यत्वस्वोच्चारणानुकूल बुद्धिविषयतावच्छेदकावच्छिन्न-विषयतावत्त्वोभयत्वावच्छिन्न-सांसर्गिकविषयतातन्निरूपिक-बोधनिष्ठविशेष्यताकतत्पदत्वा

ध्यत्वस्य वा अभावात्, ऋष्यादिकर्त्तृकसुरथकर्म्मक-
घातादिबोधस्य च योग्यता भ्रमादापत्तिश्च।
ऋष्यादेस्तादृशवाक्यप्रयोक्तृत्वात्, सुरथादेश्च तत्-
सम्बोध्यत्त्वादिति चेन्न। तत्र तादृशानुपूर्व्वीप्रका-
रेण सामान्यमत्या देव्यादिवाक्यस्यापि ज्ञानाद्देवी-
महिषादिषु तादृशवाक्यप्रयोक्तृत्वस्वसम्बोध्यत्वप्रति-

वच्छिन्नसङ्केतीयप्रकारतासम्बन्धेनार्थप्रकारकपदविशेष्यकज्ञा-
नमित्यवधेयमित्यलं पल्लवितेन। एतादृशरीतिरिति उक्तानु-
गमप्रणालीत्यर्थः सा चाग्रे प्रदर्शनीया। युष्मदस्मत्पदयोः
शक्तिं निर्व्वक्तुमारभते अर्थत्यादि। स्वसम्बोध्ये स्वघटितवाक्य-
जन्यबोधाश्रयत्वेन वक्त्रभिप्रेते। स्वं युष्मत्पदं, अस्य च शक्तावि
त्यनेनान्वयः। स्वोच्चारयितरि चेति अत्र स्वपदमस्मच्छब्दपरं।
देव्युवाचेति सुरथराजर्षिणा पृष्टः मेधामहर्षिस्तमुद्दिश्य देवी
माहात्म्यं देवीमहिषासुरयोः सम्वादं जगाद तत्स्वरूप-
मित्यर्थः। तत्रेति तादृशवाक्यघटके युष्मत्पदेऽस्मत्पदे
चेत्यर्थः। महिषासुरसम्बोध्यत्वस्य महिषासुरसम्बोध्यकत्वस्य
तादृशवाक्यजन्यबोधाश्रयत्वेन ऋष्यभिप्रेतत्वस्य सुरथएव सत्वा-
दिति भावः। तादृशपदार्थाप्रसिद्ध्या योग्यताज्ञानस्य प्रमा-
त्वासम्भवादाह योग्यताभ्रमादिति। समाधत्ते तत्रेत्यादि। तत्र
मयेत्यादि महावाक्ये समभ्यर्थी घटकत्वं, तस्य च देव्यादि-
वाक्यस्येतरत्रान्वयः। अत्र वाक्यं तत्तत् खण्डवाक्यमतो
नानुपपत्तिः। तादृशेति सुरथादेस्तादृशतादृशानुपूर्व्वीप्रका-

सन्धानादेवास्मत्युष्मद्भ्यां देवीमहिषादिप्रतीत्यु-
पपत्तिः । यदि च तत्र वक्त्रनुवक्तृवाक्ययोर्विभिन्नै-
वानुपूर्व्वी तदानुवादकवाक्ये तच्छक्तित्वादिना
विशेषदर्शनेऽप्यानुपूर्व्वीप्रकारेण देव्युच्चरितत्वभ्र-
मादेव श्रोतुर्देव्यादि-प्रतीति-स्वीकारेणानुपपत्त्य-
भावात् । यत्र च तादृश्यानुपूर्व्व्यवच्छेदेनापि विशेष-

रेण ऋष्याद्युच्चरितवाक्यश्रावणप्रत्यक्षानन्तरं देवीवाक्यस्य
सामान्यलक्षणया ज्ञानं । एतदंशान्तु पुस्तकस्थतत्तद्वर्णचित्र-
ज्ञानादिनानुभूततत्तद्वर्णस्मरणेन मनसासत्वादिसामान्यप्रत्या-
सत्त्या जायमाननिखिलमादिवर्णज्ञानसहकारेण ऋष्यादि-
वाक्यज्ञानान्तरमेकदैव वा देव्यादिवाक्यज्ञानं जायते । ततश्च
देव्युच्चरिततादृशवाक्यघटकास्मत्पदोच्चारणकर्तृत्वं देव्यास्तद्घट-
कयुष्मत्पदसम्बोध्यत्वञ्च महिषासुरादौ प्रतिसन्दधतो निरा
बाधं तत्र तत्र तत्तत्पदस्य शक्तिज्ञानं सम्भवत्येवेति भावः ।
भवत्येवं यदि वक्तृदेव्या वाक्यमनुवादकमहर्षिवाक्यञ्च
एकानुपूर्व्वीकं स्यात् विभिन्नानुपूर्व्वीकञ्चेत् का गतिरित्यत
आह यदि चेति । विशेषदर्शनेऽपि देव्युच्चरितवाक्यभेदनिश्चये-
ऽपि ऋष्युच्चरितवाक्यमिदं न देव्युच्चरितमित्यादिनिश्चये इति
यावत् । आनुपूर्व्वीप्रकारेणेति मयेत्याद्यानुपूर्व्वीकं किञ्चित्
वाक्यं देव्युच्चरितमित्यादिभ्रमादित्यर्थः । तथाच तत्र तादृ
शास्मत् पदोच्चारण कर्तृतावच्छेदक-त्वोपलक्षितास्मत्त्वावच्छिन्ने
शक्तिभ्रमादेव शाब्दबोध इति भावः । तादृश्यानुपूर्व्व्यवच्छेदे

दर्शनं तत्र नेष्यत एव तत्प्रतीतिः। एवमन्यदीय-यथार्थं तात्पर्य्यकोच्चारणानधीनोच्चारणरूपं स्वतन्त्रोच्चारणमस्मत्पदप्रवृत्तिनिमित्तानुगमकं। उक्तस्थल ऋष्याद्युच्चारणञ्च न तथा, तस्यार्थप्रतिपाद-

नापि मयेत्याद्यानुपूर्व्व्यवच्छेदेनापि विशेषदर्शनं देव्याद्युच्चरितत्वाभावनिश्चयः। नच यदि देव्युच्चरितवाक्यस्य विभिन्नानुपूर्व्वी निश्चयः स्यात्, तदा ऋषिवाक्ये देव्युच्चरितानुपूर्व्वीवच्छिन्नवाक्यभेदनिश्चयो भवितुमर्हति। स चास्माकं श्रोतुर्व्वा सम्भवी कुतो विशेषदर्शनमिति वाच्यं, श्रोतुश्च कथञ्चित् सम्भवात्, अस्माकञ्च, तद्बोधकवाक्यान्तरघटितपुराणान्तरदर्शने तत् संशयसम्भवाच्च। पुराणादिवाक्यविभिन्नकालिदासाद्युच्चरितवाक्ये तादृशबाध निश्चयोदयाच्चेति। ननूक्तरीत्यानुपपत्तिवारणेऽपि तत्रस्थास्मदादिपदेन ऋष्यादेर्बोधो दुर्व्वार इत्यत आह एवमिति। यत्र स्वीयगमनप्रतिपादनेच्छया मैत्रेणाहं गच्छामीत्युक्तौ सम्यगश्रुतवता चैत्रेण किमित्युक्तमिति जिज्ञासितेन मैत्रेणाहं गच्छामीति पुनरुक्तं, तत्र स्वतन्त्रोच्चरितास्मत्पदेऽव्याप्तिवारणाय अन्यदीयेति। अन्यदीयं प्रकृतास्मत्पदोच्चारणकर्त्तृभिन्नकर्त्तृकं यत्स्वार्थतात्पर्य्यकोच्चारणं तच्च प्रकृतास्मत्पदघटितवाक्यजन्यबोधाश्रयत्वेनेच्छाप्रयोज्योच्चारणं, तादृशञ्च प्रकृते देव्युच्चारणं तदधीनोच्चारणं प्रकृते ऋष्यादिकर्त्तृकं तद्भिन्नमित्यर्थः। अस्मत्पदेति स्वीयान्यदीयस्वार्थतात्-पर्य्यको-च्चारणानधीनो-च्चारण कर्त्तृत्वोपलक्षितात्मत्वावच्छिन्ने शक्तिः स्वतन्त्रोच्चरितास्मत्पदस्येति भावः। नच

नद्वारा देवदत्तोच्चारणाधीनत्वादिति नास्मच्छब्दा-
द्दष्ट्यादिबोधः। स्वातन्त्र्येणाहं गच्छामीत्युच्चारण-
स्यापि को गच्छतीत्यादिप्रश्नवाक्यशक्तिग्राहकवाक्यो-
च्चारणानधीनतया स्वार्थपरत्वमुच्चारणविशेषणं।
प्रश्नवाक्यस्य चाहं गच्छामीत्यादिप्रकृतवाक्यतात्-
पर्य्यविषयपरत्वाभावात्तदुच्चारणे विशिष्टव्यति-

ऋष्याद्युच्चरितास्मत्पदस्य शक्त्यभावेन स्वार्थतात्पर्य्यस्यैवा-
सम्भवात्, कुतस्तद्घटितस्योपलक्षणत्वमिति वाच्यं, अन्य-
दीययादृशार्थतात्पर्य्यकवाक्योच्चारणं तादृशतात्पर्य्यविषया-
र्थातिरिक्तार्थतात्पर्य्यकत्वाभावे सति तादृशोच्चारणाधीनं
यदुच्चारणं तदन्यदित्यर्थ एव पर्य्यवसानात्। वस्तुतस्तु स्वतन्त्रो-
च्चरितेत्यादिवाक्यघटकास्मत्पदस्यापि स्वघटितवाक्यार्थकर्म्मक-
वाक्यान्तरस्थक्रियाकर्त्तृत्वोपलक्षितवाचकतया, ऋषिकविप्रभृ-
तिभिरुच्चारिततद्घटितवाक्यस्यापि स्वार्थतात्पर्य्यसत्त्वात्।
स्वार्थतात्पर्य्यकत्वस्य व्यावृत्तिमाह, स्वातन्त्र्येणेति। अन्योच्चा-
रणानधीनतयेत्यर्थः। असमानानुपूर्व्वीकवाक्योच्चारणाधीने
तद्व्यावृत्तिं दर्शयित्वा, समानानुपूर्व्वीकवाक्योच्चारणेऽपि तद्व्या-
वृत्तिमाह शक्तिग्राहकवाक्येति। मया गन्तव्यं पश्चात् त्वये-
त्यादिवाक्यमुच्चारितवन्तस्त्वयेति। तादृशगमनादिदर्शनेनास्म-
च्छब्दस्योच्चारयितरि शक्तिं गृहीतवतोच्चारितं मया गन्तव्य-
मिति वाक्योच्चारणस्य तादृशसमानानुपूर्व्वीकशक्तिग्राहक-
वाक्योच्चारणाद्यधीनतयेत्यर्थः। आनुपूर्व्व्येति, अत्र तृतीयार्थोऽ-

रेकः सुघटः । आनुपूर्व्वी सजातीयं यत् वाक्यान्तरं तदुच्चारणानधीनत्वञ्च निवेशयितुमशक्यं । शब्दानुकरणस्थल एव समानानुपूर्व्वीकोच्चारणापेक्षानियमात् । वाक्यार्थानुवादस्थले समानार्थकवाक्यमात्रोच्चारणापेक्षणात् स्वातन्त्र्यापत्तेर्दुर्व्वारत्वात् ।

भेदस्तस्य सजातीयैकदेशे साजात्येऽन्वयः । शब्दानुकरणस्थल एवेति, शब्दानुवादस्थल एवेत्यर्थः । एवकारेण अर्थानुवादस्थलव्यवच्छेदः । शब्दानुवादस्तु पूर्व्ववाक्यसमानानुपूर्व्वीकसमानार्थकवाक्यं । पूर्व्ववाक्यार्थस्य शब्दान्तरेण पुनर्व्वचनमर्थानुवादः । वक्ष्यमाणदोषभिया पूर्व्वकल्पं परित्यज्य कल्पान्तरमाह वस्तुस्तस्त्विति । वाक्यान्तरस्येति, स्वघटितवाक्यभिन्न वाक्याघटकेत्यर्थः । स्वमस्मत्पदं, स्वघटितवाक्यभिन्नत्वञ्च, स्वघटितवाक्यजन्यतावच्छेदकमुख्यविशेष्यताभिन्न-मुख्यविशेष्यताशालिशाब्दबोधजनकवाक्यत्वं, नातः शाब्दबोधौपयिकाकाङ्क्षावत्पदसमूहरूपवाक्यभेदस्य प्रत्यक्षं पदे सत्त्वेऽपि, स्वस्मिन् तादृशवाक्यान्तरत्वं। समानाकारकज्ञानीयविषयताया ऐक्येन न भिन्नभिन्नज्ञानमादाय तद्दोषः । क्रियाकर्म्मतापन्नेति, तादृशक्रियाकर्म्मत्वनिष्ठप्रकारतानिरूपितस्वघटितवाक्यार्थविशेष्यताको यः प्रत्ययस्तज्जननेच्छानधीनमित्यर्थः । अनुवादेति, कस्याप्युच्चरितमया त्वयि इत इत्यादिस्थले चेत्यर्थः । तदर्थघटितेति, अस्मत्पदार्थघटितेत्यर्थः । प्रतिपादयितुं प्रतिपादनेच्छयेत्यर्थः । स्वातन्त्र्यमिति, तदुच्चारणस्येति शेषः । ननु क्रियाकर्म्मतापन्नेत्यादि निवेशेनैवोपपत्तौ वाक्यान्तरस्येति

वस्तुतस्तु वाक्यान्तरस्थक्रियाकर्म्मतापन्नस्वघटित-वाक्यार्थप्रत्यायनेच्छाधीनं स्वोच्चारणमेव, स्वतन्त्रोच्चारणं। अनुवादस्थले चेत्युवाचेति वाक्यान्तरस्थोक्तिक्रियाकर्म्मतया तदर्थं घटितवाक्यार्थं प्रतिपादयितुमेवानुवादकोऽस्मद्घटितं वाक्यं प्रयुङ्क्ते इति न स्वातन्त्र्यं। मां पश्येत्यादौ प्रकृतवाक्यस्थज्ञानरूपक्रियाकर्म्मतया, स्वं प्रतिपादयितुमेवास्मदः प्रयोगात्। तदुच्चारणस्य स्वातन्त्र्यनिर्व्वाहाय वाक्यान्तर इति। एतेन यत्र चैत्रे गान्यादीयो चैत्रः सुन्दर इत्यादि वाक्यादेव वाक्यार्थं प्रतीत्याहं सुन्दर इति प्रयुज्यते, तत्र स्वसमानार्थकवाक्योच्चारणसापेक्षत्वेऽपि न स्वातन्त्र्यक्षतिः। न वा स्वपण्डित्याभिमानिमौनि

कथमित्यत आह, मां पश्येति। प्रकृतवाक्यस्येति, पश्यत्पद-घटितवाक्यस्येत्यर्थः। वाक्यान्तरेतीति तथाच पश्येत्यस्यास्मत्-पदघटितवाक्यजन्यास्मत्पदार्थ-घटितार्थ-बोध जनकत्वात् न वाक्यान्तरघटकत्वमिति। एतेनेति, वस्तुतस्त्वित्यादिकल्पादरे-णेत्यर्थः। वाक्यार्थमभेदेन सुन्दरान्वितस्वात्मानं प्रतीत्य, ज्ञात्वा, प्रयुज्यत इति, तथाचाहं सुन्दर इति वाक्यप्रयोगस्य प्रयोजक-वाक्यार्थज्ञानजननद्वारा अन्यदीयतादृशतादृशवाक्योच्चारण-प्रयोज्यत्वस्यापत्तेरिति भावः। पूर्व्वकल्पेऽनुपपत्तिं दर्शयित्वा पत्तिं दर्शयति न वेति। अत्र स्वातन्त्र्यापत्तिरित्यनेनान्वयः।

पुरुषज्ञानपरस्यायमहं पण्डित इति जानातीत्य-न्यदीयोच्चारणस्य स्वातन्त्र्यापत्तिः । अथैवं रीत्या अव्यहितोक्तस्थलेऽहंपदेनोच्चारयितृपुरुषविषयक-प्रतीतिवारणेऽप्यभिमानिनस्तेनप्रत्ययोदुरुपपाद-एव । तस्योच्चारणाभावेनास्मद्वाच्यत्वादिति चेत् सत्यं । स्वतन्त्रोच्चारयितुः सर्व्वत्रास्मदर्थत्वे स्यादेवेयमनुपपत्तिः । तदेव न स्वतन्त्रोच्चार-यितास्मत्पदस्यैव तद्वाचकत्वात् । निरुक्तास्वतन्त्रो-

अस्मत्पदार्थमौनिपुरुषे तादृशज्ञानसत्त्वज्ञापनाय स्वपाण्डि-त्याभिमानीति । वक्तुः पाण्डित्याभिमानिपुरुषीयवाक्यादेव ज्ञात्वा, तादृशवाक्योच्चारणस्येव, तदापत्तिरतस्तदसम्भवप्रदर्शनाय मौनीति । अत्र चाहं पण्डित इत्येकं वाक्यं, पण्डिताभिन्नाह-मित्यर्थकम् । अपरश्चायमिति जानातीति शब्दोऽत्र तादृश-वाक्यार्थपरस्तथाच पण्डिताभिन्नास्मत्पदार्थकर्म्मकज्ञानवानय-मित्यर्थः । आशङ्कते अथैवमिति । अव्यवहितेति । स्वपाण्डि-त्येत्यत्राभिमानिनः पुरुषस्येति यावत् । तेनास्मच्छब्देन । अवाच्यत्वादितीति, स्वतन्त्रोच्चारयितर्य्येवास्मत्पदस्य शक्तत्वा-दिति भावः । स्वतन्त्रोच्चरितास्वतन्त्रोच्चरितभेदेन द्विविधा-स्मत्पदस्य शक्तिद्वैविध्यं कल्पयित्वा समाधत्ते सत्यमित्यादि । स्वतन्त्रोच्चरितेति । वाक्यान्तरस्थक्रियाकर्म्मतया स्वघटितवा-क्यार्थप्रतिपादनेच्छानधीनोच्चारणकर्त्तास्मत्पदस्यैवेत्यर्थः । तद्वा-चकत्वादिति,वाक्यान्तरस्थक्रियाकर्म्मतया स्वघटितवाक्यार्थप्रति-

च्चारणरहितस्य चास्मदः स्वघटितवाक्यार्थकर्म-कवाक्यान्तरस्थक्रियाकर्त्तर्य्येव शक्तिः । एवञ्च

पादनेच्छानधीनोच्चारणकर्त्तृत्वोपलक्षितार्थवाचकत्वादित्यर्थः । तिङन्तत्वादेः वाक्यान्तरस्थक्रियाकर्म्मतया स्वघटितवाक्यार्थ-प्रतिपादनेच्छाधीनोच्चारणकर्म्मास्मत्पदस्येत्यर्थः । पूर्व्वोक्तभ्रमं विनापि कस्याप्युच्चरितमयात्वयेत्याद्यानुपूर्व्वीरवच्छिन्नवाक्ये देव्युच्चरितत्वभ्रमं विनापीत्यर्थः । एवं मया त्वमाप्थाः शरणं भयेष्वित्यादिभट्टिकाव्यादिवाक्ये विश्वामित्राद्युच्चरितत्वाभाव-निश्चयस्य विशेषदर्शिनां सदा सत्त्वेऽपि तद्घटकास्मच्छब्दा-दिना न विश्वामित्रादेर्बोधानुपपत्तिरिति । जये इति वाक्या-न्तरक्रियाकर्त्तृत्वात् । अतएव किमस्मभिर्गलितंजड़ मन्यसे मयि निमज्जतु भीमसुता मनः, इत्यादावपि समस्यन्तास्मच्छब्दे-नापि इति मन्यसे इति वाक्यान्तरस्थक्रियाकर्त्तुश्चन्द्रादेरपि बोधोदयः । नन्वेवमपि शुम्भासुरं प्रति देव्युच्चरितमेकैवाह-मित्यादेः मय्येव विशन्त्यो मद्विभूतयः इत्यन्तस्य यास्मत्पद-घटितवाक्यस्योच्चारणे इति त्वं पश्येति वाक्यान्तरस्थदर्शन-क्रियाकर्म्मतया तादृशास्मत्पदघटितवाक्यार्थप्रतिपादनेच्छा-धीनतया स्वातन्त्र्यविरहेण तत्रस्थास्मत्पदस्य देवीबोधक-ताया अनुपपत्तिः, आपत्तिश्च वाक्यान्तरस्थदर्शनक्रियाकर्त्तुः शुम्भासुरस्य प्रतीतेः । न च तादृशवाक्यस्यानुवादकमहर्ष्यु-च्चरिततया तद्घटकास्मच्छब्दस्य देवी इत्युवाचेति वाक्या-न्तरस्थकथनक्रियाकर्त्र्या देव्या बोधकत्वं नानुपपन्नमिति वाच्यं, तद्वाक्यस्य कस्याप्युच्चरितत्वेऽपि तत्समानानुपूर्व्वीकस्य तत्

मया त्वयि हते ऽवैवेत्यादौ तादृशक्रिया देव्यु-
वाचेति । वाक्यान्तरस्थोक्तिक्रियैव, तत्कर्तृत्वं
देव्या इति पूर्वोक्तभ्रमं विनापि तत्प्रतीतिरूपपा-
दयितुं शक्यते । स्वघटितवाक्यार्थकर्मकवाक्यान्तर-
समानार्थकविभिन्नानुपूर्व्वीकस्य वा वाक्यस्य देव्युच्चरितत्वेन
तत्र तद्दोषस्य दुर्व्वारत्वादिति चेन्न, यस्मात् पश्येति दर्शन-
क्रियायां तादृशपरस्परोपश्लिष्टवाक्यार्थकर्म्मकत्वान्वयेन तात्पर्य्यं,
मपि तु स्वजातीयद्वितीयरहितभगवत्याः कर्म्मतया भगवत्यां
शक्तीनां प्रवेशक्रियाया वा तत्र कर्म्मतयान्वयतात्पर्य्यं ।
एवञ्च तादृशवाक्योच्चारणस्य वाक्यान्तरस्थक्रियाकर्म्मत्वेनास्मत्-
पदघटिततादृशवाक्यार्थप्रतिपादनेच्छाधीनत्वमेव नास्ति ।
अतस्तत्र स्वतन्त्रोच्चरित एवास्मच्छब्दः । अहं पण्डित
इति त्वं जानीहीति वक्तृतात्पर्य्यकास्मत्पदघटितवाक्यस्थले तु
वक्तुः प्रतीतिः स्वयमग्रे उपपादयिष्यते । स्वघटितवाक्येति ।
अत्र क्रियापदेन धात्वर्थो वाच्यः । तत्र वाक्यान्तरस्थत्वं न
वाक्यान्तरघटकत्वं, तत्र तदभावात् । धात्वर्थैकदेशे धाताव-
न्वयासम्भवाच्च । एवमहं पण्डित इत्ययं जानातीत्यत्र इति
जानातीति वाक्यान्तरस्थज्ञानक्रियाकर्त्तुरभिमानिपण्डितस्येव
सपण्डित इति देवदत्तोऽपि जानातीति तादृशवाक्यार्थकर्म्म-
तापन्नज्ञानक्रियाकर्त्तुर्देवदत्तस्याप्यस्मच्छब्देन बोधापत्ति-
दुर्व्वारैत्यत आह स्वघटितवाक्येति, अत्र क्रियेति सम्पातायातं,
अन्यथा प्रतिपाद्यत्वमित्यन्तव्याख्याया असङ्गतेः । प्रतिपाद्य-
त्वमित्यन्तस्य वा प्रतिपाद्यक्रियात्वमर्थः । तादृशार्थकर्म्मत्वेनेति ।

स्वक्रियात्वञ्च तादृशार्थकर्म्मकत्वेन वाक्यान्तरप्रति-पाद्यत्वं, तेनाहं पण्डित इति विद्वांसं पश्येत्यादौ दर्शनादिक्रियाया अस्मच्छब्दघटितवाक्यार्थविषयकत्वसम्भवेऽपि तेन रूपेण समभिव्याहृतवाक्यान्तराप्रतिपाद्यतया न तत्क्रियाकर्त्तुरस्मच्छब्दतः प्रतीतिः। अथ इति पदघटितवाक्यान्तरात् क्रियापत्तावेव तत्कर्त्तुर्वाक्यान्तरप्रतिपाद्यक्रियाकर्त्तृत्वं सुग्रहं। तद्ग्रह एव च तद्घटि-

अस्मत्पदघटितवाक्यार्थकर्म्मकत्वनिष्ठप्रकारतानिरूपितवाक्यान्तरजन्यप्रतिपत्तीयविशेष्यत्वं, नतु स्वघटितवाक्यार्थकर्म्मकत्वनिष्ठविषयताशालिवाक्यान्तरजन्यप्रतिपत्तीयविषयत्वं साक्षात्-परम्परासाधारणतादृश-विषयता-निरूपितविषयत्वञ्चेतित्यर्थतो लब्धं। तेनोक्तार्थकरणेन। विद्वांसमिति जानन्तमित्यर्थः। आग्रहकृते पश्यति, इति पदघटितेति, देवी महिषासुरमित्युवाचेति वाक्यान्तरादित्यर्थः। क्रियेति उक्त्यादिक्रिया, शाब्दबोध एवेत्यर्थः। तादृशवाक्यार्थकर्म्मकत्वेन क्रियायाः शाब्दबोध इति यावत्। तत्कर्त्तुरुक्त्यादिक्रियाकर्त्तुः। वाक्यान्तरेति तादृशकर्त्तृत्वरूपो विशिष्टो धर्म्मः। सुग्रहमिति ग्रहविषयो भवतीत्यर्थः। तद्ग्रह एवेति, इति पदघटितवाक्यान्तरप्रतिपाद्य क्रियाकर्त्तृत्वग्रहे सत्येवेत्यर्थः। तद्घटितानुगमकरूपग्रहेण वाक्यान्तरप्रतिपाद्यक्रियाकर्त्तृत्वोपलक्षितात्मत्वादिधर्म्मग्रहेणेत्यर्थः। अत्र तृतीयार्थः प्रयो-

तानुगमकरूपग्रहेणास्मच्छब्द-शक्तिग्रहेऽस्मच्छब्द-घटितवाक्याद्वाक्यार्थप्रतीतौ तस्येति पदादुपस्थित्या वाक्यान्तरात् क्रियाप्रतिपत्तिरित्यन्योन्याश्रय इति चेन्न। वाक्यान्तरप्रतिपाद्यतया वक्तृबुद्धिस्थत्वस्यैव क्रियायां विशेषणत्वोपगमात्

त्यत्वं, तस्य चास्मच्छब्दशक्तिग्रह इत्यनेनान्वयः। अस्मच्छब्दशक्तिग्रहस्य तादृशधर्म्मविशिष्टवैशिष्ठ्यावगाहितया तज्ज्ञानस्य तत्र हेतुत्वापत्तेः। अस्मच्छब्दघटितेति, मया त्वयीत्यादिवाक्यात्। वाक्यार्थेति, देवीकर्त्तृकमहिषासुरकर्म्मकहननोत्तरं शीघ्रं भविष्यद्गर्जनकर्त्तृत्वापन्नदेवतारूपार्थ प्रतीताविल्यर्थः। तस्य तादृशवाक्यार्थस्य, उपस्थित्या शक्त्या स्मरणेन इति शब्दस्य सन्निहितबुद्धिस्थएव शक्तत्वादिति भावः। अन्योन्याश्रय इति, अस्मच्छब्दशक्तौ तद्ग्रहमपेक्षमाणो यस्तादृशवाक्यान्तरप्रतिपाद्यक्रियाकर्त्तृत्वग्रहस्तदपेक्षमाणो यः स्वस्य शक्तिग्रहस्तद्विषयत्वेनास्मत्पदशक्तिर्यदि स्वग्रहसापेक्षग्रहसापेक्षग्रहका स्यात् तदा स्वभिन्ना स्यादित्यापत्तिरित्यर्थः नन मया त्वयि हतेऽवं वेत्यादिवाक्यस्यास्मत्पदघटिततया तादृशवाक्यजन्यप्रतीतेरस्मत्पदशक्तिग्रहाधीनत्वमस्त्येव। तादृशवाक्यार्थपरेति पदघटितवाक्यान्तरजन्यप्रतिपत्तेरपि तदाधीनत्वं सम्भवति। किन्तु तादृशवाक्यार्थकर्म्मकत्वप्रकारतावाक्यान्तरजन्यप्रतिपत्तिविषयत्वेन क्रियाया ज्ञाने तदधीनत्वं कुतो मन्यत इति चेन्न। तादृशक्रियाज्ञानेऽपि इतिशब्दार्था-

स्मत्पदघटितवाक्यार्थस्य विशेषणतया भानेन तत्र तादृशविशे-
षणापेक्षत्वेन विशेषणज्ञानस्य तु यस्मत्पदशक्तिग्रहाधीनत्वेन
तादृशक्रियाज्ञानस्यापि तच्छक्तिग्रहाधीनत्वाच्चेतः। एवमिति
पदघटितवाक्यजन्यप्रतीतेरपि तादृशज्ञानविषयत्वेन तादृश-
विषयसम्पादनद्वारा तदधीनत्वस्य तत्र सत्त्वाच्चेति निगर्व्वः।
समाधत्ते, वाक्यान्तरेति। यस्मत्पदघटितवाक्यार्थकर्म्म-
कत्वनिष्ठप्रकारताकवाक्यान्तरजन्यप्रतिपत्तीयविषयताप्रकार-
ताकवक्तृज्ञानीयविषयतापन्नक्रियाकर्त्तरि यच्छत्शब्दस्य शक्ति-
रिति भावः। वक्तुस्तादृशज्ञानस्य, बुबोधयिषया वाक्य-
प्रयोगं प्रति वाक्यार्थज्ञानस्य कारणतया बुबोधयिषायाः
कारणेष्टसाधनताज्ञानस्य धर्म्मितावच्छेदकज्ञानविधया वा
देवीकर्त्तृकमहीषासुर-कर्म्मकहननोत्तरकालीनशीघ्र-भविष्यद्-
गर्जनकर्त्तृतावद् देवताकर्म्मकत्वनिष्ठप्रकारतानिरूपिता सती,
देवीकर्त्तृकत्वनिष्ठविशेष्यतानिरूपिता या इति पदघटित-
वाक्यजन्यप्रतिपत्तीयविषयता तद्वती उक्तिक्रियेत्याकारकं।
ननु तादृशार्थकर्म्मकत्वनिष्ठविषयतानिरूपितकथनक्रिया-
निष्ठविषयता-निरूपित-कृतिनिष्ठविषयता-निरूपितदेवीनिष्ठ-
विशेष्यताशालिज्ञानं तादृशवाक्यजन्यं भवत्वित्याकारकेच्छैव
तत्र बुबोधयिषा वाच्या। एवञ्च तादृशज्ञानं तादृशवाक्यजन्य-
मित्याकारकं वक्तुर्ज्ञानमपि तादृशतात्पर्य्यप्रयोजकं वाच्यं।
कुतस्तादृशज्ञानमादाय उक्तानुगमकधर्म्मः सम्पादनीय
इति चेन्न। विनिगमनाविरहेणोक्तबुबोधयिषाद्वयमेव हेतुः
कल्पते। यत उक्तज्ञानस्यापि तत्र सत्त्वादिति भावः।
तादृशवाक्योच्चारणं प्रति उक्तबुबोधयिषायाः कारणत्वस्या-

प्रतिपत्तेः पूर्व्वमपि प्रकरणादिना तादृशवक्तृबुद्धे-र्ग्रहसम्भवेनान्योन्याश्रयाभावात्। स्वघटितवा-क्यार्थविषयकत्वान्वितक्रियाकर्त्तृतया वाक्यान्तर-प्रतिपाद्यत्वेन या वक्तृबुद्धिस्तद्विषयतावच्छेदकत्वं प्रवृत्तिनिमित्तानुगमकमिति तु सारं। एवञ्च

प्रामाणिकत्वेन तादृशज्ञानस्य नियतसत्त्वाभावमालोक्य, स्वघटितवाक्येत्यादिना पर्य्यवसितार्थस्योक्तत्वाच्चेति भावः। प्रकरणादिनेति तथाच तादृशशाब्दबोधात् पूर्व्वं सैन्धव-मानयेत्यादाविव प्रकरणादिलिङ्गज्ञानादिना तादृशविशिष्टार्थ-विषयकवक्तृज्ञानविषयकज्ञानजननेन बाधकाभावादित्यर्थः। अन्योन्याश्रयाभावादिति, वाक्यान्तरजन्यप्रतिपाद्यतया तादृश-विशिष्टार्थ विषय वक्तृज्ञानजनने श्रोतुरपि तादृशज्ञानविष-यकज्ञानजनने पूर्व्वं तादृशवाक्यजन्यप्रतिपत्तेः, तज्जनकास्मत्-पदस्यशक्तिग्रहस्य चानपेक्षणात् वाक्यजन्यत्व प्रतिपत्त्यादीनां स्वरूप उपस्थित्यैव तादृश विशिष्ट ज्ञान सम्भवादिति भावः। स्वघटितवाक्यार्थेति, स्वघटितवाक्यार्थकर्म्मकत्वनिष्ठविषयता-निरूपितक्रियानिष्ठविषयतानिरूपितकर्त्तृत्वनिष्ठविषयतानि-रूपिता या वाक्यान्तरजन्य प्रतिपत्तिविषयता तत्प्रकारता-निरूपित-वक्तृबुद्धीयविषयतावच्छेदकत्वोपलक्षितधर्म्माविच्छि-न्नमस्मत्पदशक्यतावच्छेदकमित्यर्थः। सारमिति निर्द्दोषत्वेन तदेवानुगमकमित्यर्थः। एवञ्च वाक्यान्तरप्रतिपाद्यतयावक्तृ-बुद्धिविषयत्वस्यानुगमकत्वे ईश्वरोरि प्रयोगे चेत्यर्थः। उच्चारयितृत्वाव-

बुद्धिविषयतावच्छेदकत्वस्य प्रवृत्तिनिमित्तानुगमकत्वप्रवादोऽपि संगच्छते। उच्चारणकर्त्तृत्वानुगमकशरीरेऽपि मिश्राणां बुद्धिस्त्वनिवेशबीजन्तु नावधारयामः। एवं युष्मत्पदप्रवृत्तिनिमित्तानुगमकगर्भनिविष्टं स्वसम्बोध्यत्वमपि वाक्यान्तरस्थक्रियाकर्म्मत्वेन स्वघटितवाक्यार्थानवगाहिनी या स्वजन्यप्रतीत्याश्रयत्वेनेच्छा तद्विषयत्वमनुवादकपुरुषीयवाक्यार्थकर्म्मकोक्तिक्रियाघटितमहावाक्यार्थघटकयुष्मदर्थघटितावान्तरवाक्यार्थप्रतीत्याश्रयत्वेनाभिप्रायविषयत्वेऽपि तादृशाभिप्राये तादृशा-

च्छेदकधीप्रकारावच्छिन्ने ऽहम्पदस्य शक्तिरिति मिश्रोक्तमाक्षिपति उच्चारणकर्त्तृत्वेति। एवमिति मया त्वयीत्यादौ अस्मत्पदेन तदुच्चारकमहर्षिबोधवारणायोक्तनिवेशवत् तद्घटकयुष्मत्पदेन कपिसम्बोध्यसुरथराजबोधवारणायैतादृशविषयत्वं वाच्यमित्यर्थः। युष्मत्पदेत्यादि, अग्रे विषयत्वमित्यनन्तरं वाच्यमिति पूर्व्वदोयं। अनुगमकेति, स्वसम्बोध्यतावच्छेदकेत्यर्थः। गर्भेति घटकेत्यर्थः। वाक्यान्तरस्थेति, वाक्यान्तरस्थक्रिया कर्म्मत्वनिष्ठविषयतानिरूपितस्वघटितवाक्यार्थनिष्ठविषयताशून्या या स्वघटितवाक्यजन्यप्रतीतिमत्त्वप्रकारेच्छा तद्विशेष्यत्वमित्यर्थः। एतादृशसम्बोध्यतावच्छेदकत्वं स्वतन्त्रोच्चरितयुष्मत्पदस्य प्रवृत्तिनिमित्तानुगमकं। स्वमनुवाद

वान्तरवाक्यार्थस्य वाक्यान्तरस्थक्रियाकर्म्मत्वेन भानात्। यदि च इति पदघटितवाक्यार्थप्रतीति-रूपफलेच्छाधीना युष्मद्घटितवाक्यार्थप्रतीति-विषयिनीताद्दृशवाक्यार्थांशे वाक्यान्तरस्थक्रिया-कर्म्मत्वानवगाहिन्यपि ताद्दृशवाक्योच्चारणानुकूला

कानुग्रहरितयुष्मत्पदं, अत्र चानुवादक ऋषेरिच्छा च, मया त्वयीत्यादि वाक्यार्थविषयकशाब्दबोधानुकूलव्यापारानुकूला-तीतकृतिमती देवीत्याकारकदेव्युवाचेत्यादि मया त्वयी-त्याद्यन्तमहावाक्यजन्यप्रतीत्याश्रयः सुरथो भवत्वित्याकारा। तथाचात्र ताद्दृशेच्छीयविशेष्यत्वरूपस्याताद्दृशतयोक्तसम्बोध्य-त्वस्य सुरथेऽसत्वात्, न युष्मत्पदेन तस्य बोधः। गुरो त्वं मामध्यापयस्वेत्यादिस्वतन्त्रयुष्मच्छब्दस्थले च स्वतन्त्रोच्चारयि-तुरेताद्दृशवाक्यजन्यप्रतीत्याश्रयो गुरुर्भवत्वित्याकारैवेच्छा अतो गुरौ ताद्दृशसम्बोध्यत्वस्य सत्त्वेन तस्य बोधः। देवी-महिषासुरमितुग्रवाचेति वाक्यान्तरं तत्रस्थेतिपदार्थताद्दृश-वाक्यार्थप्रकाशनाय मया त्वयीत्यादिवाक्यान्तरं प्रयुज्यते। यथा तमानयेत्यादिवाक्यघटकतच्छब्दार्थव्यक्तये गौरस्तीत्यादि-वाक्यान्तरं, तथाचादावितुग्रवाचेत्यन्तवाक्यजन्यबोधरूपफल-विषयकेच्छा भवति। तदनन्तरं मया त्वयीत्यादिवाक्यजन्य-बोधरूपोपायविषयकेच्छेत्यभिमन्वानः शङ्कते यदि चेत्यादि। अत्र महावाक्यार्थबोधः फलं, अवान्तरवाक्यार्थबोध उपाय इति मया त्वयीत्याद्यवान्तरवाक्यमात्रजन्यबोधो भवत्वित्याकाराया

मु भवतुरिच्छा सम्भवतीति । तादृशेच्छामादायानु-
वादकसम्बोध्यस्य सम्बोध्यतापत्तिरिति मन्यते, तदा
वाक्यान्तरार्थप्रतीतीच्छानधीनत्वमपि इच्छा-
विशेषणं देयमिति । मया त्वयि हतेऽवै वेत्यादौ
युष्मच्छब्दान्न सुरयादिप्रतीतिः । एवमभ्रान्तस्य
ततो महिषादिप्रतीतिनिर्व्वाहाय, वाक्यान्तरस्थ-
स्वघटितवाक्यार्थकर्म्मकक्रियाकर्म्मणोऽपि युष्मदः
शक्यन्तरं स्वीकार्य्यं । तत्र देवीमहिषासुरमित्युग्र-
वाचेति वाक्यस्थक्रियाकर्म्मत्वं महिषासुरादेरिति

इच्छाया अपि, तादृशवाक्योच्चारणानुकूलत्वात्तस्याश्च वाक्या-
न्तरस्थक्रियाकर्म्मत्वेन स्वघटितवाक्यार्थस्यानवगाहनात्तादृ-
शेष्यत्वमादायानुवादकसम्बोध्यस्य निरुक्तसम्बोध्यतापत्तिरि-
त्याशङ्कते, यदि चेत्यादि । अत्र गवित्ययमाहेत्यादाविति
शब्दस्य कर्म्मत्वार्थकतया गोशब्दकर्म्मताकोच्चारणाकर्त्तीय-
मित्येकविशिष्टवैशिष्ट्यावगाहिबोधजनकत्वमिव, मया त्वयी-
त्याद्यन्तवाक्यस्यापि मयेत्यादिवाक्यार्थकर्म्मताकप्रतिपत्त्यनु-
कूलशब्दकर्त्रीदेवीत्येकविशिष्टवैशिष्ट्यावगाहिबोधजनकत्वमिति
पदस्य कर्म्मत्वार्थकस्य तादृशबोधप्रयोजकाकाङ्क्षासम्पादकत्वा-
दिति चेत्, पूर्व्वोक्तरूपेच्छैव तादृशवाक्योच्चारणानुकूला, न तु
अवान्तरवाक्यार्थबोधमात्रविषयिणीच्छेति विवादपदस्तनया
यदि चेत्युक्तं । अथवा महावाक्यार्थबोधरूपफलेच्छया

तस्यापि त्वयीत्यादिशब्दार्थतोपपत्तिश्च। अत्रापि पूर्ववत् स्वघटितवाक्यार्थविषयकत्वान्वितक्रिया-कर्मतया वाक्यान्तरप्रतिपाद्यत्वेन या वक्तृबुद्धि-स्तद्विषयतावच्छेदकत्वेनानुगतानां चैत्रात्मत्वादीनां प्रवृत्तिनिमित्तत्वं बोध्यं। सम्बोध्यत्वघटितानु-

गतप्रयोजकमया त्वयीत्यादिखण्डवाक्यजन्यबोधरूपोपायविष-यिकाकथनक्रियाकर्मत्वानवगाहिनीच्छा भवति। तादृशे-च्छामादाय शङ्कते, यदि चेत्यादि। महावाक्यजन्यमहा-वाक्यार्थविषयकबोधेच्छायामेव तादृशवाक्योच्चारणप्रयोजकत्वं स्वीक्रियते, न तु खण्डवाक्यजन्यबोधेच्छायां मानाभावादि-त्यतो, यदि चेति। नन्वं तावता मया त्वयीत्यादौ युष्मत्पदेन सुरयादेर्बोधो माभूत्। किन्तु महिपासुरादीनां शक्तिभ्रमा-जन्यबोधो जायते, तत् कुतः सम्पद्यते इत्यत आह एवमिति। शक्त्यन्तरमिति। स्वतन्त्रास्वतन्त्रयुष्मच्छब्दभेदेन शक्तिद्वयी स्वीकार्य्येति भावः। अतोप्यन्यदीयस्वार्थतात्पर्य्यकोच्चारणा-नधीनोच्चारणत्वं स्वातन्त्र्यं तादृशोच्चारणाधीनोच्चारणकत्वम्स्वा तन्त्र्यं बोध्यं। पूर्व्ववदिति, अत्राप्यस्मच्छब्दरीत्या त्वं पण्डित इति विद्वांसं पश्यामीत्यादावप्यन्यपरयुष्मत्पदस्य दर्शनक्रिया-कर्म्मणि शक्तेर्वारणाय, स्वघटितवाक्यार्थकर्म्मत्वनिष्ठप्रकारता-निरूपिता या वाक्यान्तरजन्यप्रतिपत्तीयविशेष्यता तदाश्रय-क्रियाकर्म्मत्वेव शक्तिर्वाच्या। अतः पूर्व्वोक्तरीत्या अन्योन्या-श्रयापत्तिः। तद्वारणाय पूर्व्ववत् निवेशवदित्यर्थः। स्वघटित-

गमकशरीरे च बुद्धिविषयतावच्छेदकत्वनिवेशनं मिथ्योक्तमनुपादेयमेव। सम्बोध्यतावच्छेदके बुद्धिप्रकारकत्वस्याव्यावर्त्तकत्वात्। अथ तात्पर्य्यं सत्त्वेऽहमवाप्नोति मैत्रो जानातीत्यादौ चैत्रवाक्यस्यास्मच्छब्दाच्चैत्रोऽपि प्रतीयते। तत्र चैत्रस्य वाक्यार्थकर्म्मकक्रियाकर्त्तृत्वाभावात् तदुच्चारणस्य निरुक्तस्वातन्त्र्यत्वाभावाच्चानुपपत्तिः। एवं चैत्र त्वया भुक्तमिति मया श्रुतमित्यादौ चैत्रस्य युष्मच्छब्देन प्रत्यायनात्तस्य च वाक्यान्त-

त्यादि, प्रतिपत्तिनिरूपिता या स्वघटितवाक्यार्थविषयता-निरूपितविषयकत्वनिष्ठविषयतानिरूपितक्रियानिष्ठविषयता-निरूपितकर्म्मत्वनिष्ठविषयतानिरूपितविषयता तादृशविषयावती वक्तृबुद्धिः। तथाच स्वघटितवाक्यार्थनिष्ठविषयताकविषयित्वनिष्ठविषयताकक्रियानिष्ठविषयताककर्म्मत्वनिष्ठविषयतानिरूपितप्रतिपत्तीयविषयतावान् चैत्रादिरित्याकारा तादृशबुद्धिश्च पूर्व्वोक्तयुक्त्या शाब्दबोधात् पूर्व्वमावश्यकी। प्रवृत्तिनिमित्तत्वमिति, स्वघटितवाक्यार्थविषयताकविषयित्वनिष्ठ-विषयताकक्रियानिष्ठ-विषयताककर्म्मत्वनिष्ठ-विषयताकप्रतिपत्तीय-विषयत्वप्रकारक-वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्ने युष्मत्पदस्य शक्तिरिति ध्येयं। उक्तानुगमकमाक्षिपति अथ तात्पर्य्येति। अस्मत्पदमिदमुच्चारयितारं

रस्थक्रियाकर्म्मान्यत्वात् निरुक्तेच्छाविषयत्वरूप-सम्बोध्यत्वस्य चाभावात्तत्कथमुपपद्यतामिति चे-त्तर्हि, स्वातन्त्र्यमुच्चारणविशेषणं सम्बोध्यत्वघट-केच्छायां निरुक्तेच्छाधीनत्वादिविशेषणं त्याज्य-मेव। मया त्वयीत्यादौ तात्पर्य्यविरहादेवानु-

मां बोधयत्वित्येताद्दशेच्छासत्वे इत्यर्थः। ननु स्वतन्त्रास्मच्छब्द-स्योच्चारयितरि शक्तत्वेन तस्य बोध इत्यत आह तदुच्चारण-स्येति, निरुक्तेति,वाक्यान्तरस्थक्रियाकर्म्मत्वेन स्वघटितवाक्यार्थ-प्रतिपादनेच्छानधीनोच्चारणकत्वेत्यर्थः। वाक्यान्तरस्थक्रिया-कर्म्मान्यत्वादिति, वाक्यान्तरस्थस्वघटितवाक्यार्थकर्म्मकक्रिया-कर्म्मणि शक्त्यन्तरस्वीकारेऽपि न तया निर्व्वाह इति भावः। ननु ताद्दशशक्त्या निर्व्वाहासम्भवेऽपि स्वतन्त्रोच्चरितयुष्मत्पदस्य सम्बोध्यशक्ततया तेनैवोपपत्तिर्भवेदित्यत आह निरुक्तेच्छेति, वाक्यान्तरस्थक्रियाकर्म्मत्वेन स्वघटितवाक्यार्थानवगाहिनी या स्वजन्यप्रतीत्याश्रयत्वेनेच्छा तद्विषयत्वरूपेत्यर्थः। तथा-चैतद्युष्मत्पदस्य स्वतन्त्रोच्चारणाभावात् न ताद्दशशक्त्या निर्व्वाह इति भावः। त्याज्यमेवेति, तथाचास्मत्पदस्यो-च्चारयितरि स्वघटितवाक्यार्थकर्म्मतापन्नवाक्यान्तरस्थक्रिया-कर्त्तरि च शक्तिद्वयी। एवं युष्मत्पदस्य सम्बोध्ये वाक्यान्तरस्थ-स्वघटितवाक्यार्थकर्म्मकक्रियाकर्म्मण्यपि च शक्तिद्वयीति भावः। नन्वेवं मया त्वयीत्यादावस्मत्पदेनोच्चारयितुरूपे युष्मत्पदेन तत्सम्बोध्यस्य स्मरणस्य कथं न बोध इत्यत आह, तात्पर्य्य

वादकतत्सम्बोध्ययोर्मयात्वयोत्यादिनाऽप्रतिपाद - नोपपत्तेः। न चैवं बुद्धिविषयतावच्छेदकरूपा- वच्छिन्न एव युष्मदोऽस्मदश्च शक्तिरास्तां, किं सम्बोध्योच्चारयितृतावच्छेदकावच्छिन्ने शक्ति- स्वीकारेण तात्पर्य्यतएवातिप्रसङ्गभङ्गसम्भवादिति वाच्यं, तात्पर्य्यसत्त्वेऽपि चैत्रोच्चरितादहं करो- मीत्यादिवाक्यात् मैत्रं बोधयितुं प्रयुक्तात्वात्, चैत्रं बोधयितुं प्रयुक्तात्वाच्च। त्वं गच्छेत्यादिवाक्याच्चो च्चारयितृत्वसम्बोध्यत्वभ्रमं विना मैत्रादिबोध- स्यानुभवविरुद्धत्वात्। अन्यथा तात्पर्य्येण स्वर-

विरहादेवेति। अनुवादकतत्सम्बोध्ययोरिति महर्षिसुरथयो- रित्यर्थः। सम्बोध्येत्यादि, इदमुपलक्षणं, तेन वाक्यान्तरस्थ- मुघटित-वाक्यार्थकर्म्मतापन्नक्रियाकर्त्तृताद्दृगक्रियाकर्म्मणोरपि किं शक्तिस्वीकारेणेत्यर्थ इति ध्येयं। बाधितवाक्यार्थस्थल इति, अविदुषि अयमहं पण्डित इत्यादिवाक्यस्थले, मया वन्ध्या सुतो दृष्ट इति देवदत्त उवाचेत्यत्र च स्थले इत्यर्थः। भ्रान्तिभ्रमेणेति, अयमहं पण्डित इतीत्यादौ ताद्दृगज्ञानम- पण्डिते पाण्डित्य प्रकारकमित्याकारकज्ञानादिवर्त्तत्यर्थः। वाक्यार्थज्ञानासम्भवेनेति, परस्परार्थविशिष्टज्ञानासम्भवेनेत्यर्थः। ननु सर्व्वत्र बाधितवाक्यार्थस्थले ताद्दृशवाक्यार्थज्ञाने इष्टसाधन ताज्ञानोत्पत्तौ मानाभावेनेच्छानुदयेनाहार्य्यज्ञानासम्भवा-

सतस्तथा प्रयोगापत्तेः। इदन्तु वधातव्यं। अयमहं पण्डित इति जानाति, इत्युवाचेत्यादिस्थले सर्व्वत्र वाक्यार्थस्य कर्म्मता न सम्भवति। बाधितवाक्यार्थस्थले तदसम्भवात्। न च वाधितवाक्यार्थस्थले भ्रमरूपैव तत्कर्म्मत्वप्रतीतिरिति वाच्यं,

दाह विनापीति, विशेषप्रकारत्वेति अत्राप्येकार्थप्रकारताकापरार्थनिष्ठविशेष्यताकत्वेन पाण्डित्यादिप्रकारभ्रमज्ञानविषयकज्ञानादेवेत्यर्थः। विशेषदर्शन इति, तादृशपुरुषे पाण्डित्यं वाधितमित्यादिज्ञानवत इत्यर्थः। शाब्दबोधानुपपत्तेरिति, शाब्दबोधस्याहार्य्यत्वास्वीकारेण तस्याहार्य्यरूपस्याप्यसम्भवात् शाब्दबोधस्याहार्य्यत्वत्रादिमतेऽपि सर्व्वत्र तादृशच्छाया मानाभावेनाहार्य्यत्वासम्भवाच्चेति भावः। तद्वाक्यजन्यज्ञानेति, अत्र वाक्यजन्यत्वं तत्तज्ज्ञानं विशेषपरिचायक, मन्यर्थेति पदस्य शक्तिज्ञानात्पूर्व्वं तादृशवाक्यजन्यत्वासम्भवेन तद्रूपेण ज्ञानासम्भवाच्च। तादृशज्ञानन्तु प्रकारणादिनैव सम्भवतीति हृदयं। धात्वर्थे जानातीत्यादौ ज्ञादिधात्वर्थे धात्वर्थतावच्छेदके, उवाचेत्यादौ प्रतिपत्त्यनुकूलशब्दरूपोक्त्यर्थतावच्छेदकप्रतिपत्त्यादौ। सर्व्वत्रैवेति, अहं पण्डित इत्यादौ, इत्युवाचेत्यादौ चेत्यर्थः। शक्तिरिति। अत्र विवेचनीयमेतत्। युष्मदस्मदोः सर्व्वत्रैव सम्बोध्योच्चारयित्रोरेव शक्तत्वे, मया त्वयेत्यादिवाक्याद्देव्यादेरुच्चारयितृत्वाभावेन तद्घटकास्मत्पदादेर्व्यादौ शक्तिज्ञानासम्भवात्, शाब्दबोधानुपपत्तिः। न च तत्रेष्टापत्तिः,

विशेषदर्शिनाऽपि भ्रान्तिज्ञे न तथा प्रयोगात्तस्य च
वाक्यार्थज्ञानासम्भवेन तदनुपपत्तेः। न चाहार्य्य-
वाक्यार्थज्ञानादेव विनापि विशिष्टवाक्यार्थबुद्धिं
विशेषणप्रकारकत्वविशेष्यविशेष्यकत्वाभ्यां विशिष्ट-
ज्ञानज्ञानादेव वा विशेषदर्शी तथा प्रयुङ्क्ते इति
वाच्यं। एवमपि विशेषदर्शिनो भ्रान्तिज्ञपुरुषीय-
तथाविधवाक्याच्छाब्दबोधानुपपत्तेर्वञ्चलिपत्वात्त-
स्मात्त्वेति पदं न तद्वाक्यप्रतिपाद्यतावच्छेदकी-
भूततत्तद्धर्म्मावच्छिन्नपरं। अपि तु तत्तद्वाक्य-
जन्यज्ञानसमानाकारकपरं। तादृगर्थे तिपदा-
र्थोऽभेदसम्बन्धेन यथासम्भवं धात्वर्थ तत्त्वावच्छे-
दके च ज्ञाने विशेषणमित्येवोपगन्तव्यं। तथाच

स्तत्पदानां प्रयोगस्य त्वमितिपदपरामृष्टतादृशज्ञानतात्पर्य-
र्य्यग्राहकतया साध्यत्वादिति चेन्न। तत्र तत्र सर्व्वानुभवसिद्ध-
शाब्दस्यापलपितुमशक्यत्वात्। अन्यथा शब्दमात्रस्याप्रा-
माण्यापत्तेः। अस्मत्पदादेः शक्यार्थ इत्यादिकपरिस्थलसम्भवेन
तादृशतात्पर्य्यग्राहकत्वासम्भवाच्च प्रकरणादिर्नितिपदस्य तादृश-
तात्पर्य्यपरं न तच्छब्दप्रयोगसंशय्याम्। न च तत्रैव्या-
युत्सवितत्वभ्रमादेव शक्तिग्रहसम्भव इति वाच्यं, विशेष-
दर्शिनां तदसम्भवात्। मया त्वमाप्तथा इत्यादि काव्ये विभ्रा-
मिताद्यु चरितत्वाभावनिश्चयेऽपि व्युत्पन्नानां शाब्दबोधी-

सर्व्वत्रैव युष्मदस्मद्घटितावान्तरवाक्यस्थले इति पदं तत्परमेव। तादृशवाक्ये न च गवित्ययमाह इत्यादौ गवादिपदवत् स्वरूपमेवेतिशब्देन परामर्शार्थमुपस्थाप्यते। ननु युष्मदस्मच्छब्दार्थघटितो वाक्यार्थ, इति सम्बोध्योच्चारणकर्वोरेव युष्मदस्मदोः शक्तिः। त्वं स्थूलः, अहं स्थूलः, त्वं स्वर्ग भोच्यसे, अहं स्वर्गं भोच्ये इत्युभयत्रैव युष्मदस्मदोर्मुख्यत्वात्, सम्बोध्योच्चारयितृशरीरतादृशा-

दयाच्च। युष्मदस्मत्पदघटितपुराणादिवाक्यानां शाब्दबोधाजनने बहुतरगमामण्यस्यापत्तेरिति चेदत्र नव्याः, भट्टाचार्य्यैरेतदमापातत उक्तं, वस्तुगत्या पूर्व्वोक्तद्विविधे शक्तिर्वाच्या। अहं पण्डित इत्ययं जानातीत्यादिबाधितस्थल एवागत्या, इति पदस्य तादृशज्ञानपरत्वं कल्पनीयम्। वक्तव्यञ्च, स्वघटितवाक्यजन्य ज्ञानपरेतिपदघटितवाक्यान्तरस्य क्रियाकर्त्तृ-तादृशक्रियाकर्म्मणोश्च शक्त्यन्तरं। उच्चारयितर्य्यस्मत्पदस्य शक्तिं कल्पयित्वा, तत्र स्वातन्त्र्यविशेषणं दत्तवतां मिश्राणामप्येतदनुमतं भातीति प्राहुः। शरीरात्मरूपशक्यभेदेन तयोः शक्तिभेदमाह त्वं स्थूल इत्यादि। सम्बोध्य इति अवच्छेदकतासम्बन्धेन तत्तत्पदजन्यबोधाश्रयत्वेनेच्छाविषयतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्ने युष्मत्पदस्य, स्वोच्चारणानुकूलकृत्यवच्छेदकतावच्छेदकत्वोपलक्षित-धर्म्मावच्छिन्ने अस्मत्पदस्य च शक्तिरित्यर्थः। स च धर्म्मः शरीरनिष्ठतत्तज्जातिविशेषः।

**त्मनोर्द्वयोरेव युष्मदस्मदर्थकत्वं बोध्यं। सर्व्वे घटा रूपवन्त इत्यादौ सर्व्वपदादुद्देश्यतावच्छेदकघटत्वाद्यवच्छिन्नस्याशेषताप्रतीते, रशेषत्वं सर्व्वपदार्थः। नन्वशेषत्वं न विधेय मून्याहृत्यितदुद्देश्यतावच्छेदकवत्त्वं. केवलान्वयिनो यत्र विधेयता, तत्र विधे-**

सम्बोध्योच्चारयित्रोरात्मनोम् ताहृशयोस्तत्तच्छरीरावच्छिन्नात्मनोरेव तयोः शक्तिर्वाच्या। अन्यथा त्वमहं वा जानामीत्यादौ विकल्पानुपपत्तेः। उभयपदजन्योपस्थितयोरात्मत्वेनात्मनो रविशेषात्। एवमह जानामीत्यादावात्मत्वमात्मानाधिकरणेन ज्ञानादेरन्वयोपगमेन ताहृशनिश्चयकालेऽहं न जानामीत्यादिप्रतीत्यापत्तः। धर्म्मिविशेषमन्तर्भाव्यप्रतिबध्यप्रतिबन्धकभावस्य तु नर्थ्यस्वीकाराश्चेति दिक्॥

इति युष्मदस्मत्पदशक्तिविचारविवृतिः।

यदवगाहमानं मत् समस एवोद्देश्यविधेयमवगाहते स एव धर्म्म इति फलितम्। सर्व्वपदार्थ इति, अत्र पदार्थत्व, पदार्थतावच्छेदकसाधारण-तत्पदजन्य-बोध विषयत्वंमशक्यत्वाविषयत्वं, तेनाशेषत्वस्य प्रवृत्तिनिमित्तत्वेऽपि न क्षतिः। येन समस एवोद्देश्यविधेयवत्ताप्रतीतिस्ताहृशाशेषत्वं निर्वक्ति, अन्वशेषत्वमिति। यथेति, सर्व्वे घटाः प्रमेया इत्यादौ। ननु व्यतिरेकिविधेयस्थले तथास्तु, केवलान्वयिविधेयस्थले तु सर्व्वपदस्योद्देश्यतावच्छेदक-व्यापकसमुदायत्वावच्छिन्नबोधकोऽस्त्वित्यत आह, यत्रवेति। ननूद्देश्यतावच्छेदकव्यापकसमुदायत्वाव-

यशून्यत्वस्याप्रसिद्ध्या. यत्र वा विधेयशून्ये उद्देश्य-तावच्छेदकीयसम्बन्धविशेषेण वृत्तेरप्रसिद्धिः, सर्व्वे घटा जातिमन्त इत्यादौ गत्यन्तराभावापत्तेः, पदान्तरादुपस्थिते उद्देश्यतावच्छेदकघटत्वादिविशिष्टे सर्व्व पदोपस्थाप्यविधेयव्याप्तिविशिष्टघटत्वाद्यवच्छिन्नस्य कथञ्चिदन्वयसम्भवेऽस्यानुभवविरोधाच्च। घटत्वत्वाद्यनुपस्थितिदशायामपि सर्व्वे घटा इत्यादिवाक्यादन्वयबोधस्यानुभविकतया वाच्यत्वेनैव घटत्वादेः सर्व्वपदार्थस्य स्वीकरणीयतया तज्जन्यव्याप्तिबोधस्य निर्धर्म्मितावच्छेदकतया विपरीतज्ञानाविरोधित्वेनाकिञ्चित्करतापाताच्च। नापि तदुद्दे-

च्छिन्नवृत्तित्वीयस्वरूपसम्बन्धेन सम्बन्धसामान्यावच्छिन्न-विधेयशून्यवृत्तित्वाभाववदुद्देश्यतावच्छेदकवत्त्व विवक्षणेनोक्त दोष इत्यत आह, पदान्तरेति। घटादिपदादित्यर्थः। अन्वय-सम्भव इति, तदंश तादृशव्याप्त्यधिकावगाहितयेति भावः। अनुभवविरोधस्य स विवादतया दोषान्तरमाह, घटत्वत्वा-द्यनुपस्थितीति। विपरीतज्ञानाविरोधित्वेनेति, घटत्वं रूपा भाववद्वृत्तीति निश्चयकाले सर्व्वे घटा रूपवन्त इति प्रत्यया-स्येति भावः। तत्तद्विधेयवत्त्वमिति, अशेषत्वमिति शेषः। स्वरूपतो घटत्वादेरुद्देश्यतावच्छेदकत्वे घटनिष्ठाभावाप्रयोगि-त्व घटत्वत्वेन साद्दश्यत्वमे घटत्वावच्छिन्नाभावाप्रतियोगित्वम्

श्यतावच्छेदकव्यापकतत्तद्विधेयवत्त्वं, तदवच्छिन्ने विधेयान्वयप्रसङ्गात्। नापि विधेयान्वयिव्यापकतापर्य्यन्तमेव सर्व्वपदार्थः। नामार्थद्वयस्य भेदान्वयस्याव्युत्पन्नत्वात्। नाप्यभेदेन रूपवदात्मकविधेयान्वयी। घटत्वादिव्यापक एव तदर्थं, तथा सति सर्व्वे वेदाः प्रमाणमित्यादौ सर्व्वपदस्य प्रमाण-

व्यापकत्वं। तदवच्छिन्ने, तादृशविधेयवदवच्छिन्ने। अनन्वयप्रसङ्गादिति, उद्देश्यतावच्छेदकविधेययोरैक्यादिति भावः। व्यापकतापर्य्यन्तं, उद्देश्यतावच्छेदकव्यापकतामात्रम्। तस्य च विधेय एवान्वयो भवेदिति लाभाय विधेयान्वयीति विशेषणम्। भेदान्वयस्य भेदसम्बन्धेनान्वयस्य। तथाच रूपाभाववदवृत्तिघटत्ववदभिन्नो घटो रूपवदभिन्न इत्याकारको बोध इति। स्वरूपसम्बन्धेन घटपदार्थादौ तस्यान्वयो न भवितुमर्हतीति भावः। रूपवदात्मकविधेयेति, मतुप्सम्बन्धघटकतया रूपसम्बन्धिविधेरित्यर्थः। अत्र व्याप्यता चोद्देश्यतावच्छेदकताघटकसम्बन्धेन, व्यापकता च विधेयतावच्छेदकसम्बन्धेन। अत्र च विधेयत्वं, तादात्म्यसम्बन्धेन। एवञ्च, घटत्वव्यापकाभिन्नरूपसम्बन्ध्यभिन्नो घट इत्याकारकशाब्दबोधः। तथा सति, सर्व्वपदार्थस्य विधेयांशे विशेषणत्वे सति। सामानाधिकरण्यादिति, अभेदेन तदर्थेन सह स्वार्थान्वयबोधसाकाङ्क्षत्वादिति विभिन्नप्रवृत्तिनिमित्तकत्वे सत्येकधर्म्मिप्रतिपादकत्वासाधकत्वादित्यपि व्याचक्षते। मतमसारमिति,

पदेनैव सामानाधिकरण्यग्रात्, तत्समानलिङ्ग वच-
नत्वापत्तेः। सर्व्वे घटा वर्त्तन्त इत्यादौ क्रियारूप-
विधेये व्यापकस्याभेदान्वये सर्व्वपदस्य नपुंसक-
त्वापत्ते र्व्यापकताया भेदान्वयोपगमे नामार्थधात्व-
र्थयोर्भेदान्वयविरहनियमभङ्गापत्तेः। यत्त्वशेषत्वं न

सर्व्वं वेदाः प्रमाणमित्येव प्रयोगः स्यात्। सविभक्तिकनामद्वय-
जन्याभेदान्वयस्थलेऽसति वाधके समानलिङ्गवचनस्यैव तन्त्र-
त्वात्। तथाच प्राच्यैरुक्तं, विशेष्यस्यैव यल्लिङ्गं, विभक्तिवचने
च ये। तानि सर्व्वाणि योज्यानि विशेषणपदेष्वपीति। नन्वेवं
वेदा इत्यनेन प्रमाणमित्यस्य कथं समानवचनलिङ्गकत्वं नेति
चेत्, प्रमाणपदस्य सर्व्वदैव नपुंसकलिङ्गकत्वरूपवाधकसत्त्वात्।
असमानवचनकत्वस्य तु व्युत्पत्तिवादग्रन्थादौ स्वयमुपपादित-
त्वादिति। धात्वर्थविधेयकस्थलेऽपि दोषं दर्शयति, सर्व्वे घटा
वर्त्तन्त इति। नपुंसकत्वापत्तेरिति, इदमुपलक्षणं। एकवचन-
त्वापत्तिरपि ज्ञेया। तथाच सर्व्वे घटा वर्त्तन्त इति प्रयोगा-
पत्तेरिति क्रियाविशेषणानामेकत्वं, नपुंसकत्वञ्चेत्यनुशासना-
दिति भावः। इदञ्च, आख्यातार्थाविवक्षावादिमणिकारमते।
अन्यथा, आख्यातार्थाश्रयत्वस्यैव विधेयत्वेन धात्वर्थस्य विधेय-
त्वासम्भवः स्यात्। तादृशव्यापकत्वार्थकल्पेऽप्युक्तदोषा-
सम्भवेन दोषान्तरमाह, नामार्थेति। प्रकारान्तरं दूषयितु-
मुपन्यस्यति, यत्त्विति। तन्नाभोपपत्तेरशेषत्वलाभोपपत्तेः।
उद्देश्यतावच्छेदकावच्छेदेनेति, उद्देश्यतावच्छेदकावच्छिन्नत्वञ्च,

सर्व्वपदार्थः, उद्देश्यतावच्छेदकावच्छेदेन विधे-याव्वयोपगमादेव तल्लाभोपपत्तेः, किन्त्वनेक-त्वमेव । अनेकत्वञ्च, उद्देश्यतावच्छेदकसमा-नाधिकरणभेदप्रतियोगित्वं । अतएव सर्व्वं गगनं शब्दवदित्यादयो न प्रयोगाः । एवञ्च सर्व्वे घटा इत्यादौ घटनिष्ठान्योन्याभावप्रतियोग्यभिन्ना घटा इत्ययमर्थः प्रतीयते । नचैवं घटत्वादिसामा-नाधिकरण्यमात्रेण विधेयान्वयतात्पर्य्येण सर्व्वे घटा नीला इत्यादिप्रयोगापत्तिः । सर्व्वपदार्थ-विशेषिते उद्देश्यतावच्छेदकावच्छेदेनैव विधेया-न्वयनियमात् । सर्व्वं प्रमेयमित्यादौ प्रमेयादि-विधेयके उद्देश्यवाचकवस्त्वादिपदमध्याहृत्यैव प्रतीतिः । अन्यथोद्देश्यतावच्छेदकीभूतव्याप्य-धर्म्मानुपस्थित्या व्यापकत्वार्थकत्वानुपपत्तिरिति, तदपि न युज्यते । गगनादावपि द्वित्वाद्यवच्छिन्न-तद्भेदसत्त्वेन सर्व्वपदस्यानेकार्थत्वमुपगम्यापि सर्व्वं

उद्देश्यतावच्छेदकव्यापकविधेयप्रतियोगित्वं । तच्च संसर्ग-मर्य्यादया विधेयतावच्छेदकसंसर्गांशे भासते । तथाच संस-र्गांशेऽपि भ्रमत्वस्वीकारेण नीलांशे घटत्वव्यापकत्वबाधात्, सर्व्वे घटा नीलाः, इतिना भ्रान्तानां न बोध इति हृदयं । न

गगनमित्यादिप्रयोगस्य दुर्व्वारत्वात् । तदुद्देश्यता-
वच्छेदकसामानाधिकरण्यभेदप्रतियोगितावच्छेद-
कत्वस्य तत्तदुद्देश्यतावच्छेदके सर्व्वत्र वाधितत्वेन
तत्प्रतीतेः दुरुपगमत्वात् । सामान्यतःप्रतियोगि-
वृत्त्यन्यत्त्वस्य वृत्तिमदवृत्तित्वात्, स्वप्रतियोगिवृत्तयो
ये ये तद्भेदकूटस्य दुरुपगमतया तद्विशेषणेन द्वित्वा-

प्रयोगा इति, विशेषदर्शिनामिति शेषः । गगनस्यैकत्वेन गगन-
निष्ठभेदप्रतियोगित्वस्य गगने वाधादिति । तद्भेदसत्त्वेन,
गगनभेदसत्त्वेनेत्यर्थः । गगनं न घटपटोभयमित्यादिप्रतीत्या,
एकदेशवृत्तिधर्म्मावच्छेदेन व्यासज्यवृत्तिधर्म्मावच्छिन्नभेद-
स्वीकारात् । एवञ्च गगननिष्ठभेदप्रतियोगित्वं गगने वाधित-
मिति । नन्द्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगि
तावच्छेदकोद्देश्यतावच्छेदकत्वमेवानेकत्वं, तथाच सर्व्वं
गगनमित्यादौ गगनत्वादिमात्रस्योद्देश्यतावच्छेदकतया न
तद्द्वित्वाद्यवच्छिन्नभेदमादायदोष इत्यत आह, तदुद्देश्यताव-
च्छेदकेति । वाधितत्वेनेति, घटत्वादौ घटत्वसमानाधि-
करणभेदप्रतियोगितावच्छेदकत्वस्य वाधितत्वेनेत्यर्थः । ननु
द्वित्वाद्यवच्छिन्नभेदस्याव्याप्यवृत्तितया प्रतियोगिवृत्तित्वेन
प्रतियोग्यवृत्तित्वविशेषणेनैव तद्वारणं भवेदित्यतस्तद्दूषयति
सामान्यत इति । स्वस्वनात्मभावेनेत्यर्थः । वृत्तिमदवृत्ति-
त्वादिति, वृत्तिमत्भावस्यैव वृत्तित्वसत्त्वादिति । दुरुपगमत-
येति, द्वित्वाद्यवच्छिन्नप्रतियोगिताकानां स्वप्रतियोगिवृत्तीनां

द्यवच्छिन्नभेदव्यावृत्तेरपि हेयत्वात्। अस्तु वा यथाकथञ्चित् तद्व्यावृत्ति,स्तथापि अनेकत्वमात्रस्य सर्व्वपदार्थत्वेऽवच्छेदकावच्छेदेनान्वयेऽवच्छेदकैकदेशव्यापकताबोधस्यानुभवविरुद्धतया सर्व्वे घटा रूपवन्त इत्यादौ घटनिष्ठभेदप्रतियोगिघटत्वस्योद्देश्यतावच्छेदकतया-शुद्धघटत्वादि-व्यापकत्व-भानानुपपत्त्या घटत्वसामानाधिकरण्येन रूपादिमदन्यत्वनिश्चयदशायां तादृशवाक्याच्छाब्दबोधापत्ति-र्दुर्व्वारैव। एवं विशेष्यतावच्छेदकव्यापकताया

भेदानामनन्ततया तत्तद्व्यक्तित्वेन तेषां योगजधर्म्मं विना, अबोध्यतयेत्यर्थः। ननु स्वनिरूपकत्व, स्वाश्रयवृत्तित्वोभय-सम्बन्धेन प्रतियोगिताविशिष्टान्यत्वस्य विशेषणीयत्वेन तज्ज्ञानस्य सुलभतया दोषान्तरमाह, तथापीति। अनुभवविरुद्धतयेति, पुरुषत्वसामानाधिकरण्येन पुरुषो न दुःखवानिति निश्चयानन्तरं रोगवान् पुरुषो दुःखवानिति बोधमात्रस्यैतादृश-निश्चयमात्रानन्तरं पुरुषो न दुःखवानिति तादृशबोधस्य च सर्व्वानुभवसिद्धत्वात्। धूमवद्द्रव्यं वह्निमदिति निश्चयमस्त्वि वह्न्यर्थिनां द्रव्यान्तरे, कमलं पुष्पं सुगन्धि इति निश्चयानन्तरं पुष्पान्तरे सर्व्वस्याऽवच्छेदावच्छेदेन प्रवृत्त्यभावदर्शनाच्च। एक-देशीभूतवह्नित्वपुष्पत्वाद्यवच्छेदेन तद्वत्ताभानोपगमे तादृशप्रवृत्त्युपपत्तेर्दुर्व्वारत्वादिति भावः। दुर्व्वारैवेति,तादृशज्ञानजन्य-बोधस्य शुद्धघटकत्वव्यापकताघटितरूपघटत्वाद्यवच्छेद्यत्वानव-

विशेषणसंसर्गांशे संसर्गविशेषणीभूतविशेषणांशे वा भानात्, सर्व्वेषु घटेषु रूपमित्यादौ घटत्वादे-

गाहि तया, अतस्तादृशबोधं प्रति घटत्वसामानाधिकरण्येन रूपवदन्यत्वनिश्चयस्याप्रतिबन्धकत्वात्, प्रतिबन्धकत्वाच्च, तादृश व्यापकत्वावगाहितादृशबुद्धिं प्रतीति। यदि च नीलघटो नास्तीत्यादिप्रतीतौ नीलादेस्तादृशाभावप्रतियोगितावच्छेदकत्वानवगाहनेऽपि प्रतियोग्यंशे उपलक्षणविधयाभानवदत्रापि तादृशानेकत्वस्य व्यापकत्वांशेऽनवगाहनेऽप्युद्देश्यतावच्छेदकघटकतया भान यदि प्रामाणिकं तदाप्याह, एवं विशेष्यतेति। अवच्छेद्यत्वावगाहिबुद्धौ विषयतावच्छेदक-संसर्गांशे उद्देश्यताकव्यापकत्वस्य भानं समवायस्येश्यमते तस्य द्रव्यत्वव्यापकतया द्रव्यत्वावच्छेदेन द्रव्यं रूपवदिति प्रतीतेरबाधितार्थकतया अभ्रान्तस्यापि तादृशप्रतीत्यापत्तेः। विशिष्टवैशिष्ट्यानवगाहिबोधे विधेयप्रतियोगित्वेन तादृशसंसर्गस्य भाने मानाभावाच्चात आह, संसर्गविशेषणीभूतविशेषणांश इति। विषयतावच्छेदकसंसर्गांशे विशेषणस्य विधेयप्रतियोगित्वस्य तद्घटकविधेयांश इत्यर्थः। तथाचावच्छेदकावच्छेद्यत्वावगाहि बुद्धौ उद्देश्यतावच्छेदकव्यापकविधेयप्रतियोगित्वस्यैव भानात् रूपादौ द्रव्यत्वव्यापकविरहेण तद्भाने भ्रम एव इति नाभ्रान्तानां तथाविधबोधः। निरूपकतासम्बन्धावच्छिन्ने तादात्म्यसम्बन्धेन प्रकृत्यर्थवन्निष्ठाभावीया या निरूपकत्वसम्बन्धावच्छिन्नप्रतियोगिता तदभावः। तथाच स्वनिष्ठावच्छेदकताकसम्बन्धिनिष्ठावच्छेदकताकवृत्तितात्वावच्छेदक-

विशेष्यतानवच्छेदकत्वेन रूपादौ तद्व्यापकत्वभानं दुर्लभमापद्येत। न च तत्र सप्तम्यर्थाधेयत्वादौ निरूपकत्व-सम्बन्धावच्छिन्नः व्यापकता-सम्बन्धेनैव प्रकृत्यर्थस्य घटादेरन्वयः स्वीक्रियते। घटादेर्व्याप्यता च तादात्म्यसम्बन्धेन। व्यापकता च यादृश-रूपावच्छिन्ने आधेयत्वादेरन्वयस्तदवच्छिन्ननिष्ठा धेयतात्वाद्यवच्छिन्नाः संसर्गाः, अतो रूप-निष्ठाधेयत्वादेराधेयतत्वादिना द्रव्यादिव्यापकत्वे-ऽपिनातिप्रसङ्गः। रूपनिष्ठाधेयत्वादिनाधेयत्वादेः पदानुपस्थितत्वेऽपि न क्षतिः। तथा सत्यपि ता-दृशस्य संसर्गघटकतया भानेऽप्यविरोधादिति वाच्यं, उक्तव्यापकतायाः संसर्गत्वे मानाभावात्। अस्तु

ताकाभावत्वावच्छिन्नावच्छेदकताकप्रतियोगितात्वावच्छिन्ना-वच्छेदकताकाभाववत्त्वमेव सम्बन्धः। नातः स्वस्य व्यापकता-घटकतया प्रथमपदार्थे स्वस्मिन् स्वप्रतियोगित्वविरहेऽपि न क्षतिः। केचित्तु, आपाततः प्रतियोगित्व स्वीकृत्य आशङ्कितं, तदभावेनाग्रे खण्डितमित्याहुः। तदवच्छिन्ननिष्ठेति, तथाच प्रकृत्यर्थवच्छिन्नाभावप्रतियोगितानवच्छेदकघटादिनिष्ठाधेयता-त्वमेव सम्बन्धः। नातिप्रसङ्ग इति, न सर्व्वेषु घटेषु नील इत्यादिप्रत्ययप्रसङ्गः। न क्षतिः, न तादृशशाब्दबोधानुप-पत्तिरिति। मानाभावादिति, तादृशव्यापकतायाः संसर्ग-

वा उद्देश्यविधेययोर्विशेष्यविशेषणता। वैपरीत्येऽपि विधेयांशे उद्देश्यतावच्छेदकव्यापकत्वस्य उद्देश्यविधेयभावमहिम्नैव संसर्गतयैव भानं। भवतु चोद्देश्यस्य विशेषणतया उपस्थितस्यापि विधेये पारतन्त्र्येणान्वयो व्युत्पत्त्यविरुद्धः। नामार्थयोरपि पारतन्त्र्येणान्वयो मा व्युत्पत्तिं

त्वस्यान्यत्राक्लृप्तत्वात्, अत्र तत्कल्पने तादृशसम्बन्धघटिततात्पर्य्यज्ञानादेरपि कारणत्वकल्पनापत्त्या गौरवस्यैव बाधकत्वादिति। यत्तु, यत्र माममधीते इत्यादावनुशासनं, तत्रैव व्यापकतायाः संसर्गतया भानमिति भाव इति, तत्तुच्छं। फलमुखगौरवस्य न दोषायेत्यतस्तत्स्वीकृत्य, दोषान्तरमाह, अस्तुवेति, वैपरीत्येपीति। अत्रोद्देश्यस्य विशेषणत्वं विधेयस्य घटादेर्विशेष्यत्वमिति वैपरीत्येऽपि। व्यापकताया इति आधेयतासम्बन्धेनेत्यर्थः। विधेयांश इति, पारतन्त्र्येणोद्देश्यभानमभिप्रेत्य। महिम्नैवेति, उद्देश्यविधेयभावप्रयोजकसामग्र्यैवेत्यर्थः। तृतीयार्थः प्रयोज्यत्वं, तस्य च भानमित्यत्रान्वयः। ननु सत्यम्यर्थोधेयत्व विशेषणतयोपस्थितस्य घटादेर्घटत्वादिव्यापकतासम्बन्धेन विधेयरूपादौ कुतोऽन्वयः। एकविशेषणतयोपस्थितस्यान्यत्र विशेषणतयान्वयस्य व्युत्पत्तिविरुद्धत्वादित्यत आह, भवतु चेति। तथाच तादृश-नियमः स्वातन्त्र्येणान्वय एवेति, नामार्थयोरभेदान्वयस्य व्युत्पत्तिविरुद्धत्वं स्वातन्त्र्येणान्वय एवेत्याह नामार्थेति। यत्रेति, द्रव्ये सर्व्वाणि

विरोत्स्यीत्। तथापि सर्व्वपदस्य यत्र विधेयवाचक-पदसामानाधिकरण्यं, तत्र विधेयतावच्छेदकांशे उद्देश्यस्य तत्सम्बन्धस्य वानुभवसिद्धो व्याप्तिबोधो दुरुपपादः। एवं घटे न सर्व्वाणि रूपाणि

रूपाणीत्यादौ सामानाधिकरण्यमित्यस्य ताद्दशपदेनाभेदान्वयसाकाङ्क्षत्वमर्थः। विधेयतावच्छेदकांशे, रूपत्वादौ। उद्देश्यस्य, द्रव्यादेः। तत्सम्बन्धस्य, तत् प्रतियोगिक सम्बन्धस्य। अनुभवसिद्ध इति, अन्यथा घटे सर्व्वाणिरूपाणीत्यादिप्रयोगापत्तेः। रूपनिष्ठभेदप्रतियोगिरूपे घटवृत्तित्वस्याबाधादिति। व्याप्तिबोध इति, व्याप्यतावच्छेदकत्वबोध इत्यर्थः। व्यापकताच तादात्म्येन। व्याप्यताच, विधेयान्वयिवृत्तिताघटकसम्बन्धेन। तथाच तादात्म्येनद्रव्यवदन्यावृत्तित्वरूपव्याप्यत्वलाभः। अथवा सर्व्वं घटा इत्यादौ यथा विधेये उद्देश्यतावच्छेदकव्यापकत्वं भासते, तथा द्रव्ये सर्व्वाणीत्यादौ विधेयतावच्छेदकव्यापकत्वमुद्देश्यतावच्छेदके भानमभिप्रेत्य, विधेयतावच्छेदके व्याप्यत्वमुक्तं। दुरुपपाद इति, तद्बोधक पदाभावात्, उद्देश्यविधेयभावप्रयोजकसामग्र्या व्यापकताबोधकस्यैवकल्पितत्वाच्चेति भावः। ननु यथोद्देश्यपदसमानाधिकरणसर्व्वपदकस्थले उद्देश्यविधेयभावमहिम्नैव पारतन्त्र्येणोद्देश्यतावच्छेदकव्यापकत्वस्य विधेये भानं भवति, तथा विधेयवाचकपद समानाधिकरणसर्व्वपदस्थले विधेयतावच्छेदकव्यापकत्वमुद्देश्य व्याप्यतावच्छेदकत्वं विधेयेऽवगा-

अपि तु कानिचिद्देवेत्यादौ रूपनिष्ठभेदप्रतियोगिरूपत्वावच्छिन्नाभावो घटादौ बाधित एवेत्ययोग्यतापत्तिः। न च तादृशरूपत्वादिसामानाधिकरण्येन घटादिवृत्तित्वाभावः प्रतीयते, स चाबाधित एव। नञसमभिव्याहारस्थले अग्रेपत्वभानानुपगमे च्चतिविरहादिति वाच्यं। एवं सति तत्र घटस्योद्देश्यत्वानिर्व्वाहात्। न च तत्र रूपस्योद्देश्यत्वं प्रथममनिर्द्दिष्टत्वात्। अत्रोच्यते।

हते। एवञ्च तन्मते न कोऽपि दोष इत्यत आह, एवं घटेन सर्व्वा णीति। रूपनिष्ठभेदप्रतियोगीति, अत्र सर्व्वपदार्थानामेकरूपघटत्वादिसमानाधिकरणभेद-प्रतियोगि-विशेषितरूपपदार्थान्वितनञर्थाभावो घटादौ प्रतीयते, तत्र नञर्थाभावादौ अनेकत्वरूपत्वाद्यवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन तादृशरूपादेरन्वयः, अतस्तवच्छिन्नेत्युक्तं। उद्देश्यत्वानिर्व्वाहादिति, स्वांशे मुख्यविशेष्यतापन्नस्य स्वांशे मुख्यप्रकारतापन्नस्याधेयत्वसम्बन्धावच्छिन्नवृत्तित्वद्वाराप्रकारतापन्नस्यैव वा स्वांशे उद्देश्यत्वनियमादभावस्य विधेयत्वाच्चेति भावः। प्रथमेति, उद्देश्यविधेयभावेन पर्व्वतो वह्निमानित्यादिव्यवहारादसतिबाधके उद्देश्यवाचकपदस्य प्राङ्निर्द्देशावश्यकत्वात्। तथा च प्राच्चैरुक्तं, अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेदिति। अतएव न्यक्कारो ह्ययमेवइत्यादावुद्देश्यवाचकस्येदम्पदस्य परवर्त्तित्वेनालङ्कारिकानां विधेयाप्रतिपत्तिरूपविधेया

उद्देश्यतावच्छेदकव्यापकविधेय व्याप्य पर्य्याप्ति-
को धर्म्मः सर्व्वपदप्रवृत्तिनिमित्तं। सर्व्वे घटा
इत्यादौ तथाविधधर्म्मो घटादिनिष्ठयावत्त्वमेव।
तस्य व्यासज्यवृत्तितया तत्पर्य्याप्ते र्घटत्व व्यापक-
त्वात्, रूपादिव्याप्यत्वाच्च। शब्दाद् घटत्वादि-
व्यापकरूपादिव्याप्यत्वलाभे तयोरपि व्याप्यव्याप-

विमर्शदोषदानं मङ्गच्छते। वस्तुतस्तु, एतदपि ग्रन्थकारस्य
न निर्भरः। किन्त्वं तत्कल्पे कुसृष्टिकल्पनापत्तावेव। अत-
एव विधेयवाचकपदस्य नोत्तरवर्त्तित्वमावश्यकं। सति
तात्पर्य्ये, योजनयापि उत्तरवर्त्तित्वादिज्ञानेनोद्देश्यविधेय-
भावप्रतिपत्तिर्भवतीत्यवयवग्रन्थे स्वयमेव लिखितं। एतेन
दध्ना जुहोतीत्यादौ उत्तरवर्त्ति जुहोतेरर्थस्याद्यत्वेऽपि, एवं
निःशेषच्युतचन्दनं स्तनतटमित्यादावुद्देश्यबोधस्य स्तन-
तटादेरुत्तरवर्त्तित्वेऽपि न तदर्थस्योद्देश्यत्वहानिः। नवा तस्य
दुष्टकाव्यत्वमित्यलं विस्तरेण। इति पूर्व्वपक्षः। घटत्व-
व्यापकत्वादिति, व्यासज्यवृत्तिधर्म्मप्रतियोगिकपर्य्याप्तेरधि-
करणभेदेन भेदाभावादेकत्वादिति भावः। घटत्वादीति,
घटत्वादिव्यापकत्वरूपादि व्याप्यत्वयोर्लाभ इत्यर्थः। पर्य्याप्ता-
विति शेषः। तयोरपीति, घटत्वादिरूपाद्योरित्यर्थः। ननु
सर्व्वे घटा रूपवन्त इति नियमस्य एकदेशव्यापकताभाना-
ङ्गीकर्त्तृनये घटत्वावच्छेद्यत्वानवगाहनात् प्रतिबन्धक-
त्वेन तदुत्तरं सामानाधिकरण्ये न घटो न रूपवानिति बुद्धुत्-

कभावोऽर्थत एव लभ्यते। द्रव्यत्व व्यापक-पर्य्याप्तेः रूपाद्यव्याप्यत्वात्, सर्व्वाणि द्रव्याणि रूपवन्तीत्यादौ अयोग्यता। उद्देश्यतावच्छेदक व्यापकत्वञ्च तत्समानाधिकरणान्योन्याभावप्रति-योगितानवच्छेदकत्वं, तेन रूपादिव्याप्यपर्य्याप्ते-र्द्रव्यत्वादिमन्निष्ठात्यन्ताभाव-प्रतियोगितानतच्छे-दकधर्म्मवत्त्वेऽपि न क्षतिः। घटत्वादिव्यापकया-वत्त्वपर्य्याप्तिश्च न घटादिव्यक्तिभेदाद्भिद्यते। अतो न घटत्वादिव्यापकताया अनुपपत्तिः। विधेय-व्याप्यत्वञ्च व्यभिचारित्व सम्बन्धावच्छिन्नप्रति-

पक्षे दुर्व्वार इति वाच्यं, अगत्या सर्व्वपदार्थविशेषित तत्त-द्धर्म्मावच्छिन्ने रूपादिमत्ता निश्चयस्य स्वातन्त्र्येण प्रतिबन्धक कल्पनात्। वस्तुतस्तु अर्थत एव स्वतन्त्रसामग्रौ वशेनैव पार-तन्त्र्येणेति शेषः। तथाच पारतन्त्र्येण घटत्वावच्छेदेन रूपवत्त्वावगाहनाव्यतदापत्तेरिति भावः। अर्थत एव, तम्मू-लकादनुमानत एव। लभ्यते, ज्ञायते। तथाच यद्व्यापकं यद्व्याप्यं भवति तत्तद्व्याप्यं भवतीत्युदाहरणादिति भावः। तत्समानाधिकरणान्योन्याभावेति। उद्देश्यतावच्छेदक सामानाधिकरण्यञ्च, तदधिकरणवृत्तित्वं, तदधिकरणत्वञ्च, उद्देश्यतावच्छेदकताघटकसम्बन्धेन, तेन जन्यत्व निष्ठप्रति-योगिक पर्य्याप्तेरपि कालिकेन महाकालान्यद्रव्यत्वाधिकरण निष्ठोऽन्योन्याभावप्रतियोगितानवच्छेदकत्वेऽपि न सर्व्वं महा-

योगिताक-तत्तद्विधेयतावच्छेदकावच्छिन्नतत्तद्विधे-
कालान्यद्रव्यं जन्यमित्यादिप्रयोगः । न वा घटाद्यनुयोगिक-
समवायेन द्रव्यत्ववन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदक-
घटादिनिष्ठपर्य्याप्तिमादाय, सर्व्वं द्रव्यं रूपवदित्यादयोऽपि ।
तत्र प्रतियोगित्वञ्च, अवच्छेदकताविशिष्टान्यत्वेन विशेषणीयं ।
तेन तत्पर्य्याप्तिमत्पटौ नोभयमित्यादिभेदप्रतियोगितावच्छेद-
कत्वेऽपि न व्यापकत्वभङ्गः । वैशिष्ट्यञ्च, स्वनिरूपितत्व, स्वभिन्ना-
वच्छेदकतानिरूपितत्वोभयसम्बन्धेन । स्वमवच्छेदकत्वं । तादृश-
प्रतियोगितावच्छेदकत्वमपि तादृशं निवेशनीयं । तेन तद्घट-
वृत्तित्वविशिष्टतत्पर्य्याप्तिमन्निष्ठतादृशभेदमादाय न दोषः ।
ननु तन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्म्मवत्त्वरूप-
व्यापकत्वविवक्षणे का क्षतिरित्यत आह, तेनेत्यादि । तादृश-
प्रतियोगितानवच्छेदकधर्म्मश्च गुणत्वादिः । ननु घटादिनिष्ठ-
यावत्त्वप्रतियोगिकपर्य्याप्तेर्घटादिभेदेन भिन्नत्वे चालनीन्याये-
नान्यघटनिष्ठभेद-प्रतियोगितावच्छेदकत्वस्यान्यघटानुयोगिक-
पर्य्याप्तौ सत्त्वे न व्यापकत्वं दुर्लभमित्यत आह, घटादीति ।
केवलान्वयिविधेयकस्थले उपपादयितुमाह, विधेयव्याप्यत्व-
ञ्चेति । व्यभिचारित्वमत्र विधेयतावच्छेदकसम्बन्धेनाभाववद्घटितं
तेन न सर्व्वं जन्यं द्रव्यमित्यादिप्रयोगाः । इदमुपलक्षणं । सर्व्वे
घटा रूपमित्यादिस्वरूपतो विधेयस्थले विधेयवद्भिन्नवृत्तित्वा-
भाववत्त्वस्यैव व्याप्तित्वं बोध्यं । स्वावच्छिन्नानिरवच्छिन्नविधेय-
भेदेन शक्तिभेदस्येष्टत्वात् । केवलान्वयिधर्म्मस्य स्वरूपतो-
भानासम्भवेन न तत्र गतिविरहः । नन्वेवं रीत्या, सर्व्वपदस्य

याभाववत्त्वं । अतो विधेयतावच्छेदकावच्छिन्नस्य यत्र केवलान्वयित्वं, तत्र नाप्रसिद्धिः । व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकस्यैव तथाविधाभावस्य प्रसिद्धत्वात् । अत्रोद्देश्यताविधेयतावच्छेदकघटत्वरूपत्वादीनामुपलक्षणतयानुगमकं । तादृशावच्छेदकत्वमेवातो न शक्त्यानन्त्यं, न वाऽपूर्व्वधर्म्मभानानुपपत्तिः । यद्यपि सामान्यत उद्देश्यतावच्छेदकत्वमव्यावर्त्तकमेव, उद्देश्यतावच्छेदकविधया स्वसमभिव्याहृतपदप्रतिपाद्यत्वञ्च, तादृशपदजन्यशाब्दबोधात् प्राक् दुर्ग्रहं, तथापि तादृशपदप्रतिपाद्यत्वेन वक्तृबुद्धेर्वक्तृतात्पर्य्यस्य वा विषयत्वं तथा वाच्यं । तच्च प्रकरणादिना पूर्व्वमपि गृहीतुं शक्यते । स्वत्वाननु-

शक्तिनिर्व्वचने, उद्देश्यतावच्छेदकविधेयभेदेन नानार्थत्वप्रसङ्ग इत्यत आह, अतोद्देश्येत्यादि । अपूर्व्वभानेति, व्यवहारादितः पूर्व्वागृहीतशक्तिकभानानुपपत्तिरित्यर्थः । अव्यावर्त्तकमितराव्यवच्छेदकं । दुर्ग्रहमिति, केनापि प्रमाणेन निश्चेतुमशक्यमित्यर्थः । प्रकरणादिना हेतुनेति यावत् । गृहीतुमनुमातुं । तथाचेदं वाक्यं, स्वजन्यप्रतिपत्तीयोद्देश्यतावच्छेदत्वविधेयताकत्वेन तत्तद्धर्म्मविषयताकवक्तृबुद्धिप्रयोज्यं तत्तत्प्रकरणीयत्वादित्यादिरीत्या श्रोतुरनुमितिसम्भ-

वादिति भावः। स्वं सर्व्वपदघटितं तादृशं वाक्यं। पूर्व्ववदस्मच्छब्दविचारवत्। समाधेय इति, उद्देश्यतावच्छेदकत्वेन स्वघटितवाक्यजन्यप्रतिपाद्यत्वप्रकारताकवक्तृबुद्धिविषयतासम्बन्धेन सर्व्वपदविशिष्टधर्म्मव्यापकत्वे सति, विधेयतावच्छेदकत्वेन तादृशविषयतासम्बन्धेन सर्व्वपदविशिष्टधर्म्मवद्व्याप्या या पर्य्याप्तिस्तत्प्रतियोगितावत्त्वस्य प्रवृत्तिनिमित्ततयोपपादनीय इत्यर्थः। ननु सर्व्वे घटा गुणवन्तः, सर्व्वं द्रव्यं रूपवदित्यादिवाक्यद्वयजन्यसमूहालम्बनबोधमादाय तादृशवाक्यद्वयस्य प्रामाण्यापत्तिर्दुर्व्वारैव। द्रव्यगतयावत्त्वस्यापि तादृशवाक्यजन्यसमूहालम्बन-बोधीयविधेयतावच्छेदकत्वस्य गुणत्वादावपि सत्वेन तद्धर्म्मावच्छिन्नव्याप्यत्वस्य सत्त्वात्। एवं व्यापकताकुक्षौ सर्व्वपदगतानुपूर्व्वीरूपानुगतधर्म्मपुरस्कारेण प्रवेशे, सर्व्वपदवैशिष्ट्यस्य घटत्व इव पटत्वेऽपि सत्त्वेन घटमात्रगतयावत्त्वादेः सर्व्वपदविशिष्टधर्म्मव्यापकत्वासम्भवेन तादृशरूपेण शक्तिर्न निर्व्वहतीति चेन्न। सर्व्वपदविशिष्टपर्य्याप्तिकधर्म्मस्यैव तत्र सर्व्वपदशक्यतावच्छेदकत्वात्। वैशिष्ट्यञ्च, स्वविशिष्टोद्देश्यतावत्त्वसम्बन्धेन। स्वं सर्व्वपदं। स्ववैशिष्ट्यञ्च, स्वघटितवाक्यप्रयोज्यत्वसम्बन्धेन। उद्देश्यतावैशिष्ट्यञ्च, स्वविशिष्टविषयतावद्धर्म्मावच्छिन्नभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्व, स्वविशिष्ट-विषयतावद्धर्म्मावच्छिन्न-व्यभिचारित्व सम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वोभयसम्बन्धेन। स्वद्वयमुद्देश्यत्वपरं। प्रथमस्ववैशिष्ट्यञ्च, स्वावच्छेदकत्वनिष्ठप्रकारतानिरूपितत्व, स्वप्रयोजकवाक्योच्चारकपुरुषीयबुद्धिनिरूपितत्वोभय-

गमः पूर्व्ववत् समाधेयः। उद्देश्यविधेयभावस्य न विशेष्यविशेषणभावनियतोऽतः सर्व्वेषु घटेषु रूपमित्यादावपि घटत्वादिरूपत्वाद्योरुद्देश्यविधेयतावच्छेदकभावोऽक्षत एवेति, न घटत्वादिव्यापकरूपत्वावच्छिन्न-व्याप्यपर्य्याप्तिकयावत्त्व-भानानुपपत्तिः। इत्यञ्च, व्युत्पत्तिरुद्देश्यवाचकपदसमानाधिकरणसर्व्वपदे विधेयवाचकपदसमानाधिकरण-

सम्बन्धेन। द्वितीयं वैशिष्ट्यञ्च, स्वनिरूपितविधेयतावच्छेदकत्वनिष्ठप्रकारतानिरूपितत्व, स्वप्रयोजक-वाक्योच्चारक-पुरुषीयबुद्धिनिरूपितत्वोभयसम्बन्धेन। एवञ्चैकैकसमुदाये एकैकसर्व्वपदवैशिष्ट्येनोद्देश्यताविधेयतयोर्निरूपितत्वलाभेन न पूर्व्वोक्तदोषः। भगवत्सङ्केतोऽपि सर्व्वपदवैशिष्ट्योपलक्षितपर्य्याप्तिकधर्म्मावच्छिन्नः सर्व्वपदाद्बोद्धव्यः इत्याकारकः। स्वप्रयोज्यत्वस्वविशिष्टपर्य्याप्तिक-धर्म्मावच्छिन्न-विषयकत्वो-भयसम्बन्धेन, सर्व्वपदवान् बोधो भवत्वित्याकारको वा बोध्यः। अत्र धर्म्मपदं, एकत्वावच्छिन्नपर्य्याप्तिकान्यकत्वे सति, द्वित्वावच्छिन्नानुयोगिताकपर्य्याप्तिकान्यधर्म्मपरं। तेन सर्व्वं गगनं द्रव्यं, सर्व्वौ गगनमहाकालौ द्रव्यमित्यादयो न प्रयोगाः। नन्वेवं, सर्व्वेषु घटेषु रूपमित्यत्र का गतिः। तत्र घटस्य प्रकारतयोद्देश्यत्वाभावात्, रूपस्यापि विशेष्यतया विधेयत्वासम्भवाच्च। घटत्वव्यापकरूपव्याप्यपर्य्याप्तिकयावत्त्वावच्छिन्नस्य बोधयितुमशक्यत्वादित्यत आह, उद्देश्यविधेयेति। उद्देश्य-

सर्व्वपदस्य च विधेयतावच्छेदकव्यापकोद्देश्यतावच्छेदकावच्छिन्नसम्बन्धव्याप्यपर्य्याप्तिकयावत्वमर्थः। अतः काले सर्व्वे वृत्तिमन्तः। कालः सर्व्वधर्म्मवानित्यादौ सर्व्वपदेन वृत्तिमत्त्वादिव्यापककालादिसम्बन्धव्याप्यपर्य्याप्तिकं यावत्त्वं प्रतीयते।

वाचकेति, तत्सामानाधिकरण्यञ्च, तदर्थेन समसमभेदान्वयित्वार्थकत्वं। विधेयतावच्छेदकव्यापकेति, तद्व्यापकत्वञ्च, तद्वन्निष्ठभेदप्रतियोगितानवच्छेदकत्वं, तद्वत्त्वञ्च, विधेयतावच्छेदकताघटकसम्बन्धेन, नातोवृत्तिमन्मात्रवृत्तिपर्य्याप्तः कालिकेन वृत्तिमत्त्वाधिकरणमहाकालनिष्ठभेदप्रतियोगितावच्छेदत्वेऽपि व्यापकत्वहानिः। न वा यत्किञ्चित् कालिकसम्बन्धेन महाकालान्य-पदार्थत्वाधिकरण-जन्यनिष्ठ-भेदप्रतियोगितानवच्छेदकतद्गतपर्य्याप्तिमादाय काले सर्व्वे महाकालातिरिक्तपदार्था इति प्रयोगप्रसङ्गः। उद्देश्यतावच्छेदकावच्छिन्नेति, तत्सम्बन्धश्च, उद्देश्यानुयोगिकविधेयतावच्छेदकसम्बन्धः। तद्व्याप्यत्वञ्च,प्रतियोगित्वाख्यस्वरूपसम्बन्धावच्छिन्नतदभाववदवृत्तित्वं। काले सर्व्वे वृत्तिमन्त इत्यादौ वृत्तिमति यथाविधेयत्वमनुभवसिद्धं, तथा कालिकादिविशेषसम्बन्धावच्छिन्नमपि तत्। न तु केवलं विधेयत्वं निरनुभवात्, अव्यावर्त्तकत्वाच्च। एवञ्च, कालानुयोगिककालिकविशेषणताप्रतियोगिनि गगनादौ वृत्तिमन्निष्ठपर्य्याप्तेरसत्वेन तद्व्याप्यत्वं। शाब्दबोधोऽपि वृत्तिमत्त्वव्यापककालानुयोगिकसम्बन्ध-

**अथवा स्वार्थान्वयितावच्छेदकधर्म्मव्यापकतादृश-**

व्याप्यपर्य्याप्तिक-यावत्त्वावच्छिन्ना-भिन्नावृत्तिमन्तः-काल-वृत्तय इत्याद्याकारक उह्यः। प्रतीयत इति, अन्यथैतत्काल-स्थापिकतिपयवृत्तिमद्विशिष्टत्वे नेदानीं सर्व्वे वृत्तिमन्तः, एतत्कालः सर्व्वधर्म्मवानित्यादि प्रतीत्यापत्तेरिति भावः। स्वार्थान्वयितावच्छेदकेति, अत्र सर्व्वपदं स्वपदार्थः। स्वार्था-न्वयितावच्छेदकत्वञ्च, स्ववृत्तिग्रहोजन्योपस्थितिप्रयोज्यस्वार्थ-निष्ठविषयतानिरूपितविषयतावच्छेदकत्वं। तदाश्रयधर्म्म-व्यापकत्वञ्च, तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वं। तद्व-त्वञ्च, स्वार्थान्वयितावच्छेदकताघटकसम्बन्धेन। व्यावृत्तिस्तु, पूर्व्वोक्तैव। तादृशधर्म्मावच्छिन्नान्वयितावच्छेदकत्वञ्च, स्वार्थ-निष्ठतादृशविषयता-निरूपित-विषयतानिरूपित-विषयावच्छे-दकत्वं, तद्धर्म्मव्याप्यत्वञ्च, व्यभिचारित्वसम्बन्धावच्छिन्नतदभाव-वत्त्वं। व्यभिचारश्च, स्वार्थान्वयितावच्छेदकावच्छिन्नान्वयिता-विशिष्ट-सम्बन्धावच्छिन्न-प्रतियोगिताकाभावघटितो बोध्यः। तादृशान्वयितावैशिष्ट्यञ्च, स्वावच्छेदकत्व, स्वावच्छिन्नविधेय-तावच्छेदकत्वान्यतरसम्बन्धेन। काले सर्व्वे वृत्तिमन्तः इत्यादौ सर्व्वपदार्थान्वय्यन्वयित्वरूपं यत्कालवृत्तित्वादिनिष्ठप्रकारत्वं, तदवच्छेदकस्वरूपादिसम्बन्धेन सर्व्वे घटा रूपवन्तः, सर्व्वेषु घटेषु रूपमित्यादौ च तादृशविधेयतावच्छेदकसम्बन्धेन व्याप्यत्वलाभार्थमन्यतरत्वेन सम्बन्धद्वयनिवेशः। मत्वर्थीयप्रत्य-यस्य नामार्थयोर्भेदेनान्वये तात्पर्य्यग्राहकत्वेन समवायेन रूप-प्रकारता विधेयतापि, अतो न तत्र स्वार्थान्वय्यन्वयित्वहानि-

धर्म्मावच्छिन्नान्वयितावच्छेदक-धर्म्मावच्छिन्नव्याप्य-पर्य्याप्तिधर्म्मावच्छिन्नः सर्व्वपदार्थ इत्युद्देश्यविधेय-भावं विशिष्यानिविश्य, सर्व्वसाधारणैकव्युत्पत्तिः स्वीक्रियते। अन्वयित्वञ्च, विशेष्यविशेषणसाधा-रणं। सर्व्वं प्रमेयमित्यादावस्त्वादिपदाध्याहार-मन्तरेण बोधोपगमे, तदनुरोधेनान्योन्याभावप्रति-योगितानवच्छेदकविधेयव्याप्यपर्य्याप्तिकयावत्त्वार्थ-

रिति। सर्व्वे घटा द्रव्यमित्यादौ तु तादात्म्येन द्रव्यस्यैव विधेयत्वेन तादात्म्येन व्याप्यत्वं बोध्यं। अत्रापि स्वार्था-न्वयितावच्छेदकत्वविषया स्वप्रतिपाद्यत्वेन या वक्तृबुद्धिस्तद्वि-षयधर्म्मव्यापकत्वे सति स्वार्थान्वय्यन्वयितावच्छेदकत्वविषया स्वप्रतिपाद्यत्वेन या वक्तृबुद्धिस्तद्विषयतावद्धर्म्मावच्छिन्नव्याप्या या पर्य्याप्तिस्तत्प्रतियोगिकयावत्त्वावच्छिन्ने सर्व्वपदस्य शक्ति-र्वाच्या, अतो न पूर्व्वोक्तदोषः। अनुगमकन्तु स्वविशिष्टविषय-तावत्त्व सम्बन्धेन सर्व्वपदवत्त्वं। विषयतायां वैशिष्ट्यञ्च, स्वज-न्योपस्थितिप्रयोज्यत्व, स्वार्थनिष्ठत्वोभयसम्बन्धेन। प्रथमसम्बन्ध-निवेशात् सर्व्वे घटा इत्यादिस्थलीयसर्व्वपदार्थं, सर्व्वपदस्यादाय न सर्व्वाणि द्रव्याणि रूपवन्तीत्यादिप्रयोगः। सर्व्वपदार्थघटक-पर्य्याप्तिविषयताया अपि सर्व्वपदजन्योपस्थितिप्रयोज्यतया तामादाय न सर्व्वाणि दधीनि द्रव्यवन्तीत्यादिप्रयोगाः। विष-यतावत्त्वञ्च, स्वनिरूपितविषयतावच्छेदकत्वनिष्ठस्वजन्यप्रति-पत्तीयविषयतावच्छेदकत्वनिष्ठविषयताकवक्तृबुद्धिविषयतावद्-

कतापि सर्व्वपदस्य स्वीकार्य्या। अयं सर्व्वं घटं वेत्तीत्यादौ एतदीयज्ञानविषयत्वत्वादिना विषयतानन्वयात्, तादृशधर्म्मो नान्वयितावच्छेदकः। अन्वयितावच्छेदकविषयत्वत्वाद्यवच्छिन्नव्याप्यत्वमतिप्रसञ्जकमिति। तत्रापि व्युत्पत्त्यन्तरं

व्यापकत्व, स्वनिरूपितविषयतानिरूपितविषयतावच्छेदकावच्छिन्नव्याप्यत्वोभयसम्बन्धेन। सङ्केतोऽप्युक्तसम्बन्धेन सर्व्वपदवत्पर्य्याप्तिकयावत्त्वावच्छिन्नबोधकं सर्व्वपदं भवत्वित्याकारको बोध्यः। न तु स्वजन्यत्व, स्वविशिष्टपर्य्याप्तिकयावत्त्वावच्छिन्नविषयकत्वोभयसम्बन्धेन बोधः सर्व्वपदवान् भवत्वित्याकारकः। तथा सति सर्व्वपदवत् पर्य्याप्तिकत्वरूपानुगतधर्म्मेण सङ्केतग्रहानुपपत्तेः। अस्तु वा कथञ्चित् तथेत्यलं पल्लवितेन। सर्व्वं प्रमेयमित्यादौ सर्व्वं वस्तु प्रमेयमिति, यदि वस्त्वादिपदमध्याह्रियते, तदा सर्व्वे घटा इत्यादि समशीलतया तत्स्थलीयव्युत्पत्त्यैवोपपत्तिर्भवेदत आह, अध्याहारमन्तरेणेति। अति प्रसञ्जकेति, यत्किञ्चिद् घटज्ञानदशायामपि सर्व्वं घटं वेत्तीत्यादिप्रयोगापत्तीत्यर्थः। व्युत्पत्त्यन्तरमिति, स्वार्थान्वयितावच्छेदकत्वेन वक्तृतात्पर्य्यविषयधर्म्मव्यापकत्वे सति, स्वोच्चारणप्रयोजकं यत्स्वघटितवाक्यजन्यस्वार्थान्वय्यन्वयिकर्म्मताकक्रियाकर्त्तृत्व-प्रकारकप्रतिपत्तीयतादृशविषयताश्रयत्वेन वक्तृतात्पर्य्यं। तदीयतादृशविषयताश्रय-कर्त्तृनिष्ठत्व-विशिष्ट-स्वार्थान्वय्यन्वयिकर्म्मताकक्रियाकर्म्मताख्याया या पर्य्याप्तिस्तत्-प्रतियोगिकयावत्त्वा-

स्वयमूहनीयं । अत न सर्व्वाणि रूपाणीत्यादौ नञर्थप्रतियोगिविशेषणार्थकसर्व्वपदस्य स्वार्थान्वयितावच्छेदक-रूपत्वादिव्यापक-पर्य्याप्तिनिरूपक-यावत्स्वार्थकतया तदवच्छिन्नाभाव एव प्रतीयते । व्यासज्यवृत्तिधर्म्मावच्छिन्नप्रतियोगिताकस्तादृशा-

वच्छिन्न गत्यन्तरमित्यर्थः । सर्व्वत्र स्वपदं, सर्व्वपदपरं । अनुगमकञ्च रूपं । सर्व्वपदवत्त्वं । वैशिष्ट्यञ्च, स्वार्थान्वयितावच्छेदकत्वेन वक्तृतात्पर्य्यविषयतावच्छिन्नभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नावच्छेदकताकभेदवत्त्व, स्वविशिष्टक्रिया-कर्म्मत्वव्याप्यत्वोभयसम्बन्धेन । क्रियायां स्ववैशिष्ट्यञ्च, स्वार्थनिष्ठविषयताक-विषयताक-प्रतिपत्तीय-कर्म्मत्वनिष्ठविषयताक विषयतावत्त्व, स्वजन्यप्रतिपत्तीयस्वार्थान्वय्यन्वयकर्म्मकक्रिया-कर्त्तृत्वनिष्ठविषयता-निष्ठत्वोच्चारण-प्रयोजकवक्तृतात्पर्य्यीयविषयताश्रयवृत्तित्ववत्त्वोभयसम्बन्धेनेति नव्याः । द्वितीयार्थकर्म्मत्वविषयतायामाधेयतासम्बन्धेन घटस्यान्वयेन पारम्पर्येण स्वाश्रयपर्य्याप्तिमद्वृत्तित्वसम्बन्धेन घटत्वस्यापि तत्रान्वयोऽभ्युपेयते । स्वाश्रयत्वञ्च, स्वसमानकालीनतत्पुरुषीयज्ञानविषयत्वव्याप्यत्वसम्बन्धेनातो नानुपपत्तिरिति कश्चित् । वस्तुतस्तु सर्व्वं घटं वेत्तीत्यादौ ज्ञानादौ तत्कालीन तत्पुरुषीयज्ञानविषयताप्रतियोगिकस्वरूपसम्बन्धेन घटकर्म्मत्वस्यान्वयोपगम आवश्यकः । अन्यथा ज्ञानत्वावच्छेदेन घटविषयित्वस्य बाधेन तदवच्छेदेनान्वयोपगमासम्भवात् । ज्ञानत्वसामाना-

भावो घटादावबाधित एवेति नायोग्यता। न चाव्यासज्यवृत्तिगुणत्वादिपर्य्याप्तेरपि रूपत्वादिव्यापकतया गुणत्वादिसाधारणरूपत्वादिव्यापकपर्य्याप्तिकधर्म्मावच्छिन्नाभावो न घटादाविति कथमत्र योग्यतेति वाच्यं, अव्यासज्यवृत्तिगुणत्वादेरेकैक-वृत्तिधर्म्मावच्छिन्नपर्य्याप्ति-कूटस्यैव सर्व्वाणि रूपाणि गुणा इति प्रतीत्याऽवगाहनात्, सर्व्वसाधारणैकपर्य्याप्तौ मानाभावात्। प्रत्येकवृत्तिधर्म्मावच्छिन्नपर्य्याप्तिषु रूपत्वादेर्निरुक्तव्यापकत्वाभावात्, सर्व्वं द्रव्यं न रूपवदित्यादौ द्रव्यत्वादिव्यापकयावत्त्वसामानाधिकरण्यमभावस्य प्रतीयते, ऽतो नायोग्यता। अनुयोगिविशेषणावच्छेदेनैव नञा अभावः प्रत्याय्यते। द्रव्यं

धिकरण्येनान्वयोपगमावश्यकत्वे तदानीमयं घटं न वेत्तीत्यादिप्रयोगापत्तेः। तदानीं पुरुषान्तरे घटज्ञानसत्त्वे न ज्ञानत्वावच्छेदेन घटविषयित्वाभावस्याप्यन्वयासम्भवात्। तथाच स्वार्थान्वय्यन्वयितावच्छेदकसंसर्गतावच्छेदकव्याप्यत्वं पर्य्याप्तौ, अनुगमकं वक्तृ तात्पर्य्यविषयत्वेन सम्भवज्ञानकमपि बोध्यं। सर्व्वं वेत्ति ईश्वर इत्यादौ वस्त्वादिपदाध्याहारं विना प्रतिपादकत्वे सामान्यतोऽन्योन्याभावप्रतियोगितानवच्छेदकत्वे सति ज्ञान-विषयत्वव्याप्यपर्य्याप्तिकयावत्त्वमपि प्रवृत्तिनिमित्तं सर्व्वं

न रूपवदित्यादिप्रयोगादर्शनादिति कथमेतदुप-
पद्यतामिति तु नाशङ्कनीयं । व्यासज्यवृत्तिधर्म्मा-
विशेषितानुयोगिकाभावबोधे तथा नियमोपग-
मात् । यत्तु स्वरूपसम्बन्धात्मकमभावानुयोगिता-
वच्छेदकत्वमनुयोगिविशेषणे नञपदजन्याभाव-
प्रतीत्या गृह्यते । द्रव्यत्वादौ न तादृशं रूपवद्-

पदस्यावश्यकमिति । नञसमभिव्याहारस्थले पूर्व्वोक्तव्युत्-
पत्त्याऽनिर्व्वाहात् व्युत्पत्त्यन्तरमाह, अत्र न सर्व्वाणीति ।
कथमत्र योग्यतेति । ननु रूपत्वव्यापकपर्य्याप्तिकत्वस्य रूप-
मात्रगततया यावत्वे सत्वेन तदवच्छिन्नाभावमादाय तादृश-
प्रतीत्युपपत्तौ कथमत्र योग्यतेति शङ्कनमयुक्तमिति वाच्यं,
वृत्तिमत्वव्यापकपदार्थगतयावत्वावच्छिन्नाभावमादाय काले न
सर्व्वे धर्म्मा इति प्रतीत्यापत्तिवारणाय, स्वार्थान्वयितावच्छेदक-
व्यापकयावत्त्वावच्छिन्नप्रतियोगिताकसामान्याभावस्य नञा
बोधावश्यकत्वेन तत्र तादृशसामान्याभावासत्त्वेन योग्यता-
विरहात् । पर्य्याप्तिकूटस्यैवे ति, तादृशपर्य्याप्तित्वेनेति शेषः ।
अवगाहनादिति, विधेयतावच्छेदकतात्मकसंसर्गतयेति भावः ।
निरुक्तेति, अन्योन्याभावघटितेत्यर्थः । अत इति, द्रव्यत्व-
व्यापकयावत्वसामानाधिकरण्यावगाहनादित्यर्थः । तद्व्यापकत्व-
घटितावच्छेद्यत्वावगाहनेत्वयोग्यता स्यादिति भावः । तथा
नियमोपगमादि, अनुयोगितावच्छेदकावच्छेद्यत्वावगाहननिय-
मोपगमादित्यर्थः । तादृशमिति, स्वरूपसम्बन्धरूपमतिप्रसक्त-

भेदाद्यनुयोगितावच्छेदकत्वमतो न द्रव्यं न रूपवदित्यादयः प्रयोगाः। व्यासज्यवृत्तिधर्म्मावच्छिन्नानुयोगिताकाभावाभ्युपगमेन च सर्व्वं द्रव्यं रूपवदित्यादि प्रयोगा उपपादनीयाः। न च व्याजज्यवृत्ति-धर्म्मावच्छिन्नानु-योगिताकाभावाभ्युपगमे कस्यापि रूपादेः सर्व्वघटादिपर्य्याप्तिर्नास्तीतिसर्व्वघटत्वाद्यवच्छिन्नेऽपि रूपादिमद्भेदसत्त्वेन सर्व्वे घटा न रूपवन्त इत्यादिप्रयोगापत्तिरिति वाच्यं, रूपादिपर्य्याप्तित्वेनानुगतपर्य्याप्तीनामनतिप्रशक्तेन घटादिनिष्ठयावत्त्वादिनाघवच्छेदात्, तदवच्छेदेन रूपादिमद्भेदवृत्तौ विरोधात्। द्रव्यत्वादिव्यापकयावत्वस्य चातिप्रसक्ततया रूपादिपर्य्याप्तित्वावच्छिन्नानामवच्छेदकतया तदवच्छेदेन रूपादिमद्भेदवृत्तावविरोधादिति, तदसत्। उक्तरीत्योपपत्तेः प्रतियोगितावच्छेदकादिमति तच्छून्यसाधारणव्यासज्यवृत्तिधर्म्माव-

त्वेन तदसम्भवादिति भावः। व्यासज्यवृत्तिधर्म्मस्याभावानुयोगितावच्छेदकत्वेऽतिप्रसक्तत्वं न बाधकं। सर्व्वं द्रव्यं न नित्यमित्यादिप्रयोगदर्शनादित्यत आह, व्यासज्यवृत्तीति। नास्तीति, तथाच घटनिष्ठयावत्वस्य रूपपर्य्याप्त्यनुयोगिता-

च्छेदे नान्योन्याभावादिवृत्तौ मानाभावात्। तादृशा-
भावोपगमे प्रतिवन्धकसमवहितेऽपि देशे व्यास-
ज्यवृत्तिधर्म्मावच्छिन्नानुयोगिताकप्रतिवन्धकाभाव-
बलात् कार्य्यापत्ते, स्तत्र कारणतावच्छेदक-
कोटौ विशेषणान्तरं प्रक्षिप्यापत्तिवारणे तु गौर-
वात्। अथ सर्व्वं द्रव्यं न रूपमित्यादौ द्रव्य-
त्वादिव्यापकपर्य्याप्तौ विधेयीभूतरूपवद्भेदव्याप्य-
त्वस्य वाधितत्वादयोग्यत्वं दुर्व्वारमेवेति चेन्न। तत्र

वच्छेदकत्वं न सम्भवतीति भावः। यत्तु मतं दूषयति, तद-
सदिति। उक्तरीत्येति, सर्व्वत्वसामानाधिकरण्यमात्रभानेनैवे-
त्यर्थः। प्रतिवन्धकसमवहिते, दाहादिप्रतिवन्धकमण्यादि-
विशिष्टे। व्यासज्यवृत्तीति, तदधिकरणतदनधिकरणगतयाव-
त्त्वावच्छेदनेति भावः। विशेषणान्तरं व्यासज्यवृत्तिधर्म्माव-
च्छिन्नानुयोगिताकत्वाभावादिरूपमित्यर्थः। गौरवादिति,
अतिरिक्ताभावकल्पनेन गुरुधर्म्मस्य कारणतावच्छेदकत्वेन
चेत्यर्थः। खण्डश इत्यादि, स्वार्थान्वयितावच्छेदकव्यापकत्वे
स्वार्थान्वयितावच्छेदकावच्छिन्नान्वयितावच्छेदकावच्छिन्नव्या-
प्यत्वे पर्य्याप्तिप्रतियोगियावत्त्वावच्छिन्ने पृथक्शक्तिस्वीकारे-
णेत्यर्थः। व्युत्पत्तिवैचित्र्याच्च, पृथक् शक्त्युपस्थापितस्य
स्वार्थन्वयितावत्च्छेदकव्यापकत्वस्य, तादृशव्याप्यत्वस्य च,
शक्यतावच्छेदकैकदेशेपर्य्याप्तावन्वय उपगम्यते। भावान्वयस्थले
च, शक्यत्रयस्यैव विशेष्यविशेषणभावेनान्वयबोधसामग्रीणां

विधेयव्याप्यत्वभानानुपगमात्। खण्डशो विभिन्नशक्त्युपगमेन क्वचित्तदंशपरित्यागे विरोधविरहात्। सर्व्वं गगनमित्यादिप्रयोगाभावात् यावत्त्ववदनेकत्वमपि सर्व्वपदार्थः। तच्च स्वार्थाभेदान्वयोद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगित्वमेव। भेदश्च सामानाधिकरण्यनिरूपकत्वोभयसम्बन्धेन प्रतियोगिताविशिष्टान्यो ग्राह्यः। नातो द्वित्वाद्यवच्छिन्नभेदमादायातिप्रसङ्गः। एतादृ-

परस्परं सहकारित्वोपगमात्, नैकं परित्यज्यापरस्य बोधो विधेयः। तथाच सर्व्वं द्रव्यं रूपवदित्यादयो न प्रयोगाः। नञर्थविधेयस्थले च स्वार्थान्वयितावच्छेदकधर्म्मावच्छिन्नव्याप्यत्वान्वयबोधेसामग्र्यपेक्षत्वं न कल्प्यते, अत एकं परित्यज्यापरान्वयबोधेऽपि न क्षतिः। सर्व्वपदार्थ इति, सर्व्वपदप्रवृत्तिनिमित्तमित्यर्थः। ननु गगने यावत्त्वस्यापर्य्याप्तत्वात् तादृशयावत्त्वावच्छिन्ने शक्त्यैव तादृशप्रयोगापत्तिविरहेण कुतः शक्त्यन्तरं कल्पनीयमिति चेन्न। घटादिगगनगतयावत्त्वमादाय तादृशप्रयोगापत्तेर्दुर्व्वारत्वात्। समुदायस्य प्रत्येकानतिरिक्तत्वेनैकस्यापि यावत्त्वाधिकरणत्वाच्च। ननु सर्व्वपदस्याशेषत्वावच्छिन्ने शक्त्यन्तरस्वीकारे तदर्थमादाय सर्व्वं द्रव्यं रूपवदित्यादिप्रयोगस्य स्वार्थान्वयितावच्छेदकेत्याद्युक्तशक्यार्थमादाय, सर्व्वं गगनं द्रव्यमित्यादिप्रयोगस्य चापत्तिर्दुर्व्वारैवेत्यत आह, एतादृशोभयेति। शक्तिरेकैवेति, पुष्पवन्तपदरीत्या

शोभयधर्म्मावच्छिन्ने शक्तिरेकैवातो नैकधर्म्मं परित्यज्यापरमादाय बोधः। कदाचिदपीति, न कतिपयानेकतात्पर्य्येणाशेषैकतात्पर्य्येण वा सर्व्वं नाम प्रयुज्यते। चैत्रो दधि भुङ्क्ते, मैत्रः पयो भुङ्क्ते, देवदत्तो घृतं भुङ्क्ते, विष्णुमित्रः सर्व्वमेवेत्यादौ सर्व्वपदेन प्रत्येकं दधिपयोघृतानां भोजनकर्म्मतया प्रतिपादनात्, यद्रूपावच्छिन्ने पदान्तरोपस्थाप्यार्थे स्वार्थान्वयः, तद्रूपावच्छिन्नान्विततया यद्धर्म्मा-

न्नेयः। शाब्दबोधोऽपि सर्व्वे घटा रूपवन्त इत्यादौ घटत्वव्यापकरूपव्याप्यपर्य्याप्तिकयावत्त्वावच्छिन्नघटत्वसमानाधिकरणप्रतियोगिताविशिष्टान्यभेदप्रतियोगित्वावच्छिन्नाभिन्ना घटा रूपवन्त इत्याद्याकारकः। सर्व्वपदस्य व्युत्पत्त्यन्तरमाह चैत्र इत्यादि। पदान्तरोपस्थाप्यार्थे इति, पदान्तरं भुज् पटादिकर्म्मतासम्बन्धेन प्रकृत्यर्थस्यान्वयवादिमते भुजादिधातुः। तदुपस्थाप्यार्थे कर्म्मत्वादौ स्वार्थान्वयः, स्वार्थान्वयितया वक्तृतात्पर्य्यविषयः। तथाच स्वार्थान्वयित्वया स्वघटितवाक्यजन्यप्रतिपत्तिविषयत्वेन वक्तृतात्पर्य्यविषयतावच्छेदको यो धर्म्म इति लाभः। सामान्यतोविषयतानिवेशात् चैत्रेण दधि, मैत्रेण दुग्धं, देवदत्तेन पयो भुज्यते, विष्णुमैत्रेण सर्व्वाणि इत्यादेरपि संग्रहः। चैत्रेण दधि मैत्रेण पयो भुज्यते विष्णुमैत्रः सर्व्वं भुङ्क्ते, इत्यादयस्तु न प्रमाणं। तद्रूपावच्छिन्नान्विततया तद्रूपावच्छिन्नविषयतानिरूपितविषयतया तृतीयार्थोऽभेदः।

वच्छिन्ना उपक्रान्ताः प्रत्येकं तावद्धर्म्मावच्छिन्नेषु सर्व्वपदस्य शक्त्यन्तरमङ्गीकार्य्यं, सुपक्रान्तैकधर्म्मावच्छिन्नान्वययोग्यताविरहे वाक्यस्याप्रामाण्यात्ताद्दशस्थले तथाविधसकलधर्म्माणामेवान्वयितावच्छेदकतया भाननियमः। तन्निर्व्वाहिका च तथाविधयावद्धर्म्मप्रकारकं बोधं जनयतु सर्व्वपदमित्याकारकसङ्केतरूपा विलक्षणशक्तिरेव।

तस्य चोपक्रान्तपदार्थैकदेशे विषयतायामन्वयः। एतच्चोपक्रान्तस्य चैत्रादेः सर्व्वपदस्य शक्यत्ववारणाय दत्तं। उपक्रान्ता इति, पूर्व्वकालोच्चरितवाक्यजन्यप्रतिपत्तिविषयेत्यर्थः। तथाविधयावद्धर्म्मेति। दधित्वप्रकारताकविशेष्यताकं पयस्त्वप्रकारताकविशेष्यताकं घृतत्वप्रकारताकविशेष्यताकं बोधमित्यर्थः। सङ्केते दधित्वप्रकारकताकविशेष्यत्वादेः "खलेकपोतन्यायेन" युगपद्भानं। तथाच दध्यादिविषयकसमूहालम्बनबोध एव सङ्केत विषयः। अतस्ताद्दशवाक्यजन्यबोधोऽपि समूहालम्बनरूपः। अतएवाग्रे वाक्यभेदकथनमपि सङ्गच्छते। विलक्षणेति, वैलक्षण्यञ्च, हर्य्यादिपदस्य नानाशक्तिमपेक्ष्य, ताद्दशनानाविशेष्यतानिष्टनानाप्रकारताकैकविशेष्यताशालित्वं। एवञ्च, विशेष्यताया ऐक्येन शक्तेरैक्यं।

ननु दधित्वादितत्तद्धर्म्मप्रकारकं बोधं जनयत्वित्याद्याकारकसङ्केतस्य शक्तित्वे, चैत्रो व्याकरणं, मैत्रः शिक्षां देवदत्तो वेदमधीते, विष्णुमित्रः सर्व्वमित्यादेरसंग्रहः। तत्रानुचितशक्त्य-

तादृशशक्तिज्ञाने नैकधर्म्मप्रकारकबोधजननेऽप-रापरतथाविधधर्म्मप्रकारकबोधसामग्र्याः पुष्प-वन्तपदशक्तिज्ञानेन चन्द्रत्वसूर्य्यत्वयोरेकतरप्रका-रकबोधजननेऽपरप्रकारकबोधसामग्र्या इव प्रयो-जकत्वोपगमात्। न च प्रक्रान्तानां दध्यादीनां प्रत्ये-कमन्वये वाक्यभेदापत्त्या साहित्यप्रकारेण तावत्-पदार्थवाचकत्वमेव सर्व्वपदस्य किन्नोपेयत इति वाच्यं, साहित्यविशिष्टान्वयस्य समभिव्याहृतपदार्थ

न्तरकल्पने शक्तिभेदापत्तेः। इष्टापत्तौ च यद्रूपावच्छिन्ने पदान्तरोपस्थाप्यार्थे इत्याद्यनुगतबोधकवाक्याभिधानस्यानु-चिततया वैयर्थ्यापत्तिरिति चेन्न। सर्व्वपदविशिष्टविषयताव-च्छेदकयावद्धर्म्मविशिष्टबोधं जनयत्वित्याकारक एव तात्-पर्य्यात्। विषयतायां सर्व्वपदवैशिष्ट्यञ्च, स्वार्थान्वयितया स्वजन्यप्रतिपत्तिविषयत्वेन वक्तृतात्पर्य्यविषयतावच्छेदकाव-च्छिन्नत्व, स्वोच्चारणप्रयोजकवाक्यजन्यबोधीयत्वोभयसम्बन्धेन। स्वपदं सर्व्वपदपरं। यावद्धर्म्मवैशिष्ट्यञ्च, स्वनिष्ठप्रकारताक-विशेष्यतासम्बन्धेन। चैत्रो दधि भुङ्क्ते इत्यादिवाक्यप्रयो-जकत्वस्यानुभवसिद्धत्वान्न तादृशसम्बन्धाप्रसिद्धिः। तादृश-यावत्त्वं शक्यतावच्छेदके उपलक्षणतया निविष्टमतो न तदंश-मन्तर्भाव्यशाब्दबोधः। प्रयोजकत्वोपगमादिति, यादृशधर्म्मा-वच्छिन्नत्यागाविबोधकपदसमभिव्याहारः सर्व्वपदे तत्र तद्धर्म्मा-वच्छिन्नबोधकसामग्र्या अपेक्षत्वं न कल्प्यते, अतो विष्णुमैत्रो-

यत्र वाधस्तत्रापि तथा प्रयोगात् । वाक्यभेदस्य गत्यन्तरविरहेणेष्टत्वात् । अतएव प्रत्येकं पुत्रपश्वादिरूपफलकामकर्त्तव्यतया, यज्ञक्रतूनभिधायाभिहितेन सर्व्वेभ्यो दर्शपौर्णमासावित्यनेन मिलितानां तावत्फलानां दर्शपौर्णमासकर्त्तव्यताप्रयोजककामनाविषयत्वं न प्रतिपाद्यते । प्रकृतवाचिना सर्व्वनामपदेन मिलितत्वेन फलानुपस्थानात् । अपि तु प्रत्येकमेवेति, प्रत्येककामस्यैव तत्राधिकार इति योगसिद्ध्यधिकरणसिद्धान्तोऽपि सङ्गच्छते ।

दधि विहाय सर्व्वमेवेत्यादौ नानुपपत्तिः । माहित्यं, धीविशेषविषयत्वं । अतिरिक्तपदार्थ इति मतविशेषः । गत्यन्तरविरहेति, न च धवखदिरपलाशांश्छिनत्तीत्यादौ धवकर्म्मकच्छेदनस्य खदिरादिकर्म्मकच्छेदस्य भिन्नत्वेनैकस्मिन् भेदे खदिरादिसमुदायकर्म्मत्वस्य वाधेनान्वयासम्भवात्, तत्तत्कर्म्मकच्छेदनकर्त्तृत्वस्य पृथकपृथगन्वयेन वाक्यभेदापत्तिमाशङ्क्य, छेदनत्वावच्छिन्ने प्रत्येककर्म्मत्वस्यान्वयेन तत्र प्रत्येककर्म्मत्वनिष्टप्रकारताकविशेष्यताया भेदेऽपि तादृशतादृशविशेष्यतावच्छेदकतानां परस्परावच्छेद्यावच्छेदकभावमङ्गीकृत्य, व्युत्पत्तिवादादौ स्वयं वाक्यभेदं परिजहार । तद्वदत्रापि भोजनत्वाद्यवच्छिन्ने दध्यादिकर्म्मत्वस्यान्वयेन, एकवाक्यत्वसम्भवे कुतो गत्यन्तरविरह इति वाच्यं, अत्र कथञ्चिदेकवाक्यतासम्भवेऽपि सर्व्वेभ्य इत्यत्रैकवाक्यत्वस्याङ्गीकर्त्तमशक्यत्वात् । तेन प्रत्येकं पश्वादि-

किम्पदस्य जिज्ञासिते शक्ति, एतएव स्वीयजिज्ञा-
साज्ञापनाय किंपदघटितं प्रश्नवाक्यं प्रयुज्यते।
तत्रोद्देश्यवाचककिंपदस्य स्वसमभिव्याहृतपदोप-
स्थाप्यतावच्छेदकधर्म्मावच्छिन्नविधेयतानिरूपितो-
द्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितो धर्म्मः प्रवृत्ति-
निमित्तं। उपस्थाप्यतावच्छेदकत्वान्तमुपलक्षण-
तयानुगमकं। शाब्दबोधे तदभानात्। एवञ्च, कः

कामनाविशिष्टकर्त्तृत्वस्यैव प्रतिपादनात्। यज्ञः सोमकः,
क्रतुरसोमक, अतो यज्ञक्रतूनिति। योगसिद्धग्रधिकरणेति,
सर्व्वेभ्य इत्यत्र ल्यप्लोपे पञ्चमी, निमित्तार्थकचतुर्थी वा।
तथाच सर्व्वान् पश्वादिचतुर्द्दशफलान्युद्दिश्य दर्शपौर्णमासौ यागौ
कुर्य्यादित्यर्थः। अत एकदैव पश्वादिसमुदायविषयककाम-
नया तादृशयागाद्यनुष्ठाने कथं न फलसिद्धिरिति संशये
सिद्धान्तसूत्रं योगसिद्धिर्व्वा अर्थस्योत्पत्त्ययोगादिति, वा
शब्दः सिद्धान्तसूचकः। अर्थस्य पश्वादिफलस्य। योगेन
प्रयोगभेदेन। सिद्धिरुत्पत्तिः। उत्पत्त्ययोगात्, उत्पत्तौ
सर्व्वेभ्य इति विधिवाक्ये। साहित्याभावादिति, साहित्या-
प्रतिपादनादिति यावत्। योगः साहित्यं। ननु सर्व्वेभ्य इति
विधिवाक्येन कामनाया फलान्तराविषयकत्वाप्रतिपादनात्,
कथं समुचितफलकामनया तादृशयागाचरणं न फलसाधक-
मिति चेन्न, पुत्रकामो दर्शपौर्णमासौ कुर्य्यादित्यादिवाक्येन
पुत्रकामनादिविशिष्टे तादृशयागकर्त्तर्य्यन्वयेन विशिष्टबोध-

पचतीत्यादितः पाककृतित्वावच्छिन्नविधेयता-निरूपितोद्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितो यो धर्म्मस्तद्वान् पचतीत्याकारकोऽन्वयबोधः । किञ्चि-द्धर्म्मावच्छिन्नोद्देश्यकपाककर्त्तृत्वविधेयकज्ञानं भव-त्वित्याकारकजिज्ञासाया स्ताद्दशबोधविषयकतया ताद्दशेच्छाविषयीभूतज्ञानजनकात् ब्राह्मणः पच-तीत्युत्तरवाक्यात्तन्निवृत्तिरिति ताद्दशप्रश्नानन्तरं स्वोत्तरं प्रयुज्यते । न चैवं प्रमेयः पचतीत्युत्तर-

मर्य्यादया ताद्दशकृतौ पारतन्त्र्येण पुत्रकामनाया जन्यत्वसम्ब-न्धेन पुत्रविषयकत्वस्य च स्वप्रयोज्यत्व, स्वेतराविषयत्वाप्रयोज्य-त्वोभयसम्बन्धेनान्वयोपगमात् । अन्यथा यागमात्रस्यैव नाना-विधफलकामनया आचरणे नानाविधफलजनकत्वापत्तेरित्यलं विस्तरेण ॥

इति सर्व्वशब्दशक्तिविचारटीका ॥

अतएवेति, जिज्ञासायाः किम्पदप्रवृत्तिनिमित्तत्वावच्छे-दकत्वादेवेत्यर्थः । स्वसमभिव्याहृतेति, स्वं किम्पदं । समभिव्या-हृतत्वं, स्वजन्यप्रतिपत्तिजनकत्वं । पदोपस्थाप्येति, पदो-पस्थाप्यत्वञ्च, पदप्रतिपाद्यत्वं । तेन पाककृतित्वावच्छिन्नस्य केनापि पदेनोपस्थित्यसम्भवेऽपि न क्षतिः । वच्छेदकत्वेनेति, अत्र तृतीयार्थो विषयत्वं । तस्य च निरूपितत्वसम्बन्धेन जिज्ञा-सित इत्यत्र सन्प्रत्ययार्थज्ञानकर्म्मत्वरूपविषयत्वेऽन्वयः । यस्य च शक्तौ शाब्दबोधीयप्रकारतया भानं, तस्यैव तत्र विशि-

वाक्यमेव न कथं तादृशप्रश्नानन्तरं प्रयुज्यते। तज्जन्यज्ञानस्यापि तादृशेच्छाविषयत्वादिति वाच्यं, जिज्ञासाविषयीभूतविधेयन्यूनवृत्तिधर्म्मावच्छिन्न एव तादृशकिंपदस्य शक्त्युपगमात्, अभेदेन स्वार्थान्वितोद्देश्यवाचकपदान्तरसमभिव्याहृतकिंपदशक्यतावच्छेदकगर्भे च स्वार्थाभेदान्वयितान्वयितावच्छेदकत्वोपलक्षितधर्म्मन्यूनवृत्तित्वमपि धर्म्मांशे विशेषणं देयं, अतः को ब्राह्मणः पचतीत्यादि प्रश्नानन्तरं चैत्रः पचतीत्याद्याकारकप्रश्नोत्तरवाक्यं

षणत्वं। शाब्दबोधेऽपि तस्यैव प्रकारतयावगाहनमित्यत आह, शाब्दबोध इति। अन्वयबोध इति, स्वविषयज्ञानीयपाककृतित्वावच्छिन्नविधेयताकोद्देश्यतावच्छेदकत्वविषयतानिरूपिताया वक्तृज्ञानेच्छीयविषयता तद्वत्त्वान् पाककृतिमानित्यन्वयबोध इत्यर्थः। न्यूनवृत्तीति, तत्त्वञ्च, विधेयसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति तत्सामानाधिकरण्यं, न तु तद्व्याप्यत्वं। तेन कः पचतीति प्रश्नानन्तरं श्यामो मनुष्यः पचतीत्युत्तरवाक्यमपि सङ्गच्छते। तादृशोत्तरवाक्यस्याप्रामाण्ये व्याप्यत्वमेवेति तदिति ध्येयं। तादृशकिम्पदस्येति, उद्देश्यवाचककिम्पदस्येत्यर्थः। न्यूनवृत्तित्वमपीति, अपिना स्वसमभिव्याहृतप्रतिपाद्यतावच्छेदकावच्छिन्नविधेयताकोद्देश्यतानिरूपिताभेदसम्बन्धावच्छिन्नावच्छेदकत्वेन वक्तृजिज्ञासितत्वं समुच्चीयते। तथाच स्वार्थाभेदान्वयितावच्छेदकत्वोपलक्षितधर्म्मन्यूनवृत्तित्वे

**प्रयुज्यते, न तु मनुष्यः पचतीत्यादिकं। मनुष्यत्वादे- र्ब्राह्मणत्वाद्यन्यूनवृत्तित्वात्, तदवच्छिन्नोद्देश्यक-**

सति तादृशावच्छेदकत्वेन जिज्ञासितो धर्म्मोऽभेदेन स्वार्थान्वितोद्देश्यवाचकपदान्तरसमभिव्याहृतकिम्पदस्य प्रवृत्तिनिमित्तं। जायते च को ब्राह्मणः पचतीत्यादिना पाककृतित्वावच्छिन्नविधेयताकोद्देश्यतानिरूपिताभेदसम्बन्धावच्छिन्नावच्छेदकत्वेन वक्तृजिज्ञासितो ब्राह्मणत्वन्यूनवृत्तिश्च यो धर्म्मस्तद्वदभिन्नो ब्राह्मणः पाककृतिमानित्याद्यन्वयबोधः। प्रयुज्यते च को ब्राह्मणः पचतीति वाक्यं ब्राह्मणत्वन्यूनवृत्तिकिञ्चिद्धर्म्मावच्छिन्नाभेदसम्बन्धावच्छिन्नावच्छेदकताकब्राह्मणत्वावच्छिन्नोद्देश्यतानिरूपितपाककृतित्वावच्छिन्नविधेयताशालिज्ञानं भवत्विच्छाज्ञापनाय। तत्रेति, तादृशवाक्य इत्यर्थः। सप्तम्यर्थो घटकत्वं, तस्य चोत्तरस्थकिमिति शब्देनान्वयः। तदन्वितावच्छेदकावच्छिन्ने किम्पदार्थान्वयितावच्छेदकावच्छिन्ने विशेषणतापन्नो यस्तदन्वयितावच्छेदकधर्म्मन्यूनवृत्तिधर्म्म इत्यन्वयः। बोध्यत इति, शक्यतावच्छेदकघटकतयेति भावः। तथाचाभेदेन स्वार्थान्वयितावच्छेदकधर्म्मन्यूनवृत्तित्वे सति स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकधर्म्माविच्छन्नविधेयताकोद्देश्यतानिरूपितस्वार्थान्वयितावच्छेदकावच्छिन्नावच्छेदकतानिरूपिताभेदसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकत्वेन वक्तृजिज्ञासितो धर्म्म, उद्देश्यतावच्छेदकेऽभेदेनान्वयिस्वार्थककिम्पदस्य शक्यतावच्छेदकं। कति घटा इत्यादि, एतद्दृशवृत्तितात्वावच्छिन्नविधेयताकोद्देश्यतानिरूपितपर्य्याप्तिसम्ब-

**त्वेन ज्ञानविषयकेच्छायास्तत्राप्रतीतेः । एवं यत्रो-**

न्धावच्छिन्नसंख्यात्वावच्छिन्नावच्छेदकतानिरूपिताभेदसम्बन्धा-
वच्छिन्नावच्छेदकतावच्छेदकत्वेन वक्तृजिज्ञासितधर्म्मवदभिन्न-
सङ्ख्यावन्तो घटा एतद्देशवृत्तय इत्यन्वयबोधस्तत्रेति यावत् ।
दशत्वसंख्यका इति, ननु डतिप्रत्ययस्य संख्यावाचकत्वे तस्या-
घटादौ पर्य्याप्तिसम्बन्धेन कति घटाः सन्तीत्यादिप्रश्नवाक्येन
जनितबोधे प्रकारतया भानमुपगन्तव्यं । दशत्वसंख्यका
इत्याद्युत्तरवाक्येन जनितबोधे च दशत्वसंख्याविशिष्टस्याभेदे
घटादौ भासते । एवञ्च, जिज्ञासाविषयज्ञानं न तादृशवाक्येन
जन्यत इति चेन्न,यतो दशत्वसंख्यका इत्याद्युत्तरवाक्यजज्ञाना-
नन्तरं मनसैव तादृशज्ञानजननात्तन्निवृत्तिः । अथवा डतिप्रत्य-
यस्य संख्याविशिष्ट एव शक्तिः । डतिप्रत्ययार्थसंखादावित्यत्रार्थ-
शब्दस्य च प्रवृत्तिनिमित्तपरत्वं,अतो नानुपपत्तिः । अतएव दश
घटाः सन्तीत्यादिवाक्यादपि तादृशजिज्ञासानिवृत्तिर्दृश्यते ।
अत्र दशसंख्यका इत्यपि पाठः क्वचित् । स च दशपदस्य दशत्व-
परतयोपपादनीय इति । यदवच्छिन्न इति, षष्ठ्याद्यर्थसम्ब-
न्धत्वाद्यवच्छिन्न इत्यर्थः । तदन्वयः किम्पदार्थान्वयः । तादृश-
सम्बन्धेनेत्यस्य विशेषितेत्यनेनान्वयः । विशेषेति, किम्पदार्था-
न्वय्यन्वय्यनुयोगिककिम्पदसमभिव्याहृतविभक्त्यर्थ सम्बन्धे प्रति-
योगित्वव्याप्यत्वं तत्त्वं प्रतीयत इति, गम्यतावच्छेदकघटक-
तयेति भावः । तथाच सुन्दरत्वावच्छिन्नविधेयताकपुत्रत्वा-
वच्छिन्नोद्देश्यतावच्छेदकतानिरूपितसम्बन्धत्वावच्छिन्नावच्छे-
दकताकनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकत्वेन

द्देश्यतावच्छेदके किंपदार्थस्याभेदेनान्वयस्तत्र तद्वक्तृजिज्ञासितपुत्रप्रतियोगिकसम्बन्धानुयोगित्वव्याप्यधर्म्मावच्छिन्ननिरूपितसम्बन्धवत्पुत्रः सुन्दराभिन्न इत्यन्वयबोधः। इच्छा च किञ्चिद्धर्म्मावच्छिन्नसम्बन्धवत् पुत्रत्वावच्छिन्नोद्देश्यताकसुन्दरत्वावच्छिन्नविधेयताशालि ज्ञानं भवत्वित्याकारिका। प्रवृत्तिनिमित्तत्वञ्च, उद्देश्यतावच्छेदकविभक्त्यर्थेन भेदान्वयिकिम्पदस्य स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकावच्छिन्नविधेयताकोद्देश्यतावच्छेदकताकभेदसम्बन्धावच्छिन्नावच्छेदकताकभेदसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकत्वेन वक्तृजिज्ञासितो यः स्वार्थान्वय्यनुयोगिकस्वसमभिव्याहृतविभक्त्यर्थसम्बन्धप्रतियोगित्वव्याप्यो धर्म्मः स इति। विशेषधर्म्म इति,अत्र विशेषत्वं, तादृशोद्देश्यताकविधेयतावच्छेदकत्वेन वक्तृज्ञानाविषयत्वं। तच्च प्रकरणादिना ज्ञायते। एवञ्चायं क इति प्रश्नस्य यदा इदन्त्वावच्छिन्ने प्राणित्वादिना विधेयस्य वक्तृज्ञानमस्ति, नतु मनुष्यत्वादिना इति प्रकरणादिना निर्णीयते, तदा अयं मनुष्य इत्याद्युत्तरं। यदा तु मनुष्यत्वेन ज्ञानमस्ति नतु ब्राह्मणत्वादिना तदा अयं ब्राह्मण इत्युत्तरं प्रयुज्यते। यत्तु स्वसमभिव्याहृतपदोपस्थाप्यताच्छेदकीभूतोद्देश्यतावच्छेदकन्यूनवृत्तित्वं विशेषत्वं। इदन्त्वस्य च ब्राह्मणभिन्नसाधारणतया सामान्यधर्म्मत्वञ्चेति कथनं। तत्तुच्छं, इदन्त्वस्याननुगतत्वात्। अन्यथेदन्त्वस्य कथञ्चिदनुगतत्वेन मनुष्यत्वादिसमशीलतया मनुष्यः क इति प्रश्नस्य मनुष्यो ब्राह्मण इत्याद्युत्तरञ्च प्रयुञ्जीत। पूर्व्वंवदूहनीय इति, इदं किं द्रव्यमित्यादौ

न्वयितावच्छेदकावच्छिन्ने विशेषणतापन्नतदन्वयितावच्छेदकधर्मन्यूनवृत्तिधर्मावच्छिन्नोद्देश्यतावच्छेदकताकप्रकृतज्ञानगोचरेच्छा। किं पदेन बोध्यते । अतः कति घटाः सन्तीत्यादौ डतिप्रत्ययार्थसंख्यादौ किं पदार्थस्य जिज्ञासितधर्मावच्छिन्नस्याभेदेनान्वयात्, संख्यात्वन्यूनवृत्तिदशत्वत्वाद्यवच्छिन्नोद्देश्यतावच्छेदकताकबोधजनकं दशत्वसंख्यका घटाः सन्तीत्याद्युत्तरं प्रयुज्यते । यत्र चोद्देश्यतावच्छेदकीभूतविभक्त्याद्यर्थे भेदेन किं पदार्थान्वयः कस्य पुत्रः सुन्दरः इत्यादौ तत्र यादृशसम्बन्धेन यदवच्छिन्ने तदन्वयस्तत्र तादृशसम्बन्धेन विशेषधर्मावच्छिन्नविशेषिततदवच्छिन्ननिष्ठोद्देश्यतावच्छेदकताकप्रकृतविधेयज्ञानगोचरेच्छा प्रतीयते । एवं विधेयवाचककिम्पदस्य स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतया जिज्ञासितो यो विशेषधर्म, स्तदवच्छिन्ने शक्तिः । अयं कः इत्यादाविदन्त्वावच्छिन्नांशे विधेयतावच्छेदकत्वेन जिज्ञासितधर्मावच्छिन्नवानित्याकारको बोधः। तेन तद्विषयजिज्ञासाविषयीभूतज्ञानजनकत्वाद्यं ब्राह्मण-

इत्याद्युत्तरवाक्यं तादृशप्रश्नानन्तरं प्रयुज्यते। एवं यत्र विधेये, विधेयतावच्छेदके वा किं पदार्थस्याभेदेन भेदेन वान्वयः, इदं द्रव्यं, किं धनं?, भवतः पुत्राः कति?,भवान् कस्य पुत्रः? इत्यादौ तत्र

विधेयवाचकपदसमानाधिकरणकिम्पदस्य स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितस्वार्थान्वयितावच्छेदकावच्छिन्नविधेयतानिरूपिताभेदसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकत्वेन वक्तृजिज्ञासितो विशेषस्वार्थान्वयितावच्छेदकव्याप्यधर्म्मः प्रवृत्तिनिमित्तं। प्रतिपत्तिश्चेदन्त्वावच्छिन्नविशेष्यताकद्रव्यत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नविधेयताकाभेदसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकत्वेन वक्तृजिज्ञासित-द्रव्यत्वव्याप्यधर्म्मवदभिन्नद्रव्याभिन्नमिदमित्याकारिका। तादृशजिज्ञासानन्तरञ्च, इदं पृथिवीद्रव्यमित्युत्तरञ्च, प्रयुज्यते। पदार्थविभाजकधर्म्मावच्छिन्नविशेषणबोधककिम्पदमुदाहृत्य, धनत्वादिविशेषधर्म्मावच्छिन्नविशेषणवाचककिम्पदमुदाहरति, किं धनमिति। अत्र पूर्व्वस्येदम्पदं योजनीयं। विधेयांशे विशेषणबोधकं किम्पदमुदाहृत्य विधेयतावच्छेदकांशेऽभेदसम्बन्धभेदसम्बन्धभेदेन विशेषणबोधकं किम्पदमुदाहरति, भवतः कतीत्यादि। अत्र स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकावच्छिन्नोद्देश्यताकस्वार्थान्वय्यन्वयितावच्छेदकावच्छिन्नविधेयतानिरूपितावच्छेदकतावच्छेदकत्वेन जिज्ञासितः स्वार्थान्वयितावच्छेदकन्यूनवृत्तिश्च यो धर्म्मः, तदवच्छिन्ने तादृश-

रीतिः पूर्ववदूहनीया । किमिन्दुः किं पद्ममित्यादौ चाव्ययकिमो वाशब्दस्येव वितर्कोऽर्थः । वितर्कश्च, प्रयोक्तुः सम्भावनात्मकज्ञानं । तदर्थस्य च विशेष्यतासम्बन्धेन प्रथमान्तपदोपस्थाप्ये विशेष्ये प्रका-

किम्पदस्य शक्तिरित्यादिरीत्या ज्ञेया सेत्यर्थः । किमिन्दुरित्यादि, किमिन्दुः ? किं पद्मं ? किमरविन्दं किमु मुखं ? किमब्जे ? किं मीनौ ? किमु मदनबाणौ ? किमु दृशौ । मगौ वा गुच्छौ वा कनककलसौ वा किमु कुचौ ? तड़िद्वा तारा वा कणकलतिका वा किमवलेति सम्पूर्णं । सम्भावनेति, सम्भावना चात्रैकधर्म्मिकविरुद्धकोटिद्वयावगाहिरूपसंशय एव । न तूत्कोटिकज्ञानं । अतएव काव्यप्रकाशादौ अयं मार्त्तण्डः किं स खलु तुरगैः सप्तभिरितः कृशानुः किं सर्व्वा इत्यादि सन्देहालङ्कारोदाहरणमपि सङ्गच्छते । संशयत्वञ्च, प्रकारताविशिष्टप्रकारताशालिज्ञानत्वं पर्य्यवसितं । प्रकारतावैशिष्ट्यञ्च, स्वतादात्म्य, स्वविशिष्टप्रकारताकाभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारताकविशेष्यतानिरूपितत्वोभयसम्बन्धेन । स्ववैशिष्ट्यञ्च, स्वावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नत्व, स्वावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन । भेदत्वञ्च, तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं । एवञ्च, इदमिन्दुर्न वेत्यादिसंशयस्यापि संग्रहः । प्रकारित्वावच्छिन्नप्रकारिताशालि ज्ञानत्वमिति केचित् । तदर्थस्येति, किम्पदार्थस्येत्यर्थः । विशेष्य इति, अध्याहृतेदम्पदार्थावित्यत्रेति, किम्पदार्थसम्भावनायामित्यर्थः । इदञ्चापाततः । वस्तुतस्तु, किम्पदार्थ-

रितासम्बन्धेन च तत्र विशेषणस्य चन्द्रादेर-न्वयः। नामार्थेनाव्ययार्थस्याभेदान्वयेऽविरोधात्। यत्र विशेषणवाचकपदमपि प्रथमान्तं, तत्राभेद-सम्बन्धावच्छिन्नप्रकारितासंसर्गः। यत्र च प्रकृ-त्यर्थविशेष्यतया स्वार्थबोधकविभक्त्यन्तं पदं, तत्र किंपदासत्त्वे तादृशविभक्त्यन्तसमुदायार्थस्य विशेष्ये याहृशसम्बन्धेनान्वय, स्तादृशसंसर्गावच्छिन्नप्रका-रितैव तादृशार्थस्य किं पदार्थे संसर्गः। अतः कि-मिन्दु रित्यादावभेदेन चन्द्रादिप्रकारिका। धन-मिदं किं चैत्रस्येत्यादौ आश्रयत्वादिसम्बन्धेन

तावच्छेदकतादृशप्रकारतायामेवाधेयत्वसम्बन्धेनेन्द्वादेरन्वयः। तेन पदार्थान्तरः संशय एव। यत्रेदमिन्दुरित्यारोपात्मकः,तादृश-ज्ञानमादाय न किमिन्दुरित्यादिप्रयोगः। अविरोधादिति, तथाच,अव्ययातिरिक्तनामार्थयोरेव भेदान्वयो न स्वीक्रियत इति भावः। अत्र नव्याः, अत्राव्ययपदं निपातपरं, तेन स्वराद्यव्यय-स्याभेदान्वय एव किंशब्दस्य चादिगणान्तर्गतत्वेन निपात-त्वादिति प्राहुः। ननु किम्पदार्थसम्भावनायां प्रकारितासम्ब-न्धेन इन्द्वादेरन्वये किम्पदार्थसम्भावनायाश्च इदम्पदार्थ-मुखादौ विशेष्यतासम्बन्धेनान्वये च स्वीकृते इन्दुपदेदम्पदार्थयोः सामानाधिकरण्यासम्भवेन इदं जलं किं नादेयमित्यादौ जलं किं नादेयं एते घटाः किं नील इत्यादिरिव प्रयोगः स्यात्।

चैवस्त्वादिप्रकारिकासम्भावना नियमतः प्रतीयते। किमिन्दुरित्यादौ सम्भावनाबोधोत्तरं तत्प्रयोजकाह्लादकत्वादिसाधर्म्यप्रतीतिस्त्वर्थादिति। कुत्सार्थकमपि क्वचित् किं पदं, यथा किं गौरि-

समानाधिकरणयोरेव विशेष्यविशेषणवाचकपदयोः समानलिङ्गवचनकत्वनियमादिति चेन्न, समानाधिकरणविशेषणविशेष्यबोधकपदयोः समानलिङ्गवचनकत्वनियमवत् प्रकारितासम्बन्धेन यदर्थस्य किम्पदार्थादिसम्भावनायामन्वयस्तस्यास्वविशेष्यतासम्बन्धेन यदर्थेऽन्वयः तादृशपदयोरपि, असति वाधके समानवचनलिङ्गकत्वकल्पनात्। न च व्युत्पत्तिकल्पनमपसिद्धान्ततया हेयमिति, लोहितवह्निं जानातीत्यादौ एतत्तुल्यव्युत्पत्तेः स्वयमेव कल्पितत्वात्। एवं किमिन्दुरित्यादौ प्रकारितासम्बन्धेन इन्द्वादिविशिष्टसम्भावनायाः विशेष्यता सम्बन्धेन मुखादावन्वयबलात् पारतन्त्र्येण स्वनिरूपितप्रकारित्वावच्छिन्नविशेषणताकत्वसम्बन्धेनेन्द्वादेर्मुखादावन्वयात्। अयमिन्दुर्न वा मुखञ्च सुन्दरं नवेति समूहालम्बनसंशयमादाय मुखे इदं किमिन्दुरिति न प्रयोगः। ननु प्रकारितासम्बन्धेन इन्द्वादेः सम्भावनायामन्वयोपगमे इदं संयोगादिसम्बन्धेनेन्दुमन्न वेत्यादिसंशयस्यापि किम्पदेन बोधः स्यात्। इष्टापत्तौ च, तादृशबोधानन्तरं मुखादाविन्द्वादिसाधर्म्याप्रत्ययेन तादृशवाक्यस्य काव्यत्वहानिः आलङ्कारिकमते तु व्यञ्जनया तत्प्रतीतिरिति ध्येयं। कुत्सार्थकमपीति, प्रवृत्तिनिमित्ततयेति भावः। कुत्सितार्थकमिति

स्यादित्यतस्तादृशसंशयव्यावृत्तय आह, यत्र विशेषणेति, र्थशा-दितीति, तादृशबोधानन्तरं सम्वलितमानससामग्रा इत्यर्थः। तु यावत्। अन्यथा, किं राजा इत्यादौ कर्म्मधारयसमासानुपपत्तिः स्यात्। किं गौरिति, कुत्सितत्वञ्च, प्रकृष्टहलवहनयोग्यत्वविरहादीति। एवं नमस्तस्मै कस्मै चिदमितेत्यत्र, कोऽपि गोपतनय इत्यत्र, दधत्यन्तस्तत्वं किमपीत्यादौ च किम्पदस्यानिर्व्वचनीयविशेषधर्म्मके शक्तिर्व्वाच्या। तथाच कस्मैचित्यादेरनिर्व्वनीयविशेषधर्म्मावच्छिन्नायेत्यर्थः। विशेषत्वञ्च, तत्तन्मात्रवृत्तित्वं। अनिर्व्वनीयत्वं शब्दानिर्द्देश्यत्वं। अतस्तादृशधर्म्मस्य योगजमात्रजन्यप्रत्यक्षविषयत्वेऽपि न क्षतिः। "कश्चित् कान्ताविरहगुरुणेत्यादौ," "कोऽपि ब्राह्मणो वर्त्तते" इत्यादौ चोभयावृत्तिधर्म्मावच्छिन्ने शक्तिरपि किम्पदस्य वाच्या। उभयावृत्तित्वञ्च, स्वप्रतियोगिवृत्तित्व, स्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यत्वरूपोऽनुगतधर्म्मः प्रवृत्तिनिमित्ततावच्छेदकं। एवञ्च "पार्थान्यः कः शूर" इत्यादौ, "कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायां, नस्यादन्योऽप्यहमिव जनो यः पराधीनवृत्ति"रित्यादौ च शूरादिपदस्य, उपपूर्व्वेक्षादिधातोश्च विरोधसम्बन्धेन शूरादिभिन्ने,उपेक्षाद्यभावे च लक्षणा। कल्प्यते च, तादृशकिम्पदघटितवाक्यस्यावच्छेदावच्छेदेनान्वयोपयोगित्वं। तथाच पार्थान्याभिन्नोभयावृत्तिधर्म्मावच्छिन्नः शूरभिन्न इत्याद्याकारकः। पराधीनवृत्तिकजनभिन्नोभयावृत्तिधर्म्मावच्छिन्नो जायाकर्म्मकोपेक्षाभावाश्रय इत्याद्याकारकश्च बोधः। अपिशब्दसमभिव्याहृतकिम्पदस्थले च न विरुद्धे लक्षणा, नवाऽवच्छेदावच्छेदेनान्वयोपयोगित्वञ्च कल्प्यते।

कल्पते च सामानाधिकरण्ये नैवातस्त्वदन्यः कोऽपि ददाती-त्यादौ त्वद्भिन्नः कश्चिज्जनो दानकर्त्तृत्ववानित्याकारकतादृश-जनत्वसामानाधिकरण्येन। एवञ्च, सामानाधिकरण्येन तद्विरहनिश्चयदशायामपि तादृशबोधो जायत एव। केचित्तु, पार्थान्यः कः शूर इत्यादावन्योन्याभावप्रतियोगितानवच्छेदक-पर्य्याप्तिकयावत्त्वावच्छिन्नकिम्पदस्य शक्तिं कल्पयित्वा, पार्थ-भिन्नान्योन्याभावप्रतियोगितानवच्छेदकपर्य्याप्तिकयावत्त्वाव-च्छिन्नः शूरभिन्न इत्याद्यन्वयबोधं कल्पयन्ति। इत्यास्तां विस्तरः॥ किं गौरिति, कुत्सितो गौरित्यर्थः। कुत्सितत्वञ्च, हलवहनयोग्यत्वविरहादि।

इति किम्पदशक्तिविचारविवृतिः।



त्यादौ तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्ने यत्पदस्य शक्तिः। अतएव यत्पदेनार्थप्रत्यायने नियमस्तत्पदापेक्षा, तत्पदसमभिव्याहारज्ञानं विना, उक्तानुगमधर्म्मग्रहेण शक्तिपरिच्छेदस्यैवासम्भवात्। तच्छब्दजन्यप्रतिपत्तिपूर्व्वमपि तत्प्रतिपाद्यतया वक्तुरभिसन्धिः प्रकरणादिना सुग्रह इति न। तच्छब्दजन्यप्रतीतेर्यत्पदशक्तिग्रहेऽपेक्षा। इयञ्च व्युत्पत्तिः प्रक्रम्यमानपरामर्शकयच्छब्दस्य। चैत्रः समागतो यस्त्वयावलोकित इत्यादौ चैत्रादिपदेना-

वक्तृबुद्धीति, घटस्तत्पदजन्यबोधीयविषयतावान् भवत्वित्याद्याकारकतात्पर्य्यजनकं यत् तत्पदजन्यबोधीयविषयतावान् घटो मदिष्टसाधनमित्यादिवक्तृज्ञानं। तदीयतत्पदजन्यबोधीयविषयत्वनिष्टप्रकारताकविशेष्यतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्न इत्यर्थः। शक्तिपरिच्छेदस्यैव, शक्तिग्रहस्यैव। वक्तुरभिसन्धिरिति, वक्तृबुद्धिरित्यर्थः। ननु तत्पदजन्यप्रतिपत्तिश्च तत्पदघटितवाक्यजन्या। तत्पदघटितवाक्यञ्च, यत्पदघटितमतो यत्पदस्य शक्तग्रहे तत्पदजन्यप्रतीत्यसम्भवेन तादृशप्रतीतिघटितानुगमकधर्म्मज्ञानं कुतः परस्परसापेक्षत्वेनान्योन्याश्रयश्चेत्यत आह, प्रकारणादिनेति। प्रक्रम्यमानेति, पूर्व्वपदानुपस्थापितवक्तृबुद्धिविषयपरामर्शकत्वं

प्युपस्थापितस्यापि तस्य यच्छब्देन बोधनात्। अत-एव 'साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभि-रामताधिके इत्यादौ तत्पदासत्त्वेऽपि न दोषः। पूर्व्वप्रक्रान्तस्य कृतपदोपस्थाप्यव्यापारस्यैवाभेदेन मिलनान्वयितया, यच्छब्देन बोधनात्। एवं यं सर्व्वशैला इत्यादावपि तदनुरोधेन पूर्व्वप्रयुक्तपदो-

बोधनादिति, तथा च चैत्रस्तद्देशाधिकरणातीतदर्शनविषय इति पृथगन्वयबोधः। साधुचन्द्रमसीति, साधुचन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके। उद्यता जयिनिकामिनी-मुखे तेन साहसमनुष्ठितं पुनः इति तु सम्पूर्णं, अस्यार्थः। अभिरामताधिके चन्द्रमसि सति, पुष्करैः पद्मैः, कृतमाचरणं साधु सम्यक्। तत्किमित्यत आह, यत् मीलितं तादृशाचरणं मीलनमिति। जयिनि कामिनीमुखे सति, उद्यता उद्गच्छता तेन चन्द्रेण, अनुष्ठितमाचरणं। अर्थात् उद्गमनरूपं साहसं सहसा कृतं, नतु विवेचनया। तथाच तदनुचितं न साधु इति पर्य्यवसितं। कृतपदोपस्थाप्येति, एवञ्च व्यापाराभिन्नं मीलन-मित्यन्वयबोधः। यत्तु कृष्णभट्टेन, साधुकरणाभिन्नं मीलन-मित्यन्वयबोध उक्तं, तत्तुच्छं। कृतपदोपस्थाप्य व्यापारस्यैवेत्य-स्यासङ्गत्यापत्तेः। व्यापारमात्रप्रतिपादनेन चरितार्थत्वाच्चेति। यं सर्व्वशैला इति, यं हिमालयनामकं पर्व्वतमित्यर्थः। तदनुरोधेनेति, तच्छब्दं विनापि यच्छब्देन चैत्रव्यापारादि-बोधानुरोधेनेत्यर्थः। पूर्व्वप्रयुक्तेति, श्लोकोच्चारकपुरुषकर्त्तृक-

पस्थापितेऽपि तस्य शक्त्यन्तरं स्वीकरणीयं। अति-
प्रसङ्गश्च, स्वप्रयोजकबुद्धिस्थत्वमन्तर्भाव्यैव वार-

पूर्व्वकालोच्चरितेत्यर्थः। ननु यथा हिमालयः प्रक्रान्तस्तथा
तोयनिधिरपि कुतस्तस्यापि यं सर्व्वशैला इत्यादौ यत्पदेन
न बोध इत्यत आह, अतिप्रसङ्गश्चेति। स्वप्रयोजकबुद्धिविष-
यतावच्छेदकत्वे सति, पूर्व्वपदजन्योपस्थितिविषयतावच्छेदको
यो धर्म्मस्तदवच्छिन्नेऽपि यत्पदस्य शक्तिरिति। स च धर्म्मो
यो ब्राह्मणायावगुरेत् तं शतेन घातयेदित्यादावुभयावृत्तित्वेन
तत्तद्व्यक्तित्वादिः। एवं यो यो धूमवान् स वह्निमानित्यादौ
महानसत्व महानसान्यत्वादिः। स च प्रकरणादिनैव ज्ञायते।
अतएव कार्त्तिक्यादौ यन्न दानं तदनन्तविनिन्दितमित्यत्र
यत्पदार्थस्याभेदेन दानाभावेऽन्वय इति जगदीशेनोक्तं। तत्र
यत्पदार्थस्योभयावृत्तिधर्म्मावच्छिन्न एव इति भावः। तथाच
तोयनिधेः प्रक्रान्तत्वेऽपि न बुद्धिस्थत्वं, अतो न तत्र यत्पदेन
तस्य बोधः। केवलतद्विषयकबुद्ध्या यच्छब्दप्रयोगे तेन न तस्य
बोधः। अतः प्रक्रान्तत्वमपि उपलक्षणतया प्रवेशितं। सङ्के-
तश्च, स्वविशिष्टधर्म्मावच्छिन्नविषयकत्व, स्वजन्यत्वोभयसम्ब-
न्धेन यत्पदविशिष्टबोधो भवत्वित्याकारकः। स्वपदं, यच्छब्द-
परं। सत्त्वस्य संसर्गपरिचायकतया नानुगमः। स्ववैशिष्ट्यञ्च,
स्वोच्चारकपुरुषकर्त्तृकपूर्व्वोच्चरितपदजन्यबोधीयविषयतावच्छेद-
कत्व, स्वप्रयोजकबुद्धिविषयतावच्छेदकत्वोभयसम्बन्धेन, तादृश-
सङ्केतोयत्पदनिष्ठप्रकारतानिरूपितधर्म्मनिष्ठसांसर्गिकविष -

णीयः। एवं यत्पदोपस्थाप्ये तत्पदशक्तिर्बोध्या। अतएव प्रक्रम्यमानवाचकतच्छब्देनापि नियमतो यत्पदमपेक्षते। तमानय,य इहास्ति इत्यादाविव, तमानय घट इहास्तीत्यादितो घटानयनादिप्रतीते- रनुभवविरुद्धत्वात्। प्रक्रान्तपरामर्शकस्य च न तदपेक्षानियमः। तदन्वये शुद्धिमतीत्यादौ, वैवस्व- तादिपदोपस्थाप्यस्यापि तच्छब्देन परामर्शात्तदनु- रोधेन च तच्छब्दस्यापि पूर्ववत् पूर्वप्रयुक्तपदोप- स्थापिते शक्त्यन्तरमङ्गीकार्य्यं, सुपस्थितिश्च स्ववि- शेष्यकवृत्तिज्ञानाधीना ग्राह्या। अतः पशुरस्ति तं पश्येत्यादौ पश्वादिपदोपस्थाप्य तत्तल्लोमादीनां तदा- दिशब्देन न परामर्शः। प्रसिद्धार्थकमपि तत्पदं,

यताकविषयताप्रकारकं ज्ञानं हेतुरिति ध्येयं। यत्पदोप- स्थाप्य इति, यत्पदजन्योपस्थितिविषयत्वेन वक्तृबुद्धिविषय- तावच्छेदकावच्छिन्ने इत्यर्थः। तदन्वय इति, तदन्वये शुद्धि- मति प्रसूतः शुद्धिमत्तरः। दिलीप इति राजेन्दुरिन्दुःक्षीरनिधा- विव इति समस्तं। वैवस्वतादिपदोपस्थाप्यस्येति, तत्- पूर्वप्रयुक्तवैवस्वतो नाम मनुरित्याद्यन्तर्गत वैवस्वतपदोपस्था- प्यस्येत्यर्थः। पूर्वप्रयुक्तेति,अत्राप्यतिप्रसङ्गभङ्गाय वक्तृबुद्धिस्थ- त्वमपि देयं। स्वविशेष्यकेति, स्वं शक्यत्वेनाभिमतं। पश्वादि- पदोपस्थाप्येति, लोमादिमान् पशुपदशक्य इत्यादिशक्तिज्ञा-

**यथा "कला च सा कान्तिमतीत्यादौ, इदमेतदोः प्रत्यक्षबुद्धिविषये, ऽदसश्च परोक्षविषये शक्तिः । स्वशब्दस्य समभिव्याहृतपदोपस्थाप्ये शक्तिः । सम-**

नोपस्थाप्येत्यर्थः । तथाच तादृशज्ञाने शक्तौ लोमादिमानेव विशिष्यः, नतु लोम, अतो न तस्य तच्छब्देन परामर्शः । "पटोल-पत्रं पित्तघ्नं नाड़ी तस्य कफापहा" इत्यादौ, "दर्शिते राज-मातङ्गास्तस्यैवामो तुरङ्गमा" इत्यादौ च, तस्येति तच्छब्देन पटोलराजादिपरामर्शकत्वन्तु तत्पुरुषघटकपटोलादिपदस्य तत्सम्बन्धिनि लक्षणामङ्गीकर्त्तृमते सुलभं। तदङ्गीकर्त्तृमतेऽपि पटोलादेर्लक्ष्यतावच्छेदकत्वेऽपि पटोलादिपदं पत्रादिसम्बन्धिनि पटोले शक्तं पटोलपदमित्याकारकलक्षणाज्ञानस्य पटोलविशे-ष्यकतया नानुपपन्नमिति तु विवेचनीयं । प्रसिद्धार्थकमपीति, प्रसिद्धत्वं बहुतरजनज्ञानविषयत्वं । कलाच सेति, द्वयं गतं सम्प्रति शोचनीयतां, समागमप्रार्थनया पिनाकिनः । कला च सा कान्तिमती कलावतः, त्वमस्य लोकस्य च नेत्रकौमुदी । इति तु श्लोकः । पिनाकिनो महादेवस्य, समागमप्रार्थनया प्राप्तिकामनया, त्वं, कलावतश्चन्द्रस्य, सा प्रसिद्धा कला च, द्वयमुभयं, सम्प्रति शोचनीयतामाक्षेपनीयतां, गतं प्राप्तं । कला तु मात्रपूर्व्वं सम्प्रति द्वयमिति भावः । छद्मवेशिनः शिवस्य स्वापकृष्टत्वप्रकाशार्थं भगवतीं प्रत्युक्तिरियं । एवं ते लोचने प्रतिदिशं विधुवेक्षिपन्तीत्यादौ अतीतानुभवविषयेऽनुभूतार्थे-ऽपि तच्छब्दस्य शक्तिर्वाच्या । तथाच तेऽनुभूते लोचने इति तदर्थः । यच्छब्दवत् अव्ययमपि तच्छब्दो हेत्वर्थकं । यत्तदत-

भिव्याहृतत्वन्तु एकवाक्यघटकत्वं। अथैवं चैतः

स्तौ हेताविति कोषात्। प्रत्यक्षबुद्धिविषय इति, वक्तृप्रत्यक्ष-ज्ञाननिरूपितलौकिकविषयतावतीत्यर्थः। तेनातीन्द्रियस्य गगनादेरलौकिकप्रत्यक्षविषयत्वेऽपि इदं गगनं, एतन्मन इत्यादयो न प्रयोगाः। नन्वेवमिदं द्व्यणुकं नित्यमणुत्वादित्यादौ ऽतीन्द्रिये द्व्यणुके इदम्पदं दीधितिकृता प्रयुक्तं, तत्कथं सङ्गच्छते? इति चेन्न। तत्तद्व्यक्तित्वावच्छिन्नेऽपि इदमेतदोः शक्त्यन्तरस्वीकारात्। ननु तत्तद्व्यक्तित्वस्य प्रतिव्यक्तिभिन्नतया तदवच्छिन्ने शक्तिकल्पने शक्त्यानन्त्यप्रसङ्गः, अपूर्व्वभानानुपपत्तिश्चेति वाच्यं, भेदविशिष्टान्यत्वरूपोभयाद्यत्त्वस्यैवानुगमकत्वात्। अथ घटादिनिष्ठतत्तद्व्यक्तित्वं नातिरिक्तपदार्थो, मानाभावात्। किन्तु तादात्म्येन घटादिव्यक्तिरेव। तथाच जात्यतिरिक्तस्य स्वरूपतो भानासम्भवेन कुतस्तत्र स्वरूपतः शक्तिरिति चेन्न। जात्यखण्डोपाध्यतिरिक्तपदार्थस्यापि स्वरूपतो भानाङ्गीकारात्। तदनङ्गीकारे तु अतिरिक्तमेव तत्तद्व्यक्तित्वमिति। एतदेव श्रेयोऽन्यथा, अयं घट एतत्वादित्यादावेतत्पदार्थतावच्छेदकस्यैतत्त्वस्य घटादेर्हेतुत्वे तस्य स्वरूपतो हेतुत्वासम्भवि स्यात्, स्याच्च घटत्वेन हेतुत्वे पक्षमात्रवृत्तित्वाभावेनामाधारणोदाहरणासङ्गतिरिति। सोऽयं देवदत्त इत्ययं जानातीत्यादिप्रत्यभिज्ञा बोधकवाक्ये तत्पदं अनुभूतार्थकं। इदम्पदञ्च, प्रत्यक्षविषयपरं। तथाचानुभूताभिन्नप्रत्यक्षविषयाभिन्नो देवदत्त इत्याकारकज्ञानवानिति तज्जन्यबोधः। परोक्षेति, लौकिकप्रत्यक्षभिन्नज्ञानविषये ऽदःशब्दस्य शक्तिरित्यर्थः।

स्वपुत्रं पश्यतीत्यादाविव स्वं चैत्रपुत्रः पश्यति चैत्र-भ्राता सुन्दरश्चैत्र भ्राता वा स्वपुत्रं पश्यतीत्यादौ न कथं स्वशब्देन चैत्रः प्रत्याय्यते, मुख्यविशेष्यवाचकताव्युत्पत्त्यभ्युपगमे स्वपुत्रदर्शिनं चैत्रं मैत्रः पश्यतीत्यादौ चैत्रपुत्रबोधानुपपत्तिः। न चावान्तर-

तथाच, यदासौ विरतप्रपञ्च कल्लोलकोलाहल इत्यादौ परमेश्वरस्य लौकिकप्रत्यक्षाविषयत्वेऽपि, अलौलिकप्रत्यक्ष-विषयत्वमादाय असावित्यादिना तस्य बोधः। वस्तुतस्तु, क्रमादमुं नारद इत्यबोधि सः। दधतिपरममीशाय का निष्प-तस्त इत्यादयो लौकिकप्रत्यक्षविषयेऽपि भूरितरप्रयोगदर्शनात्,अतिसन्निकृष्टनिष्ठलौकिकविषयताभिन्नप्रत्यक्षीयविषयता विशिष्टेऽदसः शक्तिर्व्वाच्या। परोक्षपदं, तादृशविषयताशालि प्रत्यक्षपरं। अतएव मिश्रैर्व्यवहितप्रत्यक्षविषयेऽदसः शक्ति-रित्युक्तं। शाब्दिकैरपि, अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयादिति गीतं। सन्निकृष्टत्वन्तु वक्तृनिरूपितं। नारदादेः किञ्चिद्दूरस्थत्वेन न तादृशविषयत्वानुपपत्तिरित्यलं पल्लवितेन। एकवाक्यघटकत्वमिति, स्वप्रयोज्यविषयतानिरूपितविषयता-प्रयोजकत्वमिति पर्य्यवसितार्थः। एवमिति, स्वशब्दस्य तादृश-पदोपस्थाप्ये शक्यत्वे इत्यर्थः। स्वं चैत्रपुत्र इत्यत्रासमस्त-स्वपदे आपत्तिं दर्शयित्वा, समस्तस्वशब्दे आपत्तिं दर्शयति, चैत्रभ्राता वेति। चैत्रः प्रत्याय्यत इति, इदन्तु, तत्पुरुषे लक्षणानङ्गीकर्त्तृमते बोध्यं। अन्यथा, चैत्रपुत्र इत्यादौ चैत्रपदेन

वाक्यार्थबोधे चैत्रस्य मुख्यविशेष्यतया नेयमनुपपत्ति-
रिति वाच्यमन्तरा अवान्तरवाक्यार्थबोधमन्तरेणा-
हत्यैव विशेष्ये विशेषणमिति रीत्या महावाक्यार्थ-
बोधे यत्र तात्पर्य्यं, तत्रैव तदनुपपत्तेर्दुर्व्वारत्वात्।

चैत्रसम्बन्धिन एवोपस्थापनात् चैत्र इत्यस्यासङ्गतिः स्यात्।
मुख्यविशेष्येति, स्वघटितवाक्यजन्यबोधीयमुख्यविशेष्यतावच्छे-
दकावच्छिन्नवाचकतास्वीकारे इत्यर्थः। तथाच चैत्रपुत्र इत्यादौ
चैत्रादेर्मुख्यविशेषणत्वाभावान्न तस्य बोध इति भावः। चैत्र-
पुत्रेति, स्वपुत्रेति वाक्येनेति शेषः। तत्र मैत्रस्यैव मुख्यविशे-
षणतया भानादिति, मुख्यविशेषणतयेति, नन्ववान्तरवाक्यस्य,
स्वपुत्रदर्शिनं चैत्रमित्यन्तं। तेन च द्वितीयार्थकर्म्मत्वमुख्य-
विशेष्यस्वपुत्रदर्शिचैत्रप्रकारक एव बोधो जायते। संख्या-
कालातिरिक्तविभक्त्यर्थस्य प्रकृत्यर्थविशेषणतया भाननियमात्।
तथाच चैत्रे मुख्यविशेषणत्वविरहेण कुतः स्वपदेन तस्य बोध इति
चेन्न। सुवर्थकर्म्मत्वादिकं प्रकृत्यर्थविशेषणतयैव भासत इति
प्राचीनमतमवलम्ब्यैवोक्तत्वात्। ते तु ग्रामं गच्छतीत्यादौ
गमनाद्यर्थे कर्म्मतापन्नग्रामादेः कर्म्मतासम्बन्धेनान्वयं वदन्ति।
लिखितञ्चैतत् स्वयमेव नञ्वादटीकायां। यत्तु, अवान्तर-
वाक्ये कर्म्मत्वाद्यविवक्षणेन एकत्वप्रकारकतादृशमुख्यविशेष्यक-
बोधसम्भव इत्यभिप्रायेण तदुक्तमिति। तदसत्, अवान्तरवाक्य-
जन्यबोधे कर्म्मत्वाभाने महावाक्यजन्यबोधे तद्भानानुपपत्तेः।
महावाक्यार्थबोधोपपत्तय एवावान्तरवाक्यार्थबोधकल्पनाच्चेति।
आहत्यैवेति, महावाक्यघटक प्रत्येकपदजन्य प्रत्येकपदार्थोप-

न च स्वार्थस्य साक्षात् परम्परया वा यदर्थे विशेष-णत्वं तादृशार्थवाचकताव्युत्पत्तेर्नायं दोष इति वाच्यं, एवमपि स्वपुत्रश्चैत्रेण दृश्यते इत्यादौ चैत्र-पुत्रबोधानुपपत्तेः । स्वसमभिव्याहृतक्रियान्वयिवाच-

स्त्वित्यव्यवहितोत्तरमेवेत्यर्थः । विशेष्ये विशेषणेति, शाब्दबोधो हि द्विविधः, विशिष्टवैशिष्ट्यावगाही, उपलक्षितावगाही च । तत्र विशिष्टवैशिष्ट्यावगाहिज्ञानं प्रति विशेषणतावच्छेदक-प्रकारेण विशेषणज्ञानस्य हेतुतया, तत्सम्पादनार्थं महा-वाक्यघटकखण्डवाक्यजन्यबोध आवश्यकः । उपलक्षिताव-गाहिज्ञाने च विशेषणज्ञानस्यानावश्यकतया महावाक्यघटक-प्रत्येकपदार्था उपस्थिताः, "खले कपोतन्यायेन" एकं विशेषणं अपरञ्च विशेष्यमिति रीत्या, युगपद्भासन्ते । तत्र कुत्र कस्य-चिद्विशेषणत्वं, कस्यचिद्विशेष्यत्वमिति नियमस्तु आकाङ्क्षा-ज्ञानादेवोपपद्यते इति भावः । कुत्रचिद्विशिष्टवैशिष्ट्याव-गाहि, कुत्रचिदुपलक्षितावगाहि ज्ञानमित्यत्र तात्पर्य्यस्य नियामकतया आह यत्र तात्पर्य्यमिति । विशेषणत्वमिति, विशेषणतया वक्त्रभिप्रेतत्वं । तथाच स्वार्थनिष्ठप्रकारताक विशेष्यतावच्छेदकत्वेन वक्त्रभिप्रायविषयतावद्धर्मावच्छिन्ने-स्वशब्दस्य शक्तिरिति तु पर्य्यवसितार्थः । नायं दोष इतीति, स्वं चैत्रपुत्रः पश्यतीत्यादौ स्वपदार्थे चैत्रपुत्रादेर्विशेष्यतया स्वपुत्रदर्शनमित्यादौ च स्वार्थे चैत्रादेर्विशेष्यतया च स्वपदेन तस्य तस्य बोध इति भावः । क्रियान्वयीति, तत्त्वञ्च, क्रिया-निष्ठविषयता निरूपितविषयतावत्त्वं, साक्षादन्वयित्वेति, तच्च

कत्वमपि न विचारं सहते। परम्परया क्रियान्वयि-
त्वस्य चैत्रभ्राता स्वं पश्यतीत्यादौ चैत्रादिसाधार-
णत्वात् साक्षात्क्रियान्वयित्वस्य चैत्रः स्वं पश्यती-
त्यादावप्यभावात् तत्र विभक्त्यर्थद्वारैव नामार्थ-
धात्वर्थयोर्भेदान्वयस्य व्युत्पन्नत्वात्, क्रियान्वयि
प्रत्ययार्थे साक्षादन्वयित्वविवक्षणा न्न दोष इति
चेदेवमपि, स्वव्यापकवह्निसमानाधिकरणधूमवान्

न प्रत्ययार्थविषयता निरूपित विषयता निरूपितविषयता-
शून्यत्वे सति प्रत्ययार्थनिष्ठविषयता निरूपितविषयतावत्त्वं
वाच्यं, तथा सति, स्वपुत्रदर्शिनं चैत्रं मैत्र इत्यादौ दृशधातूत्तरे
न प्रत्ययार्थकर्त्तृनिष्ठविषयता निरूपित चैत्रपदोत्तरद्वितीयार्थ-
विषयता निरूपितविषयतायास्तत्त्वे सत्त्वेन तादृशविषयता-
शून्यत्वविरहात्, तद्दोषानुपपत्तेः। न च इन्प्रत्ययार्थनिष्ठ-
विषयता निरूपितत्वं चैत्रनिष्ठविषयतायामेव, नतु कर्म्मत्व-
निष्ठविषतायां स्वीक्रियते व्यवहितत्वादिति वाच्यं, तथा सति
परम्पराक्रियान्वयित्वस्य दुर्व्वचतया पूर्व्वग्रन्थासङ्गतेः। साक्षा-
दित्यस्य कथनासङ्गतेश्च। न च साक्षान्निरूपितत्वं परम्परा-
निरूपितत्वञ्चातिरिक्तमेवेति वाच्यं,मानाभावादितिचेत्,सत्यं।
स्वनिरूपितनिरूपकत्व,स्वनिरूपकनिरूपितत्वान्यतराभाववत्त्वे
सति, स्वनिरूपकत्व, स्वनिरूपितत्वान्यतरवत्त्वं तत्। विशेष्य-
तादौ प्रकारतादिनिरूपितत्वमेव, नतु तन्निरूपकत्वं। प्रका-
रतादावपि विशेष्यतादिनिरूपकत्वमेव, नतु तन्निरूपितत्वं।

पर्व्वत इत्यादौ स्वशब्देन धूमादिपरामर्शानुपपत्ति-
वारणमशक्यमेव। एवं चैत्रेणानीतं स्वपुत्रं मैत्रः
पश्यतीत्यादौ चैत्रपुत्रबोधापत्तिवारणमपि। न च
स्वपदार्थो यदर्थघटितविशेषणस्य विशेष्यतावच्छे-
दककोटौ यदर्थस्य विशेषणकोटौ वा निविशते, स
एव पदार्थः स्वशब्दवाच्यः। चैत्रपुत्रः स्वं पश्यतीत्यादौ

अन्यथा बहुतरासामञ्जस्यापत्तेः। एवञ्च नानुपपत्तिलेशो-
ऽपीति धेयं। धूमादिपरामर्शेति, तत्र धूमे क्रियान्वयिप्रत्ययार्थे
साक्षादन्वयित्वविरहादिति। ननु समानाधिकरणेति बहु-
ब्रीहिघटक ल्युट्प्रत्ययस्य लक्षणयाऽधिकरणसम्बन्धित्वात्तणिक-
तया तादृशसम्बन्धिनोऽभेदेन धूमादावन्वयेन क्रियान्वयिप्रत्ययार्थे
साक्षादन्वयित्वस्य तत्र सत्वेन नानुपपत्तिरित्यतो दोषान्तर-
माह चैत्रेणानीतमिति। चैत्रपुत्रेति, आनयनक्रियान्वयि-
तृतीयार्थकर्त्तृत्वे साक्षादन्वयित्वस्य चैत्रे सत्त्वादिति भावः।
यदर्थघटितेति, विशेषणस्येत्यत्र षष्ठ्यर्थः प्रकारताकत्वं, तस्य
चोत्तरवर्त्तिविशेष्यतायामन्वयः। कोटावित्यनन्तरं निविशत इति
योजनीयं। तथाच स्वार्थनिष्ठावच्छेदकताकविशेष्यतानिरूपित-
प्रकारतावच्छेदकत्वेन वक्तृभिप्रेते स्वशब्दस्य एका शक्तिरिति।
स्वार्थनिष्ठप्रकारताकविशेष्यत्वेन वक्तृभिप्रेते चापरा शक्तिरिति।
चैत्रेण स्वपुत्रो दृश्यत इत्यत्र, चैत्रः स्वपुत्रं पश्यतीत्यत्र, स्वव्यापक-
वह्निसमानाधिकरणधूमवानित्यादौ च, स्वशब्देन चैत्रधूमादे-
र्बोधापत्तिः। अतिप्रसङ्गवारणं दर्शयति, चैत्रपुत्र इत्यादि। न

चैत्रस्य भ्राता स्वपुत्रं पश्यतीत्यादौ च स्वपदार्थ-स्यैत्रस्य विशेषणकोटौ चैत्रघटितार्थस्य धर्म्मितावच्छेदककोटौ वा न निविशत इति नातिप्रसङ्गः। चैत्रावलोकितं स्वपुत्रं मैत्रः पश्यतीत्यादौ चैत्रपदस्य चैत्रकर्तृके लक्षणया चैत्रः पदार्थैकदेशो, नतु पदार्थ इति स्वशब्दान्न तत्प्रतीतिः। चैत्रेणावलोकितमित्यादौ तु तात्पर्य्यसत्वे इष्यत एव। ततस्तत्प्रतीतिः स्वपुत्रदर्शि चैत्रधनमित्यादौ चैत्रपुत्रदर्शि चैत्रसम्बन्धित्वाद्यवच्छिन्नो चैत्रान्तस्य वाक्ये लक्षणाविरहे पूर्व्वभागं परित्यज्य तादृशलक्ष्यार्थपरताकस्य केवलचैत्रादिपदस्यैव वा तत्र लक्षणया तत एव चैत्रपुत्रादिप्रतीत्युपपत्तिरिति वाच्यं,एवं सति, चैत्रस्य भ्राता स्वपुत्रो दृश्यते इत्यादौ स्वपदेन चैत्रप्रतीत्यापत्तेर्दुर्व्वारत्वात्। मैवं साक्षात् परम्परया वा यः स्वार्थस्य विशेष्यः, यस्य समभिव्याहृतक्रियाकारक-

तत्प्रतीतिरिति,न चैत्रप्रतीतिरित्यर्थः,चैत्रकर्तृकस्य त्वयोग्यत्वान्नप्रतीतिरिति भावः। ननु तत्पुरुषे तत्तद्विभक्त्यर्थविशिष्टे प्रकृतिपदं यदि लाक्षणिकं तदा स्वपुत्रदर्शि, चैत्रधनमित्यादौ कुतः स्वपदेन चैत्रादेर्बोधः। तत्र चैत्रादिपदानां चैत्रसम्बन्ध्यादौ लाक्षणिकत्वादित्यत आह, स्वपुत्रेति। चैत्रान्तस्येति, शाब्दिकमता-

पदार्थस्तदुभय एव स्वपदस्य शक्तिः। स्वव्यापकवह्नि-

भिप्रायेण सिद्धान्तमारभते, मैवमिति। मतुपो भेदसम्बन्धे-
नान्वयतात्पर्य्यग्राहकत्वं, नतु सम्बन्ध्यर्थकत्वमिति मते तादा-
त्म्येन शुक्लरूपवान् घट इत्यादौ स्वपदार्थे साक्षाद्विशेष्यस्य घटस्य
बोधाय साक्षादिति। स्वव्यापकवह्निसमानाधिकरणो धूमः,
स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिका सिद्धिरित्यादौ च,
स्वपदेन धूमसिद्ध्यादेर्बोधनार्थं परम्परयेति। चैत्रः स्वं पश्यति
चैत्रेण स्वपुत्रो दृश्यते इत्यादौ, चैत्रमभिवन्दति स्वपुत्र इत्यादौ
स्वपदेन चैत्रादिबोधार्थं समभिव्याहृतक्रियेति। चैत्रभ्राता
स्वपुत्रं पश्यति, चैत्रभ्राता स्वपुत्रो दृश्यते इत्यादौ चैत्रस्य तु
पदार्थस्य विशेष्यत्वाभावेन समभिव्याहृतक्रियाकारकपदार्थत्वा-
भावेन च, न स्वपदेन बोधः। क्रियाकारकत्वञ्च, क्रियान्वित-
विभक्त्यर्थान्वयित्वं, तच्च चैत्रभ्रातर्य्येवेति बोध्यं। ननु स्व-
व्यापकवह्निसमानाधिकरणधूमवानित्यादौ वह्न्यादेरपि स्व-
पदार्थस्य परम्परया विशेष्यतया तस्य कुतो न बोधः। एवं देव-
दत्ताय स्वपुत्रं ददाति, मैत्रदेवदत्ते स्वपुत्रं पश्यति मैत्र इत्यादौ
देवदत्तादेः समभिव्याहृतक्रियाकारकपदार्थतया स्वपदेन तस्य
बोधप्रसङ्ग इति। न च स्वार्थस्य यश्चरमविशेष्यः, यश्च सम-
भिव्याहृतक्रियाकर्त्तृकारकस्तया च स्वव्यापकत्यादौ धूमादि-
रेव चरमविशेष्यः, चैत्र एव च कर्त्तृकारकोऽतो न वह्निदेव-
दत्तादेर्बोध इति वाच्यं, तथा सति स्वव्यापकवह्निसमानाधि-
करणधूमवान् पर्व्वत इत्यादौ स्वव्यापकवह्निसामानाधिकरण्यं
धर्मोऽस्तीत्यत्र धूमस्य बोधानुपपत्तेरिति चेन्न। स्वपदजन्य-

**सामानाधिकरण्यं धूम इत्यादावस्तीति क्रियाध्या-हारात् स्वपदार्थस्य समभिव्याहृतक्रियाकारकत्व-मक्षतमेवेति न स्वपदात्तत्प्रतीत्यनुपपत्तिः। एवं कलसे निजहेतुदण्डजः किमु चक्रभ्रमकारिता गुणः**

बोधत्वेन वक्तृतात्पर्य्यविषयत्वे सति तादृशविशेष्यो यः, यश्च तादृशकारकस्तदुभय एव स्वपदस्य शक्तत्वेन वह्निदेवदत्तादौ तादृशतात्पर्य्यविषयत्वाभावात्। अथैवं सति तादृशवक्तृतात्-पर्य्यविषय एव शक्तिकल्पनेनातिप्रसङ्गवारणसम्भवे विशिष्यत्वादि-निवेशस्य वैयर्थ्यमिति चेन्न। चैत्रभ्राता स्वपुत्रं पश्यति, चैत्रस्य गेहे मैत्रः स्वपुत्रं पश्यतीत्यादौ स्वपदस्य चैत्रादौ वक्तृतात्पर्य्य-विषयत्वसत्वेऽपि चैत्रादेर्बोधविरहात्। स्वव्यापको वह्निरित्यत्रेव यदा स्वव्यापकवह्निसमानाधिकरणो धूम इत्यादावपि स्व-पदस्य वह्नौ तात्पर्य्यमस्ति, नतु व्याप्तौ तदा वह्निबोध इष्ट एवेति ध्येयं। कलस इत्यादि, शेषार्द्धन्तु "स तदुच्चकुचौ भवन् प्रभाभरचक्रभ्रमिमातनोति यदिति। निजस्य स्वस्य हेतु-र्निमित्तकारणं यो दण्डस्तज्जन्यः चक्रभ्रमणकारित्वं गुणो धर्म्मः कलसे कार्य्यरूपे किमु अस्तीत्यन्वयः। तस्य च तादृशा-स्तित्वेन तादृशधर्म्मः सम्भाव्यत इत्यर्थः। कारणगुणः कार्य्य-गुणमारभत इति न्यायात्। ननु तादृशधर्म्मो दमयन्त्याः स्तन-वृत्तित्वमेव सम्भाव्यते नतु कलसवृत्तित्वं इत्यतस्तदुपपादयति स इति। सः कलसस्तस्या दमयन्त्या उच्चकुचौ उन्नतस्तनौ भवन्, प्रभाभरे कान्तिप्रवाहे चक्रस्य चक्रवाकस्य भ्रमिं भ्रान्ति-मातनोति यत् यस्मादित्यर्थः। अथवा यदिति, आतनोतीति

इत्यादावपि क्रियाध्याहारात् स्वपर्य्यायनिजपदात् कलसादिप्रतीतिः। स्वव्यापकवह्निसामानाधिकरण्यं धूमस्येत्यादयश्च न प्रयोगाः। इदन्तु चिन्त्यते, यद्रूपेण समभिव्याहृतपदादुपस्थितिस्तद्रूपावच्छिन्नस्य स्वपदार्थत्वे एकेन ब्राह्मणेन ब्राह्मणान्तरपुत्रदर्शनदशायां ब्राह्मणः स्वपुत्रं न पश्यतीत्यादिप्रयोगानुपपत्तिरन्वयितावच्छेदकावच्छिन्नाभावस्य विशेष्ये वाधात्। समभिव्याहृतपदार्थनिष्ठतत्तद्व्यक्तित्वावच्छिन्नस्य तदर्थत्वेऽपि वह्निकालीनद्रव्य-

क्रियाविशेषणं, तथाच तादृशक्रियैव निजहेतुदण्डजचक्रभ्रमिकारितागुणत्वेन सम्भाव्यत इति। अन्वयितावच्छेदकेति, स्वपदेन ब्राह्मणत्वेन ब्राह्मणस्योपस्थित्या ब्राह्मणपुत्रकर्म्मकदर्शनाश्रयतात्वावच्छिन्नाभावस्य, विशेष्ये कर्त्तरि ब्राह्मणे। समभिव्याहृतेति, समभिव्याहृतपदजन्योपस्थितिप्रकारवृत्त्युभयावृत्तित्वरूपसामान्यधर्म्मोपलक्षित तत्तद्व्यक्तित्वावच्छिन्नस्येत्यर्थः। एवञ्च तत्तद्व्यक्तित्वभेदेन न शक्त्यनन्त्यं, न वा अपूर्व्वव्यक्तिभानानुपपत्तिः। स्वपुत्रमित्यत्र स्वपदेन तात्पर्य्यवशात् तत्तद्दर्शनकर्त्तृब्राह्मणव्यक्तिपुत्रकर्म्मक दर्शनकर्त्तृत्वाभावस्य ब्राह्मणेसत्वेन नार्थान्वयतेति भावः। प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वमत्वसूचनाय वह्निकालीनेति। तत्तद्व्यक्तित्वावच्छिन्नाभावकूट एवेति, इदञ्च तात्पर्य्यसत्त्वे सकृदुच्चरितशब्दस्यापि

वति ह्रदादौ स्वव्यापकवह्निकालीनद्रव्यं नास्तीति प्रयोगानुपपत्तिः। तत्र द्रव्यपदस्यापि लक्षणया तत्तद्व्यक्तित्वावच्छिन्नपरत्वे महानसादावपि तथा-प्रयोगापत्तिस्तथाविधयत्किञ्चिद्व्यक्त्यभावस्य तत्रा-बाधात्, तादृशसमभिव्याहृतस्थले यद्व्यक्तिव्यापकता वह्नेस्तत्तद्व्यक्तित्वावच्छिन्नाभावकूट एव नियतः प्रतीयते इति चेन्न। तथाविधसकलव्यक्तिनिष्ठ-तत्तद्व्यक्तित्वानां युगसहस्रेणापि ज्ञातुमशक्य-त्वात्। कदाचित् कस्यचित् कस्यचिज्ज्ञान-सम्भवेऽपि कतिपयतत्तद्व्यक्तित्वमात्रोपस्थितिदशायां कतिपयाभावमात्रगोचरप्रतीतेरप्यङ्गीकार्य्यतया, तादृशनियमस्य सुदूरपराहतत्वादिति। अत्र

अनेकार्थगमकतामङ्गीकृत्यैव, अन्यथा सकृदुच्चरितद्रव्यपदेना-नन्ततत्तद्व्यक्तित्वावच्छिन्नानां कथमपि बोधासम्भवात्। अङ्गी-कार्य्यतयेति, असर्व्वज्ञपुरुषीयतादृशवाक्यस्य प्रामाण्यान्यथानुप-पत्त्येति भावः। स्वेनादृश्यमानपुत्रस्यान्यकर्त्तृकदर्शनकाले स्वपुत्रं पश्यतीति वारणाय आश्रयत्वेति प्रथमसम्बन्धः। स्व-निरूपकेति, स्वं तिङर्थाश्रयत्वादि। चैत्रेण स्वपुत्रो दृश्यते इत्यादौ आख्यातार्थविषयत्वस्याश्रयत्वस्वनिरूपकदर्शनकर्त्तृजन्य-त्वोभयसम्बन्धेन पुत्रादावन्वयः। चैत्रः स्वधनं पश्यतीत्यादौ त्वाश्रयत्व, स्वनिरूपकदर्शनविषयधनस्वामित्वोभयसम्बन्धेना-

केचित् ब्राह्मणः स्वपुत्रं पश्यतीत्यादौ स्वपदं ब्राह्मणत्वावच्छिन्नार्थकमेव। विशेष्यीभूतब्राह्मणत्वाद्यवच्छिन्ने च स्वपदार्थघटितस्य ब्राह्मणपुत्रदर्शनकर्त्तृत्वादिरूपविशेषणस्य न केवलत्वाश्रयत्वादिसम्बन्धेनान्वयः। अपित्वाश्रयत्वनिरूपकदर्शनविषयपुत्रजनकत्वोभयसम्बन्धेनैव। एवञ्च तत्र नञा तादृशोभयसम्बन्धावच्छिन्नतदभाव एव प्रत्याय्यतेऽतो नोक्तदोष इति वदन्ति। एकशब्दस्य कैवल्यादि-

न्वयः। स्वव्यापकवह्निकालीनद्रव्यवान् पर्व्वत इत्यादौ तु स्वपदं तत्तद्वह्निव्यक्तिपरं। तादृशद्रव्यस्य पर्व्वतादौ संयोगः, स्वांशे परम्परया विशेषणवह्निनिष्ठव्यापकतानिरूपकतत्तद्व्यक्त्यनुयोगिकसंयोगश्चेतदुभयसम्बन्धेन तत्तद्व्यक्तिप्रतियोगिसंयोगेन वान्वयः। अतो ह्रदस्तादृशद्रव्यवान् तादृशोभयसम्बन्धावच्छिन्नत्वस्य ह्रदवृत्तित्वे विरहेण ह्रदे तादृशद्रव्यमित्यादयो न प्रयोगाः। अपि तु ह्रदे तादृशद्रव्यं नास्तीत्यादय एव। केचित्तु स्वव्यापकवह्निकालीनस्य तादात्म्यं स्वांशे विशेषणवह्निनिष्ठव्यापकतानिरूपकतादात्म्यञ्चेतदुभयसम्बन्धेन द्रव्येऽन्वयात्, न तादृशापत्त्यनुपपत्ती इत्याहुः। वदन्तीति, अस्वरससूचनाय। तद्बीजञ्च, ब्राह्मणः स्वपुत्रं पश्यतीत्यादौ स्वपदस्य ब्राह्मणत्वाद्यवच्छिन्नस्य यस्य ब्राह्मणस्य पुत्रोऽप्रसिद्धस्तमादायापि ब्राह्मणः स्वपुत्रं न पश्यतीत्यादिप्रयोगापत्तिः। निरुक्तोभयसम्बन्धेन ब्राह्मणपुत्र-

विशिष्टे शक्तिः। कैवल्यञ्च, स्वजातीय द्वितीय-राहित्यं। तच्च स्वजातीयनिष्ठभेदाप्रतियोगित्वं। स्वजातीयत्वञ्च, उद्देश्यविशेषणवाचकैकशब्दात् कैवल्यघटकत्वेन प्रकृतविधेयवत्त्वरूपं प्रतीयते। तथाचायमेको भुङ्क्ते इत्यादौ एतद्देशाधिकरणकभोजनकर्तृनिष्ठभेदाप्रतियोग्योऽयमत्र भुङ्क्ते इत्याद्याकारकबोधः। शक्यतावच्छेदकानुगमश्चोक्त-

कर्मकदर्शनाश्रयत्वाभावस्य तत्र सत्त्वात्। अत्र ब्रूमः। ब्राह्मणः स्वपुत्रं पश्यतीत्यादौ ब्राह्मणादिपदानां देवदत्तादिपरत्वं, अन्यथा अव्यावर्त्तकतापत्तेः। स्वव्यापकवह्निकालीनद्रव्यं ह्रदे नास्तीत्यादौ द्रव्यादिपदानां धूमादिपरत्वमपि वाच्यं। तत्र तत्र स्वपदस्यापि तत्तद्धर्मावच्छिन्नवाचकत्वं विवक्षणीयमतो न कोऽपि दोषः पदमादधातीति ध्येयं। भेदाप्रतियोगित्व-मिति, भेदश्च स्वनिरूपकत्व, स्वसामानाधिकरण्योभयसम्बन्धेन प्रतियोगिताविशिष्टान्यत्वेन विशेषणीयः। तेन नोभयभेदा-दिकमादाय कैवल्याप्रसिद्धिः। उदासीननिष्ठप्रतियोगित्व-मादायाप्रसिद्धिवारणाय स्वनिरूपकेति। प्रतीयत इति, तथाच विधेयत्वेन स्वसमभिव्याहृतपदप्रतिपाद्यवन्निष्ठभेदा-प्रतियोगिनि उद्देश्यविशेषणवाचकैकशब्दस्य शक्तिरिति। इदमुपलक्षणं, क्वचिच्च स्वसमभिव्याहृतपदप्रतिपाद्यविधेय-विशिष्टस्वान्वयितावच्छेदकरूपेणापि साजात्यं बोध्यं। तेन शूद्रेणापि अन्नभोजनकाले एको ब्राह्मणोऽन्नं भुङ्क्ते इत्यादि-

दिशा चिन्तनीयः। अयं फलमेकं भुङ्क्ते, फलमेकं भुञ्जानस्तिष्ठतीत्यादौ विधेयत्वाद्यवच्छेदककोटिप्रविष्टार्थैकैकपदाच्च यादृशार्थविशेषणतापन्ने यदवच्छिन्ने स्वार्थान्वयिनो विशेषणत्वं, तादृशा-

प्रयोगोपपत्तिः। चिन्तनीय इति, परिष्कार्य्य इत्यर्थः। एवञ्च स्वसमभिव्याहृतपदजन्यप्रतिपत्तीयविधेयत्वेन वक्त्रभिप्रायविषयतावच्छेदकत्वानुगतधर्म्मः स एव उपलक्षणतया शक्यतावच्छेदकानुगमकः। नन्वेवमपि स्वत्वस्यानुगमकघटकत्वेऽननुगमतादवस्थ्यं, तद्घटकत्वे समभिव्याहृतपदजन्यप्रतिपत्तीय विधेयतावच्छेदकत्वस्य भोजनकर्त्तृत्व इव गमनकर्त्तृत्वादावपि सत्त्वादप्रसिद्धिरिति चेन्न, एकपदविशिष्टबोधो भवत्वित्याकारकसङ्केतस्वीकारात्। वैशिष्ट्यञ्च, स्वजन्यत्व, स्वसमभिव्याहृतपदजन्यप्रतिपत्तीय विधेयतावच्छेदकत्वेन स्वोच्चारकपुरुषीयेच्छा विषयत्वोपलक्षितधर्म्मावच्छिन्नवन्निष्ठभेदाप्रतियोगित्व, प्रकारतावत्त्वोभयसम्बन्धेन। स्वत्वस्य सम्बन्धाघटकतया नाननुगमः। तत्तदेकशब्दस्य सम्बन्धघटकतया समभिव्याहृतविधेयतावच्छेदकत्वस्य तत्तद्भोजनकर्त्तृत्वादावेव सत्त्वान्न वाऽप्रसिद्धिः। अधिकन्तु सूक्ष्मविवेकेनानुसन्धेयं। एवमुत्तरत्रापि। भुङ्क्ते इत्यादिप्रयोगद्वयं एकपदार्थस्य विधेयतावच्छेदककोट्युद्देश्यतावच्छेदककोटिप्रविष्टभेदेनानुसृतं। यादृशार्थेति, एतत्कर्त्तृकभोजनत्वाद्यवच्छिन्नेत्यर्थः। यदवच्छिन्न इति, कर्म्मत्वाद्यवच्छिन्न इत्यर्थः। स्वार्थान्वयिन इति, एक-

र्थानुयोगिकान्वयप्रतियोगित्वविशिष्टविशिष्ट तद्रू-
पावच्छिन्नान्वयप्रतियोगित्वरूपसाजात्यं प्रतीयते,
अतस्तत्रैव तत्कर्त्तृकभोजनादिनिष्ठसंसर्गप्रतियोगि-
कर्म्मत्वादिनिष्ठसंसर्गप्रतियोगिनिष्ठभेदाप्रतियोगित्वं
फलादौ प्रतीयते। एकसमानार्थकभावादिपदस्थले-

पदार्थान्वयिफलादेरित्यर्थः। अथ यादृशार्थपदेन एतत्कर्त्तृक-
भोजनत्वं धर्त्तुं न शक्यते यस्मात् तादृशवाक्यात् भोजनस्य
कृतौ, कृतेश्च एतस्मिन्नन्वयोऽवगाह्यते। ननु एतद्वृत्तित्वं कृतौ,
कृतेश्च भोजने इति चेन्न। एतस्य धात्वर्थमुख्यविशेष्यकान्वय-
बोधवादिशाब्दिकमते उक्तत्वात्। अथवा स्वसमभिव्याहृत-
प्रथमान्तपदोपस्थाप्यार्थनिष्ठकृतिनिरूपकत्वविशिष्टधात्वर्थताव-
च्छेदकावच्छिन्नविशेषणतापन्ने इत्यत्र तात्पर्य्यात्। वस्तुतस्तु
स्वसमभिव्याहृतधात्वर्थान्वितप्रत्ययार्थो यद्धर्म्मावच्छिन्ने ऽन्वेति,
तद्धर्म्मावच्छिन्नकर्त्तृक तद्धात्वर्थतावच्छेदकावच्छिन्ने यदर्थो-
ऽन्वेति, तादृशधात्वर्थतावच्छेदकावच्छिन्नानुयोगिकान्वय-
प्रतियोगि तद्धर्म्मावच्छिन्नानुयोग्यन्वयप्रतियोगित्वमेव साजात्यं
वक्तव्यं। तेन फलमेकं भुञ्जानेन स्थीयत इत्यादौ नानुपपत्तिः।
अत्रेदमालोचनीयं, अयं फलमेकं भुङ्क्ते। एकेन रथेन कुमार्य्यो
गच्छन्तीत्यादौ एकशब्दस्य स्वार्थान्वयितावच्छेदकावच्छिन्न-
वन्निष्ठभेदप्रतियोगित्वं, अभावश्च खण्डशोऽर्थः। तादृशा-
काङ्क्षाज्ञानबलाच्च,एतत्कर्त्तृकभोजनकर्म्मतापन्नफलनिष्ठभेदप्रति-
योगित्व प्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगित्व बहु-

प्येतादृशी रीतिरिति कृतं पल्लवितेन। गवादि-शब्दात् संस्थानरूपाकृतेरपि बोधस्यानुभवितया गोत्वादिजातिवत् सापि तद्वाच्ये विशेषणं,तस्याश्च वाच्यविशेषणत्वेऽपि न प्रवृत्तिनिमित्तता। साक्षात्-सम्बन्धेन वाच्यवृत्तित्वाभावात् अवयवसंयोगरूपा-यास्तस्याः सामानाधिकरण्यसम्बन्धेनैव गवादौ

कुमारीकर्त्तृकगमनकरणतापन्ननिष्ठभेदप्रतियोगित्व प्रतियो-गिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगित्वादिसम्बन्धेनैकपदार्थस्य फलनिष्ठभेदप्रतियोगित्वस्य तदर्थाभावेऽन्वयोऽभ्युपेयते। एवं रीत्या परिष्कारे न दोषलेशोऽपि, नवा उक्तधर्म्मस्य बहु यत् तत्पदघटितत्वेनानुगमस्य दुष्करत्वेऽपि न क्षतिः। मात्रादि-पदस्येत्न इति, यथा अत्रायं मात्रो भुङ्क्ते इत्यादि, आदिना एकाकिकेवलादिपरिग्रहः। अयं फलं मात्रं केवलं वा भुङ्क्ते इत्यादौ तु मात्रपदन्तु अवधारणार्थकत्वेन फलस्याकर्म्मक-भोजनादिकर्म्मपरं तस्य चाभेदेन फलादावन्वयः। तथा च फलेतराकर्म्मकभोजनकर्म्माभिन्नफलकर्म्मकभोजनानुकूलकृति-मानित्यन्वयबोधः। अत्र मात्रादिपदार्थतावच्छेदकस्य तादृश-कर्म्मत्वस्य पारतन्त्र्येण भोजनादावन्वयोपगमेन यदा चैत्रो घटं पटञ्च पश्यति मैत्रस्तु तद्घटमेव, तदा चैत्रो घटमात्रं पश्यती-त्यादयो न प्रयोगाः। अथवा भुजादिधातोर्फलेतराकर्म्मक-भोजनाद्यर्थकत्वं विवक्ष्यते। मात्रादिपदन्तु तदर्थे तात्पर्य्य-ग्राहकमित्यास्तां विस्तरः। विशेष्यविशेषणभावेन जातिव्यक्त्य-

सत्त्वात्। अत्र शक्त्या जात्याकृत्योरेकतरविनि-
र्मोकेणापरभानविरहात् लाघवाच्चोभयविशिष्टे
गवादिपदस्य एकैव शक्तिः स्वीक्रियते। शक्यविशे-
षणभेदेऽपि पुष्पवन्तादिपदवत् धेन्वादिपदवच्च शक्त्यै-
क्यस्य दुरपवादत्वात्, एकविशिष्टापरावच्छिन्ने शक्ति-

गवादिपदानां शक्तिकल्पनैवातिप्रसङ्गादिरूपदोषविरहादाह,
बोधस्यानुभवीति, तथा चानुभूयमानसंस्थानभानान्यथानुप-
पत्तिरेव तत्र शक्तिः कल्पितेति भावः। साक्षात्सम्बन्धेनेति,
यन्निष्ठसंसर्गतायां प्रतियोग्यनुयोगिविषयतानिरूपितत्वं स एव
साक्षात्सम्बन्धः। तादृशसम्बन्धस्यैव प्रवृत्तिनिमित्ततालक्षण-
घटकतया प्रवेशः। संस्थानव्यक्त्योः साक्षात्सम्बन्धाभावं दर्श-
यितुमाह, सामानाधिकरण्येनेति। समवायसमवेतत्वघटित-
घटितसामानाधिकरण्यसम्बन्धेनेत्यर्थः। तत्र सामानाधिकर-
ण्यघटकप्रथमाधिकरणतानिष्ठसांसर्गिकविषयतायां संस्थाननिष्ठ-
प्रकारतानिरूपितत्वं गवादिनिष्ठविशेष्यतानिरूपितत्वञ्च, वृत्ति-
त्वनिष्ठसांसर्गिकविषयतायामस्तीत्यतो न साक्षादिति भावः।
नन्वेकतरविनिर्मोकेणापरभानविरहस्य परस्परभानसामग्री-
सहकारित्वोपगमेनापि निर्व्वाहात्, न तत्रैकशक्तिकल्पनमत
आह लाघवाच्चेति। ननु हर्य्यादिपदेषु शक्यविशेषणभेदेन शक्ति-
भेद एव दृष्टः, अत्र कुत उभयविशिष्टे एका शक्तिरित्यत आह,
शक्यविशेषणेति। ननु एतेन विशेषणभेदेऽपि यत्र धर्म्मिभेद-
स्तत्रैव कथञ्चित् शक्तेरैक्यं भवत्वेतत्धर्म्मिण ऐक्यात्तत् कुत

रिति । ननु सत्विशेष्यविशेषणभावे विनिगमना-विरहात् गवाद्यंशे साक्षादुभयप्रकारकबोधस्यानु-भवसिद्धस्य दुरुपपादत्वाच्च । यत्र केवलाकृतिविशिष्टे गवादिपदतात्पर्य्यं, यथा पिष्टकमय्यो गाव इत्यादौ तत्र शुद्धगोत्वाद्यवच्छिन्नपरत्वे स्वादिपद इव लक्षणैव । जात्याकृतिविशिष्टायां व्यक्तौ शक्तेरैक्यं, जात्याकृतिव्यक्तयस्तु पदार्थ इति न्यायसूत्रे बहुवचनमपेक्ष्यपदार्थ इत्येकवचनान्तं निर्दिष्टवतो महर्षेरप्यनुमतं ॥

इत्यत आह, धेन्वादिपदवच्चेति । विनिगमनाविरहादिति शक्तिद्वयापत्तेरिति शेषः । केवलाकृतिविशिष्ट इति, विलक्षणावयवसंयोगविशिष्ट इत्यर्थः । गोत्वजातिविरहसूचनाय पिष्टकमय्य इति । लक्षणैवेति, मृण्मयगवादौ गां प्रोक्षय गामानयेत्यादिव्यवहाराभावेन तत् मुख्यत्वाभावात्, तथा च पारमार्थ्यं सूत्रं व्यक्त्याकृतियुक्तेष्वप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः । जातिरिति, पदार्थ इत्यनुषक्तत्वेनान्वितं । अप्रसङ्गात्, प्रयोगविरहात् । इत्येकवचनान्तमिति, अयमाशयः सूत्रस्यपदार्थशब्दोत्तरैकवचनेन विवक्षितैकत्वस्य पदशक्यत्वे रूपे पदार्थत्वेऽन्वयः पदार्थे तद्बाधात् । तथाच ज्यात्याकृति-व्यक्तयस्त्रयपदशक्यतैकवन्त इत्यर्थः । तत्र व्यक्तय इत्यन्त-विशेष्यबोधकशब्दगतबहुवचनस्य विवक्षितबहुत्वसंख्याविरहे-

कत्वसंख्यायाः पदार्थ इति विशेषणपदगतैकवचनैकत्व-विवक्षणात्तत्रैकवचनोपपत्तिरिति तादृशसंख्याया अविवक्षा-स्थले एव समानवचनकत्वनियमात्। अन्यथा एकवचनानुप-पत्तिरिति। तु शब्दस्तु जात्याकृत्योर्विशेषणत्वस्य, व्यक्तेश्च विशेष्यत्वस्य च सूचनाय इति भाष्यकारादयः।

इति श्रीमहामहोपाध्याय गोलोकनाथ न्यायरत्न भट्टा-चार्य्यात्मज पण्डितप्रवर श्रीहरिनाथ तर्कसिद्धान्त-भट्टाचार्य्यविरचितायां शक्तिवादटीकायां किंशब्दविचारः समाप्तः।

मीमांसकास्तु, गवादिपदानां जातिरेव वाच्या। नतु व्यक्तिराकृतिर्वा, व्यक्तिशक्तिमतेऽपि स्वरूपतस्तस्याग्रहासम्भवेन शक्तिज्ञानप्रकारीभूतायां जातौ शक्तेस्तदवच्छेदकताया वा वश्यकल्पनीयतया व्यक्त्यादौ तत्कल्पनायां गौरवात्, प्रयोजनविरहाच्च। व्यक्तिशक्तिमते च जातेरुपलक्षणत्वासम्भवः प्रागेव दर्शितः। यथा व्यक्तिशक्तिमते जात्यंशे शक्तिस्तदवच्छेदकता वा तद्विशेषणानवच्छिन्नैव, तथा जातिशक्तिमतेऽपि सा तथैवेति। न गोत्वत्वादिप्रवेशाद्गौरवशङ्कापि। न हि जातिशक्तिमतेऽपि शाब्द-

मीमांसकमतविशेषमुपन्यस्यति, मीमांसकास्त्विति। वाच्येति, शक्येत्यर्थः। स्वं स्वरूपतः किञ्चिदप्रकारेण। तस्या इति, व्यक्तेरित्यर्थः। व्यक्त्यादाविति, व्यक्तौ संस्थाने च न्यायमते शक्तेराधिक्येन गौरवमिति भावः। सप्रयोजन गौरवस्यादोषत्वादाह, प्रयोजनेति। ननु जातिशक्तिमत इव व्यक्तिशक्तिमतेऽपि गोत्वादिजातयः शक्तौ तज्ज्ञाने चोपलक्षणतया भासमानाः शब्दबोधे भासन्ते इति न तत्र शक्यत्वं, न वा तदेकत्वं कुतो गौरवमित्यत आह, जातेरुपलक्षणेति। दर्शित इति, घटादिपदानां घटत्वाद्युपलक्षिते शक्तत्वे द्रव्यत्वाद्युपलक्षितेऽपि शक्तत्वेन घटादि-

बोधे सा किञ्चिद्धर्म्मप्रकारेण भासते, येन प्रकार-लाभार्थं प्रकारविशेषमन्तर्भाव्य शक्तिः कल्पनीया, अपि तु स्वरूपत एव। अथानुमानादिना गोत्वादौ शक्तिग्रहो भवन् धर्म्मितावच्छेदकविधया गोत्वत्वा-दिकमवश्यं विषयीकरोति। निर्धर्म्मितावच्छेदक-ज्ञानस्यानुमानादिना अजननात्तादृशज्ञानस्य विप-रीतज्ञानाविरोधितयानुपयुक्तत्वाच्च। एवञ्च तादृश-धर्म्मस्य शक्यतावच्छेदकत्वं दुर्व्वारमेव। शक्ति-ग्राहकमानेन धर्म्मितावच्छेदकांशे तदवच्छेदकता-

पदेभ्यो द्रव्यत्वाद्यवच्छिन्नस्याभ्रान्तानामपि शाब्दबोधा-पत्त्यादि दत्तमिति। सा शक्तिस्तथैवेति, निरवच्छिन्नै-वेत्यर्थः। अनुमानादिनेति, अनुमानञ्च, गोत्वादि शाब्दबोधे कादाचित्कभानप्रयोजकज्ञानविषय गोपदनिरूपितसम्बन्धवत्, गोत्वत्वात्, यन्नैवं तन्नैवमित्यादिरूपं। आदिना मनः शब्दादिपरिग्रहः। नन्वनुमानशब्दाभ्यां निर्धर्म्मितावच्छेदकक-ज्ञानाजननेऽपि मनसा कथञ्चित् तज्जननादाह, तादृश ज्ञानस्येति। विपरीतज्ञानाविरोधितया तद्विरहज्ञानाप्रति-बन्धकतया। अनुपयुक्तत्वादकारणत्वात् निर्धर्म्मितावच्छेदक-ज्ञानस्य कारणत्वे गोत्वं गोपदशक्यत्वाभाववदित्यादि निश्चय-कालेऽपि गोपदशक्यत्ववदित्यादिज्ञानोदयेन शाब्दबोधापत्ति-रिति भावः। एवञ्चेति, गोत्वत्वादिना गोत्वादेः शक्तिज्ञान-

ग्रहे बाधकाभावात् । यदि चावच्छेदकताग्रहेऽपि शक्तिधियस्तदंशे भ्रमत्वं कल्प्यते । विषयबाधेनावच्छेदकत्वमेव शक्तिग्राहकमानेन न गृह्यते इत्येव वा स्वीक्रियते, तदा प्रतियोगित्वकारणत्वादीनामपि तुल्ययुक्त्याऽवच्छेदकविलयप्रसङ्गः । तत्राप्येवं सुवचत्वात् । प्रतियोगित्वादिबुद्धेरवच्छेदकत्वावगाहित्वमनुभवसिद्धं यदि, तदा शक्तिधियस्तदवगाहिता नतु तथेति वचसि को वा श्रद्दधाति विशे-

विषयत्वे चेत्यर्थः । शक्तिग्राहकमानेनेति, शक्तिविषयकज्ञानेनेत्यर्थः । तदवच्छेदकताग्रहे शक्त्यवच्छेदकताभाने, अथवा शक्तिग्राहकमानेनेत्यनन्तरं शक्तिग्रह इति पूरणीयं । अत्र तृतीयार्थो जन्यत्वं, तस्य च शक्तिग्रह इत्यत्रान्वयः । एतेन तृतीयाया अनुपपत्तिरित्यपि निरस्तं । बाधकाभावादिति, विषयबाधादिनिश्चायकाभावादित्यर्थः । यद्धर्मं धर्म्मितावच्छेदकीकृत्य यदवगाहते,ऽसति बाधके तत्र तदवच्छेदकत्वमपीति नियमात् । अथवा यद्धर्म्मावच्छिन्ने यदवगाहयति यत् तत् तत्रासति बाधके तदवच्छेदकत्वं ग्राहयति । अधिकरणताग्राहकमानवदिति, नियमादिति भावः । अवच्छेदकताग्रहेऽपीति, अवच्छेदकताभानेऽपीत्यर्थः । भ्रमत्वमिति, गुरुभिन्नमीमांसकमते तैर्भ्रमत्वानङ्गीकारात् तन्मतेऽप्याह विषयबाधेनेति, अवच्छेदकतायां शक्तिनिरूपितत्वबाधेनेत्यर्थः । तदवगाहितेति, अवच्छेदकत्वावगाहितेत्यर्थः । नतु तथानुभव-

षाभावात् । माभूत् वा गोत्वत्वादिकमवच्छेदकं शक्ते, स्तथापि शक्तिज्ञानकारणतायां गुरुशरीर-गोत्वत्वादेर्धर्म्मितावच्छेदकतात्मकविषयतानिवेश-निर्देशाद्गौरवं दुर्व्वारमेव । व्यक्तिशक्तिवादि-नान्तु, स्वरूपतो गोत्वादिनिष्ठधर्म्मितावच्छेदकत्व-स्यैव निवेशादिति चेन्न । पदविशेषणतापन्नशक्तौ निरूपितत्वसम्बन्धेन शक्तिसम्बन्धेन पदे वा स्वरू-पतो गोत्वादिप्रकारिकाया एव शक्तिधियः स्वीका-रात् । नहि समवायेनैव जातेः स्वरूपतः प्रका-

सिद्धाः श्रद्दधातीति, प्रामाण्यं स्वीकरोतीत्यर्थः । तुष्यतु दुर्जन-न्यायेनाह, माभूदिति । निवेशादिति, कारणीभूते गोत्वं गोपदशक्यमिति ज्ञाने गोत्वत्वस्य धर्म्मितावच्छेदकत्वेन प्रवे-शादिति भावः । गौरवमिति, गोत्वापेक्षया गवेतरावृत्ति-त्वादिघटितस्य गोत्वत्वस्य गुरुशरीरत्वादिति । पदविशेषण-तापन्नेति, गोपदं गोत्वे शक्तमित्याद्याकारिका निरूपितत्व सम्बन्धावच्छिन्नगोत्वनिष्ठप्रकारताक शक्तिनिष्ठप्रकारताक पद-निष्ठविशेष्यकताका शक्तिधीरित्यर्थः । पदे वेति, पदविशेष्यक-शक्तिसम्बन्धावच्छिन्नगोत्वप्रकारिकापदं गौरित्याद्याकारिके-त्यर्थः । स्वीकारादिति, तथाच तादृशज्ञानस्यैव शाब्दबोध-जनकतया तदवच्छेदककोटौ गोत्वत्वाद्यप्रवेशेन लाघवमेवेति भावः । ननु स्वरूतो जातिनिष्ठप्रकारतायाः समवायातिरिक्त-

रतेति नियमः प्रामाणिकः । घटं जानामीत्यादौ प्रकारितासम्बन्धेन स्वरूपतो घटत्वादीनां ज्ञानाद्यंशे प्रकारत्वोपगमात् समवायेन धर्म्मिविशेषणतापन्नस्यैव सम्बन्धान्तरेणान्यत्वस्वरूपतो भानमित्यपि न नियमः । प्रामाण्यस्य परतो ग्राह्यतामते अयं घट इत्याकारकस्य स्वरूपतो घटत्वादिज्ञानस्यानुव्यवसाये प्रकारितायां तत्सम्बन्धेन

सम्बन्धानवच्छिन्नत्वनियमश्चेत् कुतस्तादृशज्ञानस्वीकारसम्भव इत्यत आह नहीति । तादृशनियमे व्यभिचारं दर्शयति घटं जानामीत्यादि । विषयत्वसम्बन्धावच्छिन्नघटनिष्ठप्रकारतानिरूपितज्ञाननिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितात्मनिष्ठविशेष्यताकप्रत्यक्षमित्यर्थः । प्रकारत्वोपगमादिति, अन्यथा द्रव्यत्वादिमात्रेण घटविषयकज्ञानमादाय घटं जानामीत्यनुव्यवसायापत्तेरिति भावः । प्रामाण्यस्य स्वतो ग्राह्यत्वमते अयं घट इत्याकारकज्ञानस्यैव प्रामाण्यावगाहितया तदुत्तरं तैः प्रामाण्यसंशयानङ्गीकारेणानुव्यवसाये घटत्वादिविशिष्टघटादिरेव भासते । तदाकारोऽपि घटं जानामीत्यादि । अतः समवायेन धर्म्मिविशेषणतापन्नघटत्वादेः प्रकारितया भानं तत्र इत्यतः परत इति, सम्वादिप्रवृत्तिजनकत्वहेतुकानुमानादितः इत्यर्थः । एतन्मते अयं घट इत्यादिज्ञानस्यानुव्यवसाये प्रकारितायां निरूपितत्वसम्बन्धेन प्रकारितासम्बन्धेन वा ज्ञाने घटत्वादेर्भानमावश्यकं नतु घटत्वविशिष्टघटादेः । अन्यथा तदुत्तरं

ज्ञाने वा धर्म्मिविशेषणतानापन्नस्य घटत्वादेर्भा-
नात्। अस्तु वा प्रकृतेऽपि गवादिविशेषणता-
पन्नस्यैव गोत्वादेः शक्तौ निरूपितत्वसम्बन्धेन, पदे
वा शक्तिसम्बन्धेन स्वरूपतः प्रकारता। गवादेः
शक्तौ पदे वा स्वसमवेतनिरूपितत्व समवेतवाचकत्व-
रूप परम्परासम्बन्धेन प्रकारता। तादृशी च
गवादिविषयता न शाब्दबोधजनकतावच्छेदकेति
परम्परासम्बन्धेन प्रकारताया जनकतावच्छेदक-
त्वापेक्षया साक्षात्सम्बन्धावच्छिन्नप्रकारताया-
स्तथात्वे लाघवेन व्यक्तिसिद्धेर्नावकाशः। अथ
जातिशक्तिमतेऽपि शाब्दबोधे व्यक्तिभानमावश्यकं।
गौर्नष्टा, गौर्जाता, गामानयेत्यादौ समभिव्याहृत-
पदार्थान्वयस्य जातौ वाधात् परम्परासम्बन्धेन

इदं ज्ञानं घटे घटत्वप्रकारकं घटत्वाभाववति घटत्वप्रकारकं
न वेति संशयानुपपत्तेरिति भावः। नन्वेतावतापि प्रामा-
ण्यस्य स्वतो ग्राह्यत्वमते धर्म्मिविशेषणतापन्नस्यैवेत्यादिनियमे
व्यभिचाराभावेन कुतस्तादृशशक्तिधीस्वीकारसम्भव इत्यत आह
अस्तु वेति। अस्य च प्रकारताद्वयेनान्वयः। गोत्वादेरिति,
अस्य च तादृशप्रकारता तु पारतन्त्र्यीया। गवादेश्चेति, अस्य
च तादृशप्रकारतासातन्त्र्यीया। तथाच शक्तिज्ञानन्तु स्वसम-
वेतनिरूपितत्वसम्बन्धेन गोमच्छक्तिमत्पदमित्याकारकं। स्वसम-

तदन्वयोपगमेऽप्यन्वयितावच्छेदकतया गोत्वत्वादि-भानापत्तेः, शक्तौ गोत्वत्वाद्यन्तर्भावापत्तेश्च। नहि स्वरूपेण पदार्थस्य पदार्थान्तरान्वयितया भानं कैश्चित् स्वीक्रियते। स्वीकुरु वा प्रकारतया स्वरूपेणोप-स्थितजातेर्भानं। विशेष्यतया तदभानन्तु न सम्भव-त्येव। निर्धर्म्मितावच्छेदककस्य शाब्दबोधस्य प्रवृ-त्त्याद्यनुपयोगितया तत्स्वीकारासम्भवात्। एवञ्च जातिमात्रवाचकत्वेनाभ्युपगतपदस्यापि व्यक्तिबोध-जनकताया न विवादात् व्यक्तिशक्तिर्ध्रुवैव। शक्तिभ्रमाजन्य लक्षणाग्रहाजन्य तद्बोधकजनकताया

वेतनिरूपितशक्तिसम्बन्धेन गोमत्पदमित्याकारकस्येति। सम-भिव्याहृतपदार्थेति, नाशप्रतियोगित्वाद्यन्वयस्येत्यर्थः। पर-म्परासम्बन्धेनेति, स्वाश्रयसमवेतत्वादिसम्बन्धेनेत्यर्थः। गोत्व-त्वादिभानापत्तेरिति, तादृशवाक्यात् शाब्दान्यथानुपपत्त्या गोत्वत्वादिभानस्वीकारापत्तेरित्यर्थः। शक्ताविति, गोत्वत्वस्य शक्तावप्रवेशे शक्तिज्ञानेन तदनुपस्थितौ तद्रूपेण शाब्दबोधानुप-पत्तेः। प्रकारान्तरेण गोत्वत्वाद्युपस्थितेः शाब्दबोधहेतुत्वे जातित्वादिना गोत्वत्वाद्युपस्थितिकालेऽपि तादृशवाक्यात् जातिर्नष्टा इत्यादिशाब्दबोधापत्तेरिति भावः। ननु स्वरूपतः पदार्थस्य प्रकारतया पदार्थान्तरान्वयेन किञ्चिद्बाधकं तादृश-ज्ञानस्य विपरीतज्ञानविरोधित्वात् प्रवर्त्तकत्वाच्चेत्यत आह

एव तच्छक्तिसाधकत्वात्। अन्यथा जातावपि शक्त्यसिद्धिप्रसङ्गात्। एवं शक्तेरीश्वरसङ्केतरूपत्वे व्यक्तिबोधकतायाः पदेऽबाधितत्वे नेश्वरेच्छाविषयतया तस्या अपि शक्यत्वं दुरुपह्नवं। नहि मीमांसकैर्भगवान्नानुमन्यत इत्येतावतैव तादृशयुक्त्यनव-

स्वीकुरु वेति। ध्रुवैवेति, अत्यज्यैवेत्यर्थः। शक्तिसाधकत्वादिति, यत्पदं शक्तिभ्रमं लक्षणाग्रहञ्च विना इतरपदानुपस्थाप्य यदर्थान्वयबोधजनकं तत् तदर्थशक्तमिति व्याप्तेः। अन्यथा तादृशव्याप्त्यनभ्युपगमे। शक्त्यसिद्धीति, साधकान्तराभावादित्यर्थः। ईश्वरेच्छाविषयतयेति, तत्तत्पदजन्यबोधविषयत्वेनेश्वरेच्छाविषत्वेनेत्यर्थः। तस्याऽपि व्यक्तेरपि। दुरुपह्नवमिति,वारयितुमशक्यमित्यर्थः। तत् साधकबहुतरेति, क्षितिः सकर्त्तृका कार्य्यत्वादित्याद्यनुमानं, द्यावाभूमी जनयन् देव एक आस्ते विश्वस्य कर्त्ता भुवनस्य गोप्तेत्यादिश्रुतिश्च ईश्वरसाधकमानमिति भावः। तदुपन्यासस्यापि ईश्वरानङ्गीकारेण तादृशयुक्त्यनवकाशोद्भावनस्यापीत्यर्थः। शक्तिनिरूपकज्ञानेति, शक्तिनिरूपकताविशिष्टज्ञानविषयत्वेत्यर्थः। तथाच शक्तिनिरूपकविषयत्वेति लाभः। तेन स्वात्मादौ नातिव्याप्तिः। जन्य इव प्रयोज्येऽपि निरूपकत्वस्वीकारादिति भावः। कुञ्जशक्तिवादिमतं दूषयितुं सिद्धान्तच्छलेनाह, व्यक्तीति। तथाच गामानयेत्यादौ सामानाधिकरण्यसम्बन्धेन कर्म्मत्वादौ गोत्वादेरन्वय आस्तामित्यर्थः। वैमत्यमिति, अनभिप्रायमित्यर्थः।

काशस्तत्साधकबहुतरमानसत्त्वेन तदुपन्यास-स्यापि निरुत्तरत्वापातात्। एवं ज्ञाने पदानां शक्तिरित्येतादृशमतेऽपि व्यक्तिज्ञानजननसमर्थपदस्य जाताविव व्यक्तावपि वाच्यत्वं दुरपह्नवमेव। शक्ति-निरूपकज्ञानविषयत्वरूपस्य तस्यापि विशेषेण जातिव्यक्त्योः सत्त्वादिति चेन्न। व्यक्तिशक्ताव-स्माकं न वैमत्य, मपितु व्यक्तिशक्तिज्ञानत्वेन हेतु-तायामेव। अतएव व्यक्त्यंशे कुब्जा शक्तिरिति गीयते। तदंशे तज्ज्ञानानपेक्षणात्, अतएव व्यक्तेर्न वाच्यता। नहि शक्तिधीविषयतामात्रेण वाच्यता, तादृशविषयताया अन्वयसाधारण्या-दपि तु यद्विषयकत्वेन शक्तिज्ञानस्य तद्विषयक-

शक्तिज्ञानहेतुतायामिति, अस्य वैमत्यमित्यनेनान्वयः। कुब्जेति, वाच्यत्वव्यवहाराजनिकेत्यर्थः। तदंश इति, व्यक्त्यंश इत्यर्थः। तज्ज्ञानानपेक्षणादिति, शक्तिज्ञानानपेक्षणात्। तथाच पदं गोत्वज्ञानशक्तमित्याकारकज्ञानमेव *हेतुरिति भावः। अत एवेति, जनकतावच्छेदककोटौ व्यक्तित्वाप्रवेशादेवेत्यर्थः। शक्तिधीविषयतेति, शक्तिनिरूपकज्ञाननियतविषयतामात्रेणेत्यर्थः। अन्वयसाधारण्यात्, सम्बन्धसाधारण्यात्। शाब्दबोधे जाति-व्यक्ती इव पदार्थसम्बन्धोऽपि नियमतो भासते, अतस्तस्यापि वाच्यत्वापत्तिरिति भावः। यद्विषयकत्वेनेति, अत्र तृतीयार्थो-

शाब्दधीजनकत्वं तत्त्वमेव वाच्यताव्यवहारनियामकं। अन्वयांशे कुत्राशक्तिसत्त्वेऽपि यथा तद्विषयकत्वं शक्तिज्ञानजनकतायां नावच्छेदकं, तथा व्यक्त्यंशे तत्सत्त्वेऽपि तद्विषयकत्वस्य शक्तिज्ञानजनकतायामनवच्छेदकत्वान्नव्यक्तौ तद्व्यवहारः। तद्विषयकत्वस्य शाब्दधीविशेषणत्वाद् गवादिपदशक्तिज्ञानस्य गोत्वादिज्ञानविषयकत्वेन गोत्वादिशाब्दधीहेतुत्वेऽपि न गवादिपदस्य गोत्वादिज्ञान-

ऽवच्छेद्यत्वं, तस्य च शाब्दधीजनकत्वेऽन्वयः। तथाच यद्विषयकशाब्दधीजनकत्वं यन्निष्ठावच्छेदकताकविषयित्वनिष्ठावच्छेदकताकमित्यर्थः। एतन्मते गोत्वज्ञानशक्तिमत्पदविशिष्टज्ञानत्वेनैव कारणता, लाघवात्। तत्त्वज्ञाने गोत्वस्य विषयतया शक्तौ तादृशज्ञानस्य निरूपितत्वसम्बन्धेन विशेषणत्वं, तथाच गोत्वनिष्ठविषयतानिष्ठावच्छेदकताकज्ञाननिष्ठविषयतानिष्ठावच्छेदकताकशक्तिनिष्ठविषयतानिष्ठावच्छेदकताक पदनिष्ठ-विषयतानिष्टावच्छेदकताकं जनकत्वमिति। एतच्च चत्वराभासमानप्रकारताविशेष्यतयोरभेदमते। वाच्यत्वव्यवहारनियामकं, वाच्यपदेन तत्प्रतिपादनप्रवृत्तिनियामकं जन्यतावत्त्वमेव व्यवहारनियामकमिति तु पर्य्यवसितार्थः। तद्वत्त्वञ्च, स्वनिरूपितशाब्दत्वावच्छिन्नावच्छेदकतानिरूपितविषयत्वनिष्ठावच्छेदकताकावच्छेदकतावत्त्व,स्वनिरूपितजनकतानिरूपितविषयित्वनिष्ठावच्छेदकताकावच्छेदकतावत्त्वोभयसम्बन्धेन।

वाचकत्वापत्तिः। वस्तुतो यद्विषयकत्वविशिष्ट-ज्ञानविषयकत्वेन शक्तिज्ञानस्य शाब्दधीजनकता,

व्यवहारप्रयोजकधर्म्मशरीरे निविष्टतद्विषयकत्वेत्यस्य फलमाह, तद्विषयकत्वस्येति। गोत्वादिज्ञानवाचकत्वापत्तिरिति, ननु गोत्वविषयकशाब्दबोधस्य मितिमात्रविषयकतया सम्भूहालम्ब-नात्मकतया वा गोत्वज्ञानविषयकत्वसत्त्वेन यद्विषयकत्वनिवेशो-ऽपि कुतो गोत्वज्ञानवाचकत्वापत्तिवारणं। न च ज्ञानस्य त्रितयविषयकत्वस्वीकारात्, मुख्यविशेष्यताद्वयशून्यत्वनिवेशाच्च, न तदापत्तिरिति वाच्यं, गौर्गोत्वज्ञानवत्पुरुषेणानीयते इति शाब्दधीमादाय तद्दोषतादवस्थ्यात्। न च यद्विषयकशाब्दधी-जनकत्वमित्यत्र यद्विषयकत्वावच्छिन्नशाब्दधीनिष्ठजन्यताक-जनकत्वमिति निवेश्य वारणीयमिति वाच्यं, तथा सति यद्वि-षयकत्वावच्छिन्नं शाब्दधीनिष्ठजन्यत्वं तत्त्वमेव वाच्यत्वमिति निवेशेनैव दोषाभावात् शेषवैयर्थ्यापत्तेरिति चेन्न। शाब्द-बोधे मुख्यविशेष्यताद्वयशून्यत्वस्य निवेशात् यन्निष्ठविषयता-याश्च मुख्यविशेष्यता तदवच्छेदकतान्यतरात्मकत्वस्य च निवे-शात्। तद्विषयकत्वमनिवेश्य लघुनिवेशेन वारयति, वस्तुत इति। यद्विषयकत्वनिविष्टेति, विषयतया यद्विशिष्टज्ञानविषयकत्वे-नेत्यर्थः। अथवा यद्विषयकत्वविशिष्टं यत् ज्ञानविषय-कत्वं तेनेत्यर्थः। तथाच यन्निष्ठावच्छेदकताकविषयित्व-निष्ठावच्छेदकताकज्ञानत्वावच्छिन्नविषयित्वनिष्ठावच्छेदकताकं शाब्दधीजनकत्वं तत्त्वमेव वाच्यताव्यवहारनियामकमित्यर्थः। ननु गोत्वविषयकशाब्दत्वावच्छिन्नं प्रति गोत्वज्ञानजनकशक्ति-

यद्विषयकत्वेन वा शाब्दधियः शक्तिज्ञानजन्यता तत्त्वमेव तथा। एतेन ज्ञानत्वज्ञानस्यापि ज्ञानपद-वाच्यतापत्तिः। शक्यज्ञानविषयत्वेनैव ज्ञानपद-शक्तिज्ञानस्य ज्ञानत्वेन ज्ञानत्वज्ञानविषयकशाब्द-धीजनकत्वादिति परास्तं। कारणत्वस्य कार्य्यत्व-स्यावच्छेदकगर्भे गोत्वादिविषयकत्वस्य निवेशाद्ध गोत्वादेर्वाच्यतापत्तिरेवञ्च, गौर्गोपदशक्या इत्या-कारिकापि शाब्दबोधोपयोगिशक्तिधीः सम्भवति व्यक्त्यंशे शक्तेरवाधेनान्यथाख्यात्यापत्तिविरहात्,

ज्ञानत्वेन कारणत्वे कारणत्वग्रहात् पूर्वं शक्तौ तादृशकारणत्व-ग्रहो दुर्घटः। तद्घटितकारणतावच्छेदकाग्रहे कारणत्वग्रहो-ऽपि दुर्घट इत्यन्योऽन्याश्रय इत्यतो लाघवाच्चाह, यद्विषयत्वे-नेति। यत्पर्य्याप्तावच्छेदकताकविषयत्वनिष्ठावच्छेदकताक-शाब्दत्वावच्छिन्नं शक्तिज्ञानत्वावच्छिन्नजनकतानिरूपितजन्य-त्वमित्यर्थः। तेन जातित्वादिना गोत्वादेर्न गवादेर्न पद-वाच्यता। तथेति, वाच्यत्वव्यवहारनियामकमित्यर्थः। तथाच शक्तिज्ञानत्वावच्छिन्नजनकताक शाब्दत्वावच्छिन्नजन्यतानिरू-पितविषयत्वनिष्ठावच्छेदकताकावच्छेदकतापर्य्याप्त्यधिकरणत्वं वाच्यताव्यवहारनियामकमिति तु पर्य्यवसितार्थः। एतेनेति, शाब्दधीजनकतायां यद्विषयकत्वविशिष्टज्ञानविषयकत्वावच्छि-न्नत्वनिवेशेन शाब्दधीनिष्ठशक्तिज्ञानजन्यतायाञ्च यद्विषयकत्वा

तादृशज्ञानस्य शाब्दधीहेतुत्वेऽपि गोत्वधर्म्मितावच्छेदकशक्तिज्ञानत्वेन व्यक्तिविषयतामनन्तर्भाव्यैव गोत्वप्रकारकशाब्दबुद्धौ तस्य तथात्वात् उक्तरीत्या व्यक्तेरवाच्यतापत्तेः। न चैवं व्यक्त्यंशे शक्तिज्ञानस्यापेक्षिततया तदंशे शक्तेः कुब्जत्वानुपपत्तिरिति वाच्यं, कार्य्यकारणभावावच्छेदककोटौ व्यक्त्यनन्तर्भावस्यैव तदंशे कुब्जताव्यवहारनिर्व्वाहकत्वात्। अतएव ईदृशयुक्त्यभिप्रायेणैव सामान्यलक्षणापूर्व्वपक्षे मणिकृतां समानप्रकारत्वेन शक्तिज्ञानशाब्दबोधयोर्हेतुमद्भावाभिधानमपि न विरुद्ध्यते। न च शक्त्यंशे गोत्वादिप्रकारकज्ञानस्य गवांशे गोत्वप्रकारकशाब्दबोधहेतुत्वेऽपि कार्य्यकारणयोः समानप्रकारकत्वस्याक्षतत्वान्नानुभवविरोध इति वाच्यं, शक्त्यंशे गोत्वादिप्रकारता-

वच्छिन्नत्वनिवेशने चेत्यर्थः। अस्य च परास्तमित्यनेनान्वयः। ज्ञानत्वेनेति,ज्ञानाविषयकशाब्दत्वावच्छिन्नं प्रति ज्ञानपदशक्तिज्ञानत्वेन कारणतया ज्ञानत्वज्ञानस्य च सामान्यतो ज्ञानविषयकत्वेन तद्विषयकशाब्दधीजनकत्वमित्यत्र तत्पदेन ज्ञानत्वज्ञानस्यापि धर्त्तुं शक्यत्वादिति भावः। एवञ्च व्यक्त्यंशे कुब्जशक्तिस्वीकारे व्यक्तिविषयतामनन्तर्भाव्येति। न च गोत्वधर्म्मितावच्छेदकक शक्तिज्ञानत्वेन हेतुत्वे धर्म्मितारूपगवादि-

मादाय समानप्रकारकत्वस्याभिप्रेतत्वे पूर्व्वं वक्ष्यत इत्यस्यासङ्गत्यापत्तेः। अपूर्व्ववादे समानप्रकारकात् लिङ्पदस्य कार्य्यत्वेन घटादिरूपकार्य्ये शक्तिज्ञानात् कार्य्यत्वेनापूर्व्वविषयकशाब्दबोध इत्येवाभिधानात् शक्यांशे शाब्दधीप्रकारकज्ञानस्य हेतुतायास्तत्रानुक्तेः। न चैवं जात्यंशे सा ज्ञाता, व्यक्त्यंशे च स्वरूपसतीहेतुर्लाघवादिति कुब्जशक्तिवाद इत्यादि-चिन्तामणिग्रन्थविरोध इति वाच्यं, मतभेदेनोभयसङ्गतेः। वस्तुतस्तु, जातिधर्म्मितावच्छेदकशक्तिज्ञानस्य हेतुत्वे व्यक्तेर्विषयतापि कारणतावच्छेदककोटौ निविशते, विशेष्यतावच्छेदत्वेनैव धर्म्मितावच्छेदकीय विषयताविशेष्य विशेषणीयत्वात्। अवच्छेदकतानिरूपकविशेष्यताया व्यक्ति-

विषयताया अपि तदवच्छेदकत्वेन कुतस्तस्य तदनन्तर्भाव इति वाच्यं, एतस्य स्वयमेवाग्रे वक्ष्यमाणत्वात्। अतएवेति, व्यक्त्यंशेऽपि शक्तिज्ञानस्य कारणत्वादेवेत्यर्थः। शक्यांश इति, निरूपितत्वसम्बन्धेनेति शेषः। विषयतासम्बन्धेन शक्तिविशेषणज्ञानांशे वेत्यर्थः। तथाच गोपदं गोत्वशक्तमित्याकारकज्ञानस्यैव हेतुतया तत्तद्ग्रन्थभानेऽपि न तद्ग्रन्थविरोधः। मतभेदेनेति, कुब्जशक्तिवादिनां मतभेदेनेत्यर्थः। एवञ्चेति, अवच्छेदकत्वांशे विशेषणतया धर्म्मितात्मकव्यक्तिविषयताया

विषयतारूपत्वात्। एवञ्च व्यक्तेरवाच्यताव्यवहारस्य कथञ्चिदुपपादनेऽपि शक्त्यंशे जातिप्रकारकज्ञानहेतुतामतापेक्षया गौरवं दुर्व्वारमेव। कारणतावच्छेदकेऽधिकविषयतानिवेशात्। एवं द्रव्यत्वादिधर्म्मितावच्छेदकक प्रमात्मकगवादिपदप्रकारकशक्तिज्ञानात्, द्रव्यत्वादिप्रकारकशाब्दबोधवारणाय शक्त्यंशे धर्म्मितावच्छेदकावच्छिन्नत्वावगाहित्वस्याप्यधिकस्य निवेशनीयतया गौरवमिति। व्यक्तौ कुब्जशक्तिवादिनामपि शक्त्यंशे जातिप्रकारकज्ञानहेतुतामतमेव साधीयः। वस्तुतस्तु सर्व्वलाक्षणिकस्थलेऽप्यन्वयबोधस्यानुभविकत्वेन दुरपह्नवतया लाक्षणिकस्याप्यनुभावकत्वं दुर्व्वारमेवेति। तस्य लक्ष्यार्थे कुब्जिका शक्तिप्रसङ्ग इति नानुभवजननसामार्थ्यमीश्वरसङ्केतो वा वृत्तिरूपाशक्ति, रपि तु पदार्थान्तरमेव। सा च जातावेव

अवच्छेदकत्वे चेत्यर्थः। कथञ्चिदुपपादनेऽपि यद्विशेषितविषयतायाः शाब्दधियः शक्तिधीजन्यत्वं, शक्तिधियः शाब्दधीजनकत्वं वा, तत्त्वं शक्यत्वव्यवहारप्रयोजकमिति प्रकारेणेत्यर्थः। अनुभवजननसामर्थ्यमिति, यथा वह्नौ दाहानुकूलसामर्थ्यरूपा शक्तिस्तद्वत् पदनिष्ठानुभवजनिका अतिरिक्ता मीमांसकविशेषाभिमतेत्यर्थः। ईश्वरसङ्केत इति, नैयायिकाभिप्रेता ईश्व-

कल्पयते, ननु व्यक्त्यादाविति न तत्र कुब्जशक्तिरपीति तत्त्वं । अथ व्यक्तेर्गवादिपदवाच्यत्वे गवादिपदाद्व्यक्तेः स्मरणमनुभवश्च न स्यात् । न च पदावाच्यस्याप्यन्वयस्यैव व्यक्तेर्भानं शाब्दबोधेनानुपपन्नमिति वाच्यं, तद्धर्म्मप्रकारकशाब्दबोधे तद्धर्म्मप्रकारकपदार्थोपस्थितेर्हेतुतया गोत्वप्रकारकशाब्दबुद्धौ गोत्वादिप्रकारकस्मरणस्यापेक्षणीयतया सम्बन्धग्रहाविषयतया व्यक्तेरस्मरणे व्यक्तेः शाब्दानुभवविषयताया दुरुपपादत्वात्, अन्वयस्य च संसर्गविधयैव भानात् । शाब्दधियोऽन्वयांशे निष्प्रकारकतया तदुपस्थित्यनपेक्षणेन वाच्यत्वानुपयोगादिति चेदत्र भट्टाः, पदान्नु व्यक्तेः स्मरणमनुभवो वा किन्त्वाक्षेपादेव व्यक्तिधीः । आक्षेपिका च जातिरेव । आक्षेपश्चानुमानमर्थापत्तिर्वा । न च जाति-

रेच्छारूपः । भट्टमतमुपन्यस्यति, अत्र भट्टा इति । आक्षेपादेव व्यक्तिधीरिति, आक्षिप्तैव व्यक्तिः शाब्दबोधे भासते इति भावः । आक्षेपिका, आक्षेपप्रयोजिका । अर्थापत्तिरिति, सा च अनुपपद्यमानत्वज्ञानं, तच्च तत्र तदभावप्रयोज्यसत्त्वाभाववत्त्वं । अभावप्रतियोगिसत्त्वप्रकारकज्ञानं,तत्र तद्बीजनकं । एतच्च तन्मते प्रमाणान्तरं । यथा पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ दिवाधिकरणकभोजनकर्त्तृत्वाभाववान् पीनो देवदत्त इति

व्यक्त्योर्वैयधिकरण्यादाक्षेपासम्भवः। तादात्म्य-सम्बन्धेन जातेराधेयतासम्बन्धेन व्यक्त्याक्षेपकताया-मविरोधात्। वस्तुतस्तु, गामानयेत्यादौ स्वाश्रय-वृत्तित्वादिरूप-परम्परासम्बन्धेनानयनकर्म्मत्वादौ गोत्वादिजातेरन्वयः शाब्द स्तेन सम्बन्धेन गोत्वादिमत्त्वस्य चाधेयतासम्बन्धेन गवादिमत्त्व-विरहेऽनुपपद्यमानत्वाच्चानयनकर्म्मत्वादावाधेयता-सम्बन्धेन गवादिव्यक्ति प्रकारिका धीः। आक्षेपात्

प्रथमं शाब्दबोधः, पश्चात् दिवाभोजनाभाववतो देवदत्तस्य रात्रिभोजनं विना पीनत्वमनुपपन्नमित्यर्थापत्तितः रात्रिभोजन-वान् पीनो देवदत्त इत्यर्थापत्तिरिति तु भट्टानुयायिनः। केचित्तु तादृशशाब्दबोधानन्तरं तादृशदेवदत्तो दिवाभोजन-कर्त्तेत्यौपादानिको बोधो जायते। शाब्दसामग्रीसहकारेणानुप-पत्तिज्ञानाज्जन्यते यज्ज्ञानं स एव औपादानिक इति वदन्ति। तादात्म्यसम्बन्धेनेति, तथाच गोत्वं गवाश्रितं व्यक्त्याश्रितं वा गोत्वात् जातेर्वा,यन्नैवं तन्नैवमित्यनुमानं। गोत्वं व्यक्त्याश्रितत्वं विना जात्या अनुपपन्नमित्यर्थापत्तिरिति भावः। एतद्ग्रन्थस्तु अनुमानमात्रपरत्वा। एतादृशानुमानस्य वक्ष्यमाणदोषग्रस्तत्वा-दाह वस्तुतस्त्विति। तेन सम्बन्धेनेत्यादिग्रन्थस्तु कर्म्मत्व-धर्म्मिकाधेयतासम्बन्धावच्छिन्नगवाभावव्यापकीभूताभावप्रति-योगिगोत्वकर्म्मतात्वादित्यनुमानपरस्तादृशार्थापत्तिपरश्च। तद्वि-शेष्यकस्मरण इति, गोत्वविशेष्यकस्मरण इत्यर्थः। व्यक्ति-

पूर्व्वसंसर्गघटकतया शाब्दबोधे व्यक्तिभानेऽपि कर्म्मत्वांशे गोत्वाद्यवच्छिन्नव्यक्तेः प्रकारतया भानानुरोधेनाक्षेपादरः। गोत्वं गवाश्रितं, गोनिष्ठभेदप्रतियोगितानवच्छेदकधर्म्मत्वात्, किञ्चिदाश्रितम्बा जातित्वादित्यनुमानतो व्यक्तिलाभस्तु न सार्व्वत्रिकः। तादृशहेतूपस्थितेरसार्व्वत्रिकत्वात्, गवादिपदात्तादृशरूपेण गोत्वादेरनुपस्थितेः। अथ गवादिपदात् व्यक्तेरस्मरणे गोत्वादिस्मरणमेव कथमुपपद्यते ? गोत्वप्रकारकस्मरणे व्यक्तेर्विशेष्यतया भाननियमात्। तद्विशेष्यकस्मरणे च व्यक्तिघटितगोत्वत्वादेः प्रकारतया भाननियमात्। व्यक्त्यघटितप्रकारस्य सम्भवेऽपि स्वरूपत एव जातेः शक्यतया धर्म्मान्तरविशेष्यतया तत्स्मरणासम्भवात् धर्म्मान्तरप्रकारेण स्मरणे गोत्वाद्यंशे निष्प्रकारकशाब्दज्ञानासम्भवेन तादृशस्मृतेरनुपयोगित्वाच्चेति चेन्न। पदादेनालोचनरूपस्यैव स्मरणस्योप-

घटितेति, गोत्वत्वघटकगवेतरावृत्तित्वघटकत्वात् गवादेरिति भावः। व्यक्त्यघटितेति, जातित्वादिप्रकारस्येत्यर्थः। स्वरूपतो गोत्वादिव्यक्तिज्ञानस्य कथञ्चित् किञ्चित्प्रकारेण स्मरणप्रयोजकत्वकल्पनेऽप्याह, धर्म्मान्तरेति। आलोचनरूपस्यैवेति,

गमात् किञ्चिद्धर्म्मावच्छिन्नसम्बन्ध्युपरक्तसम्बन्धि-ज्ञानाधीन तत्सम्बन्धिस्मृतेः सप्रकारकत्वनियमेऽपि निर्व्विशेषणकसम्बन्ध्युपरक्तसम्बन्धज्ञानान्निर्व्विकल्पकांशस्मरणे बाधकाभावात्, निर्व्विकल्पकस्य संस्काराजनकत्वेऽपि विशिष्टज्ञानाहितविशिष्टगोचरसंस्काराद्विशेष्यांशानुद्बोधदशायां केवलविशेषणांशस्मरणे न विरोध इति वदन्ति। तदसत्, गवादिपदात् स्वरूपतो गोत्वादिज्ञानेऽपि व्याप्यतावच्छेदकप्रकारेण तद्ग्रहासम्भवात्, ततो व्यक्त्याक्षेपासम्भवात्। न च परम्परासम्बन्धेन शाब्दधीविषयेण गोत्वादिविशेषितकर्म्मत्वादिहेतुना आनयनादौ गवादिकर्म्मत्वमनुमेयमिति वाच्यं, विशिष्टसाध्यस्य प्रागप्रतीतेः। एवं गौरा-

निर्व्विशेष्यकनिष्प्रकारकस्येत्यर्थः। संस्काराजनकत्वेऽपीति, ननु निर्व्विकल्पकस्य संस्कारजनकत्वे, का क्षतिरिति चेन्न, तस्य संस्कारजनकत्वे संस्कारस्यापि तथात्वेन तज्जन्यस्मृतिरपि निर्व्विकल्पकत्वेनातीन्द्रियतया तत्कल्पकाभावात्। शाब्दबोधस्थले तु तदनुपपत्त्या कल्पनीयस्य निर्व्विकल्पकस्मरणस्य निर्व्विकल्पकस्मरणं विनाप्युपपादनादित्याशयः। व्याप्यतावच्छेदकप्रकारेणेति, आधेयतासम्बन्धेन गवादिव्याप्यतावच्छेदकगोत्वत्वादिप्रकारेणेत्यर्थः। विशिष्टसाध्यस्य, गोकर्म्मताकत्वस्य। प्रागप्रतीते-

नीयतामित्यादौ स्वरूपत उपस्थितस्य गोत्वादेरेव विशेष्यतया भानोपगमे निर्धर्म्मितावच्छेदकक-शाब्दधीस्वीकारापत्तेः। एवं गवादावानयन-कर्म्मत्वं सामानाधिकरण्यसम्बन्धेनानयनकर्म्मत्व-विशेषितगोत्वादिना हेतुनानुमेयं। तच्च न सम्भवति। तादृशगोत्वादेरानयनकर्म्मत्वादिशून्य-गवादिसाधारण्येन व्यभिचारात्। सामानाधि-करण्येन सम्बन्धेनानयनकर्म्मत्वादिविशिष्टस्य विशे-षणाव्यभिचारित्वेऽपि साध्यस्य पक्षे सन्देहदशायां साध्यहेत्वोः पक्षे दुर्निश्चयत्वादतो व्यक्तेः शाब्द-बोधे विशेष्यादिविधया भानमावश्यकमित्यपि बोध्यं। एतेन जातिवाचकपदाज्जातिबोधः शाब्दः।

रिति, अनुमितेः पूर्व्वं तद्ग्राहकाभावेन तद्ग्रहासम्भवादिति भावः। ननु शब्देन गोत्वेन कर्म्मत्वज्ञानेति गवाद्युपस्थिति-सहकारेण मनसैव गोकर्म्मत्वग्रहसम्भवादाह, एवमिति। ननु गौरानीयतामित्यादौ शाब्दिकमते शाब्दस्य धात्वर्थमुख्यविशे-ष्यकत्वेनानयनादौ स्वरूपतो गोत्वभानसम्भवाल्लक्षणया गोत्व-त्वेन गोत्वविशेष्यकत्वसम्भवाद्दोषान्तरमाह, एवं गवादाविति। गौरानीयामित्यादिवाक्यानन्तरं गवादावानयनकर्म्मत्वबोध आव-श्यकः। अन्यथा, आनयनकर्म्मत्वादिना गवादौ प्रवृत्तिर्न स्यादिति। साध्यहेत्वोरिति, तथाच सामानाधिकरण्यसम्बन्धेन

व्यक्तिस्त्वौपादानिक एवेति स्वौकरमतमनुपादेयं।
उपादानस्यार्थापत्तिरूपत्वेन भट्टमताविशेषात्। न
च जातिरेव व्यक्तिबोधिकाजातिकरणत्वमेवौपा-
दानिकत्वं बोधस्येति वाच्यं, जातेः प्रमाणान्तर-
कल्पनापेक्षया व्यक्तिशक्तिकल्पनाया एवोचित-
त्वात्। एवं जातेर्न्नित्यतया सर्व्वदैव तदुपादानेक-
व्यक्तिधीवारणाय जातिहेतुकव्यक्तिबोधः, जाति-
शक्तिज्ञानघटिततच्छाब्दसामग्र्याः सहकारित्वमव-
श्यमभ्युपगन्तव्यमिति। तथाच तादृशसामग्र्या एव
व्यक्तिज्ञानप्रयोजकतासम्भवेन जातेः करणत्व-
कल्पनमनर्थकं। न च जातिनिरपेक्षजातिभासक-
शाब्दसामग्र्या व्यक्तिज्ञानप्रयोजकत्वे, व्यक्त्यंशेपि

साध्यविशिष्टहेतोरपि निश्चयासम्भव इति भावः। एतेनेति,
अस्यानुपादेयमित्यनेनान्वयः, पूर्व्वोक्तदोषेणेत्यर्थः। ननु उक्त-
दोषा भट्टमत एव दत्ताः। ते च स्वौपादानिकबोधाङ्गीकर्त्तृमते
कुतः सम्भवन्तीत्यत आह, उपादानस्येत्यादि। अर्थापत्ति-
रूपत्वेन शाब्दसामग्रीसहकृततानुपपत्तिज्ञानरूपत्वेनेत्यर्थः।
भट्टमताविशेषादिति, तथाचोक्तदोषा जाग्रत्येवेति भावः।
एवोचितत्वादिति, जातेः प्रमाणान्तरताकल्पने प्रमित्यन्तर-
मपि कल्पनीयं स्याद्गौरवेणेति भावः। अनुभवसेत् फलानु-
रोधेन गौरवमपि दोषावहमित्यत आह, एवं जातेरित्यादि।

शाब्दत्वमावश्यकन्तथा सति च वृत्तिज्ञानजन्य-
व्यक्तिस्मृतेरप्यपेक्षा स्यात् । जातेः कारणत्वे च,
व्यक्त्यंशे औपादानिकत्वमेव, नतु शाब्दत्वमिति न
तदपेक्षेति वाच्यं, व्यक्तिज्ञानांशे जातेः कारणत्वे
तदंशेऽशाब्दत्वोपगमसम्भवेन तदकारणत्वेऽपि तत्-
सम्भवात् । जातेरकारणत्वे व्यक्त्यंशे कीदृशकार-
णस्य जन्यतावच्छेदकधर्म्मवत्त्वमिति चेन्न । कस्यापि
तावता क्षतिविरहाद्व्यक्तेरपि बोधः शब्दादेव, न-
त्वाक्षेपादितो । व्यक्तिशाब्दबोधे शक्तिविरहो नानु-
पपत्तिं प्रयोजयति, लक्षणात एव तदुपपत्तिरिति
मण्डनाचार्य्यमतं तदुक्तं, जातेरस्तित्व नास्तित्वे

शाब्दत्वमावश्यकमिति, ज्ञाने यद्विषयित्वं इतरप्रामाणाप्रयो-
ज्यत्वे सति शाब्दसामग्रीप्रयोज्यं ज्ञाने तच्छाब्दत्वमिति
नियमादिति । व्यक्तिस्मृतेरिति, सांसर्गिकविषयताभिन्न-
शाब्दीयविषयताया वृत्तिज्ञानजन्योपस्थितिप्रयोज्यत्वनियमा-
दिति भावः । औपादानिकत्वमेवेति, एतन्मते शाब्दत्वमौपा-
दानिकत्वञ्च द्वे एक ज्ञान एव विषयरूपावच्छेदकभेदेन
तिष्ठतः ते च जाती, अखण्डोपाधी वा इत्यन्यदेतत् । तद-
पेक्षेतीति, वृत्तिज्ञानजन्यव्यक्तिस्मृत्यपेक्षेतीत्यर्थः । तत्सम्भवा-
दिति, अशाब्दत्वसम्भवादित्यर्थः । तथाच जातिकारणत्वं कल्प-
यित्वा, तत्र शाब्दत्वाभावप्रयोजकत्वकल्पनापेक्षया वृत्तिज्ञान-

नहि कश्चिद्विवक्षति नित्यत्वाल्लक्ष्यमाणाया व्यक्ते-स्ते हि विशेषणे इति । अस्तित्व नास्तित्वे उत्पादविनाशौ । लक्षणा च, जातिप्रकारेणैव बोधयति, नतु शक्तित्वादिनेति नानुभवविरोधः । नीलादिपदस्य शक्यनीलादिगुणपुरस्कारेण लक्षणया बोधकत्ववत्, शक्यजातिपुरस्कारेण लक्षणया गवादिपदस्य व्यक्तिबोधकत्वेऽविरोधात् । स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणा इत्यत्र, स्वार्थपदस्य शक्यतावच्छेदकपरत्वात् । अत्रेदं चिन्त्यं, गवादिपदाल्लक्षणया गोत्वादिप्रकारकबोधोपगमे जाति-

जन्यानुपस्थितौ तत्प्रयोजकत्वकल्पनानौचित्यादिति भावः । मण्डनाचार्य्यमतमुत्थापयति, व्यक्तेस्ते इति । अस्तित्व नास्तित्वे इति, अस्ति नास्ति शब्दार्थयौ । ताभ्यां भावे त्वप्रत्ययः । अस्तित्व नास्तित्वे विशेषणे इति विवक्षतीत्यनेनान्वयः । अस्तित्व नास्तित्व शब्दयोर्यथाश्रुतसत्तातदभावार्थकत्वे जातावपि विवक्षासम्भवादाह, उत्पादविनाशाविति । गौरुत्पद्यते गौर्नश्यतीत्यादितः उत्पत्त्याश्रयत्वेन विनाशप्रतियोगित्वादिना व्यक्तिरेव विवक्षते, गोत्वादौ तद्वाधादतो व्यक्तिबोध आवश्यकः । स च लक्षणयैवेति भावः । स्वार्थादन्येन रूपेणेत्यादिकारिकास्थस्वार्थपदस्य शक्यपरत्वे गोत्वादीनां शक्यतया लक्षणया गोत्वादिना व्यक्तिबोधो विरोधः स्यादत आह, स्वार्थपदस्येति। शक्य-

शक्तिरन्वयबोधेनापेच्येत, लच्यतावच्छेदकताया एव जातिभानप्रयोजकत्वसम्भवात्। न च शक्तिं विना व्यक्तौ शक्यसम्बन्धरूपलक्षणैव न निर्व्वहतीति शक्तेरुपयोगितेति वाच्यं, लक्षणानिर्व्वाहार्थं शक्ति-कल्पने गवादिपदस्य द्रव्यत्वादावपि विनिगमना-विरहेण शक्तिकल्पनप्रसङ्गात्। द्रव्यत्वादिसम्ब-न्धेनापि गवादौ लक्षणासम्भवात्। प्रयोगविरहस्य द्रव्यत्वादाविव स्वातन्त्र्येण गोत्वादावप्यविशिष्ट-त्वात्। लक्षणाघटकतया शक्तेरुपयोगितायां तस्याहृत्तित्वानुपपत्तेः। स्वातन्त्र्येणा तथात्वात्। अथाकृतिविशिष्टायामेव व्यक्तौ लक्षणा। अकृति-

सम्बन्धरूपेति, शक्यानुयोगिकसम्बन्धरूपेत्यर्थः। विनिगमना-विरहेण गवि गोत्वसम्बन्धद्रव्यत्वसम्बन्धयोः गोत्वद्रव्यत्वयोश्च तुल्यशरीरत्वादिति भावः। द्रव्यत्वादिसम्बन्धेनापीति, अत्र तृतीयार्थोऽभेदस्तस्य च लक्षणायामन्वयः। नन्वस्तु विनिगमना-विरहः,किन्तु प्रयोग तद्विरहाभ्यां शक्तितद्विरहौ कल्प्येते इत्यत आह, प्रयोगविरहस्येति। तस्या इति, शक्तेरित्यर्थः। वृत्ति-त्वानुपपत्तेरिति, उपस्थितिद्वारा यत्सम्बन्धज्ञानं साक्षात् शाब्दबोधजनकं तस्यैव वृत्तिपदार्थत्वादिति। स्वातन्त्र्येणेति, लक्षणाद्वारैवेत्यर्थः। अतथात्वादिति, शाब्दबोधाजनकत्वा-दित्यर्थः। आनुभविकत्वादिति, तथाचावयवसंयोगनिष्ठजातौ

प्रकारेण व्यक्तिबोधस्य नैयायिकानामप्यनुमतत्वात् तत्र शक्त्युपस्थापितजातेरन्वय उपगम्यते। न चाकृतावेव शक्तिर्जातिविशिष्टे लक्षणेति वैपरीत्यमेव किन्न स्यादिति वाच्यं, आकृतेरवयवसंयोगरूपाया आनन्त्यात् तदपेक्षया लघीयस्यां जातावेव शक्तिकल्पनौचित्यात्। न चावयवसंयोगनिष्ठजातिरेव शक्यास्तु व्यक्तौ तदन्वयश्च, स्वाश्रयघटितपरम्परासम्बन्धे न स्वीक्रियतामिति वाच्यं, आकृतिप्रकारकबोधस्यानुभविकत्वात्। लक्ष्यार्थव्यक्त्यनुपरक्तायां केवलजातौ प्रयोगविरहश्च न शक्त्यभावसाधकोऽप्रयोजकत्वात्। तत्राप्रयोगमात्रस्यैव तदशक्यत्ववीजत्वात् जातावप्रयोगस्यासिद्धत्वात् तात्पर्य्यसत्वे च वृत्तिद्वयाधीनबोधोपगमे चातिविरहः। न चैवं केवलं मुख्यार्थतात्पर्य्येण गवि नित्यत्व-

शक्तिकल्पने आकृतिप्रकारकबोधानुपपत्तिरेव बाधिकेति हृदयं। न शक्त्यभावसाधक इति, गोत्वं न गोपदशक्यं, वृत्त्यन्तराप्रयोज्यत्वनियतगोपदजन्यशाब्दबोधविषयत्वाभावात् घटादिवदित्यनुमानाच्छक्तिविरहसिद्धिरिति। अप्रयोजकत्वादिति, अनुकूलतर्कविरहात्। तथाचानुकूलतर्काभावेन तादृशव्याप्तिनिर्णयो न भवतीति भावः। नन्वेवं गवादिपदस्य घटत्वादौ शक्तिः स्यात्

मिति स्वारसिकप्रयोगापत्तिरिति वाच्यं, शक्त्या-स्वरूपत उपस्थिताया जातेः समानपदोपात्तधर्म्मि-णोऽवाश्रयतासंम्बन्धेनान्वयस्य व्युत्पन्नत्वात्। न चान्वयितावच्छेदकरूपेणानुपस्थिताया जातेरन्वयो विरुद्ध्यते व्युत्पत्तिवैचित्र्येण प्रकारतया स्वरूपत उपस्थिताया जातेरन्वयस्वीकारे क्षतिविरहात् इति रीत्या चेन्मतमेतत् परिष्क्रियते। तथापि स्व-रूपतो गोत्वान्वयबोधस्यापि लच्यार्थे गवादौ स्वीकारे तादृशान्वयबोधं प्रति योग्यताज्ञानादीनां कारणताकल्पनाधिक्यात् गोत्वादिविशिष्टव्यक्ति-शाब्दसामग्रीप्रतिबन्धकतायां जातिव्यक्तिविषय-कोपस्थितिद्वयस्य निवेशनीयतया प्रतिबन्धकताव-च्छेदकशरीरगौरवाच्च। जात्याकृतिविशिष्टव्यक्ति-शक्तिपक्ष एव साधीयान्। प्राभाकरास्तु जाति-

इत्यत आह, तत्राप्रयोगेति। अनादिप्रयोगविरहमात्रस्येवे-त्यर्थः। मात्रपदेन तादृशानुमानव्यवच्छेदः। समानपदोपा-त्तेति, एकपदोपस्थितधर्म्मिण्येवेत्यर्थः। मतमेतदिति, मण्डना-चार्य्यीय मतमित्यर्थः। गवादाविति, अवयवसंस्थानविशिष्ट-व्यक्तावित्यर्थः। योग्यताज्ञानादीनामिति, आकृतिविशिष्टो न गौरिति निश्चयाभावः। आकृतिविशिष्टो गौरित्यादिज्ञानं वा योग्यताज्ञानं। आदिना पृथगुपस्थित्यादिपरिग्रहः। जाति-

शक्तिज्ञानादेव जातिप्रकारेण व्यक्तेः स्मरणं, शाब्दबोधस्य नतु निर्विकल्पकरूपं जातिस्मरणं निर्विकल्पकानभ्युपगमात्। व्यक्तिसम्बन्धज्ञानविरहेण तदंशानुद्बोधाद्व्यक्तिस्मरणासम्भव इति तु नाशङ्कनीयं। व्यक्तिमविषयीकृत्य स्वरूपतो गोत्वादिज्ञानासम्भवेन गोत्वाद्युद्बोधकस्यैव व्यक्त्युद्बोधकत्वादुद्बोधकस्य फलबलकल्प्यत्वात् सम्बन्धितावच्छेदक हस्तित्वादौ सम्बन्धाग्रहेऽपि हस्त्यादिसम्बन्धिहस्तीपकादिज्ञानात्मकोद्बोधकबलात् हस्त्यादिस्मरणे हस्तित्वादिप्रकारतया भानवद्व्यक्तिसम्बन्धज्ञानमन्तरेणापि जातिसम्बन्धिपदज्ञानात् जातिस्मरणे व्यक्तेर्विशेष्यतया भाने विरोधविरहात्

शक्तिज्ञानादेवेति, गोपदं गोत्वे शक्तं, गोपदं गौरित्यादिज्ञानादेवेत्यर्थः। प्रथमे शक्त्यंशे निरूपितत्वसम्बन्धेन, द्वितीये पदांशे शक्तिसम्बन्धेन गोत्वं प्रकारः। ननु स्मरणे संस्कारस्य सहकारिसम्बन्धज्ञानमेवोद्बोधकं। तत्र यदंशे उद्बोधकं तस्यैव स्मरणं, अन्यथा उदासीनस्यापि स्मरणापत्तिः। एवञ्च, तादृशशक्तिरूपसम्बन्धज्ञाने व्यक्त्यंशाभानात् कुतो व्यक्तेः स्मृतिरित्याशङ्कते, व्यक्तिसम्बन्धेति। ननु साहचर्य्यसादृश्यादिज्ञानस्याप्युद्बोधकतया गोत्वादिसाहचर्य्यं ज्ञानेन गोत्वादिना गवादिस्मरणानुदयात् अतः गोत्वादिप्रकारकस्मृतिं प्रति, गोत्वाद्यवच्छिन्ननिरू-

तद्धर्म्मप्रकारकस्मृतौ तद्धर्म्मावच्छिन्नसम्बन्धितया गृहीतवस्तुज्ञानस्य हेतुतायामदृष्टादिरूपोद्बोधक-जनितस्मृतौ व्यभिचारवारणाय कार्य्यतावच्छेदक-शङ्कोचस्यावश्यकतया ततएव प्रकृते व्यभिचारा-नवकाशात्। जातिशक्तिज्ञाने नियमतो जातिप्रका-रेण व्यक्त्यभानात् तज्जन्यसंस्कारान्नियमतो व्यक्तिस्मरणासम्भव इति चेत् का क्षतिः। व्यक्ति-विषयकज्ञानान्तरस्यावश्यकतया तज्जनितसंस्का-रादेव व्यक्तिस्मरणसम्भवात्। अथ भवतु जाति-शक्तपदज्ञानाज्जातिप्रकारेण व्यक्तिस्मरणं। तथापि

पितसम्बन्धज्ञानत्वेन सर्व्वसाधारणैकहेतुतायाः कल्पनेन कुतो गोत्वशक्तिज्ञानेन गोत्वादिना गवादेः स्मरणसम्भव इत्यत आह, अदृष्टादिरूपेति। अथ जातमात्रबालकस्य स्तनपानादाविष्ट-साधनताज्ञानस्य प्रत्यक्षादिनोत्पत्त्यसम्भवात् स्मृत्यात्मकताया आवश्यकत्वेनामत्या तत्रैव क्वचित्स्वप्नादौ चादृष्टस्योद्बोधकत्वं कल्प्यते, न गवादिस्मरणे इत्यत आदौति। साहचर्य्यादीनां सम्बन्धत्वेनाभाने साहचर्य्यत्वादिना ज्ञानेन स्मरणजननात् तादृश तादृशविशेषधर्म्मेण ज्ञानस्य हेतुताया वक्तव्यतया आदिना तत्तद्विशेषधर्म्मावच्छिन्नस्य परिग्रहः। कार्य्यतावच्छेदकसङ्कोच-स्येति, तादृशतादृशकारणाव्यवहितोत्तरत्वघटितत्वेन कार्य्यता-वच्छेदकस्यासमग्रकार्य्यावृत्तित्वस्येत्यर्थः। ज्ञानान्तरस्येति,

तत्प्रकारकशाब्दबोधो न सम्भवति। तद्धर्म्मप्रकारक धर्म्मिविषयकशाब्दबोधे तद्धर्म्मप्रकारेण धर्म्मि-गृहीतवृत्तिकपदज्ञानजन्यतद्धर्म्मप्रकारकोपस्थिते-र्हेतुत्वात्। पदे गृहीतवृत्तिकत्वमात्रनिवेशे घटत्वादि गृहीतवृत्तिकपदात् गोत्वाद्यवच्छिन्ननिरूपित-सम्बन्धान्तरावगाहिज्ञानजन्यगोत्वादिप्रकारकस्मर-णाद्गोत्वादिप्रकारकशाब्दबोधापत्तिस्तद्धर्म्मगृहीत-वृत्तिकत्वनिवेशे,पशुत्वादिधर्म्मगृहीतशक्तिकविशिष्ट-वाचकपश्वादिपदात् पशुत्वादिविशिष्टविषयकशाब्द-बोधस्य गुरूणामप्यननुमतस्यापत्तेः। ननु प्रकारी-भूतधर्म्मभेदेन कार्य्यकारणभावस्य यत्र तत्रा-ननुगमेनावश्यकत्वाज्जातिविशिष्टविषयकशाब्दबोध एव जातिरूपधर्म्ममात्रगृहीतवृत्तिकपदज्ञान-जन्यस्मरणस्य हेतुत्वमङ्गीकार्य्यं उपाधिविशिष्ट-विषयकशाब्दबोधे तु विशिष्टगृहीतवृत्तिकपदज्ञान-

प्रत्यक्षाद्यात्मकस्येत्यर्थः। आवश्यकतयेति, अन्यथा व्यवहारा-दिना शक्तिग्रह एव नोत्पत्तुमर्हतीति भावः। पदे गृहीतेति, पदविशेष्यकवृत्तिप्रकारकज्ञानत्वेन गोत्वेन गोविषयकशाब्दं प्रति हेतुत्व इत्यर्थः। गोत्वाद्यवच्छिन्नेति, घटत्ववृत्तिमत्पदं गोत्वावच्छिन्नसमानकालीनमित्यादिजन्यगोस्मरणादित्यर्थः। तद्ध-र्म्मगृहीतेति, तद्धर्म्मनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नवृत्तिनिरू-

जन्यस्मृतिरेवेति वाच्यं । एवमपि जातिमल्लाक्ष-णिकपदज्ञानाज्जातिप्रकारकशाब्दबोधानुपपत्तेर्दु - र्व्वारत्वात् । लक्षणाज्ञानाधीनपदार्थोपस्थितेर्हेतुत्वा-न्तरकल्पने च गौरवात् । न च तन्मतेऽध्याहृतार्थ-स्याप्यन्वयबोधविषयतया पदजन्यपदार्थोपस्थिति-त्वेन हेतुतैव नास्ति कथमुक्तानुपपत्त्यवकाश इति वाच्यं, सर्व्वार्थाध्याहारस्थले ऽन्वयबोधवारणाय तन्मतेऽपि तादृशहेतुताया व्यवस्थापितत्वात् । न च

प्रकारताकपदत्वावच्छिन्नविशेष्यताशालिज्ञानत्वेन तद्धर्म्मप्रका-रेण धर्म्मिविषयकशाब्दं प्रति हेतुत्व इति यावत् । जाति-मल्लाक्षणिकेति,द्रव्यपदं सुवर्णत्वावच्छिन्नसम्बन्धिनि शक्तमित्यादि-ज्ञानादित्यर्थः । एतच्च शाब्दबोधौपयिकसम्बन्धत्वरूपवृत्तित्वेन शक्तिलक्षणाज्ञानसाधारणैकहेतुत्वाभिमानेनाभिहितं । अध्या-हृतार्थस्येति, द्वारं आनयेत्याद्युक्तौ द्वारकर्म्मकत्वानयनकार्य्य-त्वाद्युपस्थितौ तत्सम्बन्धज्ञानेन पिधान कार्य्यत्व गोकर्म्म-त्वादिरूपार्थाः स्मियन्ते । तदनन्तरं तेनैव पिधेहीत्यादिपद-ज्ञानं विनापि उपस्थितानामर्थानामन्वयबोधो भवतीति प्राभा-कराणामाशयः । नैयायिकानान्तु द्वारं आनयेत्यादिपद-ज्ञानानन्तरं पिधेहीत्यादिपदान्येव स्मर्य्यन्ते, ततस्तेभ्यः पदेभ्य-स्तावत्पदार्थोपस्थितौ वाक्यार्थबोधः, "शाब्दीह्याकाङ्क्षाशब्दे नैव प्रपूर्य्यते" इति न्यायादिति हृदयं । एवञ्च प्राभाकरमते पद-वृत्तिज्ञानजन्यपदार्थोपस्थितेः शाब्दबोधहेतुत्वमसम्भवीति भावः ।

तथापि पदज्ञानजन्यपदार्थोपस्थितित्वघटितकारण-
तावच्छेदकेन व्यक्तिलाक्षणिकपदजन्यव्यक्त्युपस्थिते-
रसंग्रहो न दोषाय। अध्याहाररूपार्थोपस्थितेर्येन
रूपेण हेतुताव्यवस्थापिता, लक्षणार्थोपस्थितेरपि
तद्रूपाक्रान्ततयैव उपपत्तेः। शक्तपदस्यैवानुभावक-
तेति सिद्धान्तात्। सर्व्वलाक्षणिकस्थलेऽन्वयबोधानुप-
गमात् तत्स्थलीयसामग्रीबलात् सर्व्वार्थाध्याहार-
स्थलेऽप्यन्वयबोधापत्तिरिति शङ्कानवकाशादिति
वाच्यं, यत्र लाक्षणिकपश्वादिपदाद्गोत्वादिप्रकारि-
कोपस्थिति-स्तदव्यवहितोत्तरद्वितीयादिविभक्तितः
शक्त्याकर्म्मत्वाद्युपस्थितिस्ततः कर्म्मत्वादिविशेष-
को गोत्वाद्यवच्छिन्नप्रकारकः शाब्दबोधस्तत्-
स्थलीयसामग्रीलक्षणाधीनपदार्थोपस्थितेरध्याहारा

सर्व्वार्थाध्याहारस्थल इति पदज्ञानं विना यत्र सम्बन्धान्तर-
ज्ञानात् निराकाङ्क्षाणां घटः, कर्म्मत्वं, आनयनमित्यादि-
पदानां ज्ञानाद्वा, पदार्थानामुपस्थित्या शाब्दबोधवारणा-
येत्यर्थः। लक्षणार्थोपस्थितेरपीति, शक्तपदज्ञानस्यैव तादृशा-
र्थोपस्थितिसहकारेण लक्ष्यार्थान्वितस्वार्थानुभावकत्वादिति
भावः। शाब्दबोध इति, तथाच पशुमिति गोपरपशुपदघटित-
वाक्यात् कर्म्मत्वं गवीयमित्यादिबोधोत्पत्तये गोत्वेन गोस्मरण-
सहकृतद्वितीयाजन्यकर्म्मत्वोपस्थितेरेव कारणत्वं वक्तव्यमिति

त्मकोपस्थितिसाधारणरूपभावेण हेतुतामते कर्म्म-त्वाद्युपस्थापकविभक्तिप्रकृतिभूतपश्वादिपदाद्यत्र न गोत्वाद्यवच्छिन्नोपस्थितिरपितु निराकांक्षपदान्तरादनुमानादितो वा तत्राप्यन्वतैवेति तादृशशाब्दबोधस्य तत्रापत्तेर्दुर्व्वारत्वात्। अर्थाध्याहारमतेऽपि यत्र साकांक्षपदद्वयान्न प्रकृतवाक्यार्थघटकस्यार्थद्वयस्योपस्थितिस्तत्र शाब्दबोधापत्तेरनिष्ठत्वादिति चेन्न। शक्तिलक्षणास्यासाधारणस्यानतिप्रसक्तवृत्तित्वस्य दुर्व्वचतया शक्तित्वशक्यसम्बन्धत्वाभ्यामेव तयोर्निवेशनीयतया शक्तिलक्षणाधीनपदार्थोपस्थित्योः कारणताभेदस्य व्यक्तिशक्तिवादिनामप्यावश्यकतया शक्त्यधीनपदार्थोपस्थितेस्तद्धर्म्मगृहीतशक्तिकपदज्ञानजन्य तद्धर्म्मप्रकारकोपस्थितित्वेनैव तद्धर्म्मप्रकारकशाब्दबोधहेतुतायाः कल्पतितु-

भावः। तादृशशाब्दबोधस्येति, कर्म्मत्वं गवीयमित्यादिशाब्दबोधस्येत्यर्थः। साकाङ्क्षपदद्वयेति, यथा द्वारमित्यादिवाक्यात् द्वारकर्म्मत्वादेरनुस्थिति रपिच प्रकारान्तरेण द्वारकर्म्मत्वपिधानादेरुपस्थितिस्तत्रार्थाध्याहारवादिनापि शाब्दबोधो नाङ्गीक्रियते। किन्त्वित् साकाङ्क्षापदजन्यपदार्थोपस्थितिसहकारेणैवेति भावः। दुर्व्वचतयेति, ननु शाब्दबोधप्रयोजकसम्बन्धत्वं शाब्दबोधजनकोपस्थितिजनकज्ञानविषयसम्बन्धत्वं वृत्तित्वं

मुचितत्वात्। न च तद्धर्मावच्छिन्नविषयतानिरूपितशक्तिविषयता निरूपितविषयताशालिज्ञानत्वेन व्यक्तौ शक्तिलक्षणाग्रहायाव्र्व्यक्तिशक्तिवादिमतेऽनुगमः सम्भवति। गोसम्बन्धिशक्तं पदमित्याकारके पदशक्यसम्बन्धिनी गौरित्याकारके वा लक्षणाग्रहोऽपि गोत्वाद्यवच्छिन्नविषयतया समं परम्परया शक्तिविषयताया निरूप्य निरूपकभावसत्त्वादिति वाच्यं, साक्षान्निरूपितत्वपरम्परानिरूपितत्वयोरनुगमकरूपाभावात्। यत्तु वृत्तिसंसर्गकपदप्रकारकज्ञानमेव शाब्दबोधोपयोगि। एवञ्च शक्तिसंसर्गतानिरूपकपदप्रकारतानिरूपित तद्धर्मावच्छिन्नविशेष्यताशालिज्ञानत्वेन तद्धर्मावच्छिन्नविशेष्यकशक्तिलक्षणाज्ञानयोरनुगमः सम्भवत्येव। शक्यसम्बन्धेनार्थांशे पदप्रकारकग्रहस्यापि तथात्वात्। संसर्गतावच्छेदकीय विषयतायामपि सुवचमिति चेन्न। शक्तिग्रहे लक्षणाग्रहे च प्रत्येकं शाब्दबोधजनकत्वं विना तादृशधर्मस्य दुर्ग्रहतया प्रत्येकजनकतयैवोपपत्तौ तादृशजनकत्वे मानाभावात्। संसर्गतात्वसत्त्वादिति, संसर्गानवच्छिन्नविषयतामात्रवृत्तिसंसर्गत्वमतिरिक्त पदार्थ इति। तथाच एतन्मते शक्तिसम्बन्धेन स्वशक्यसम्बन्धसम्बन्धेन च गौर्गोपदवान् इत्याकारकं ज्ञानं हेतुस्तदुभयत्वापि

संसर्गतात्वसत्त्वात्, इति तदसत् । शक्तिकालीनत्वादिसम्बन्धावगाहिज्ञानवारणाय प्रकारत्वार्थविशेष्यत्वोभयनिरूपितशक्तिनिष्ठसांसर्गिकविषयताया निवेशस्यावश्यकतया शक्तिसंसर्गज्ञानसंग्राहकेण रूपेण लक्षणाग्रहासंग्रहात् । अथ धर्म्मशक्तपदस्य धर्म्मिस्मरणशाब्दबोधजनकत्वे लोमाद्यात्मकोपाध्यवच्छिन्नबोधकपश्वादिपदस्यापि धर्म्मिशक्तिविलीयतां युक्तेः साम्यात् । न च निर्व्विकल्पकरूपस्य शाब्दबोधस्य चानुभ्युपगमाज्जातिवाचकपदाद्व्यक्तिविषयकस्मरणाद्यसम्भवेन तस्य व्यक्तिस्मरणादिजनकत्वं धर्म्मांशविषयकस्यापि लोमत्वाद्यवच्छिन्नविषयकस्मरणादेः सम्भवात् । पश्वादिपदस्य लोमत्वाद्यवच्छिन्नमात्रवाचकत्वोपगमेन धर्म्मिधीः सम्भवतीति न तस्य धर्म्मिवाचकतेति वाच्यं । उपाधेर्धर्म्मिविनिर्म्मोकेन भानसम्भव-

पदत्वावच्छिन्नप्रकारतायां शक्तिनिष्ठसांसर्गिकविषयतानिरूपितत्वमस्ति, अत उभयज्ञानमेकरूपेण तत्र हेतुरिति । प्रथमे संसर्गतावच्छेदकतानिरूपितत्वं, द्वितीये तदवच्छेदकतात्मकसांसर्गिकविषयतानिरूपितत्वमिति विशेषः । प्रकारत्वार्थेति, पदनिष्ठप्रकारतानिरूपितशक्तिनिष्ठसांसर्गिकविषयतानिरूपि-

रूपस्य जात्यपेक्षया विशेषस्य सत्त्वेऽपि, जातिशक्त-पदज्ञानस्य जातिप्रकारकायामिवोपाधिशक्तिज्ञानस्यापि उपाधिप्रकारकधर्म्मिविषयकबुद्धौ कारणताकल्पने बाधकाभावात् । उपाधिमात्रशक्तादपि धर्म्मिग्रहसम्भवादिति चेन्न । लोमत्वाद्यवच्छिन्नसम्बन्धान्तरवत्तया गृहीतात् पश्वादिपदाल्लोमत्वादिना लोमादिमुख्यविशेष्यकस्यैव स्मरणस्य बाधकान्तरविरहदशायामुत्पादवत् तत्तद्रूपावच्छिन्नशक्तत्वेन गृहीतात् पदादपि तत्तद्रूपावच्छिन्नमुख्यविशेष्यकस्मरणोत्पादस्यानुभविकत्वात् । ततस्तद्धर्म्मावच्छिन्नप्रकारकस्मरणस्य नियमतः स्वीकारासम्भवाल्लोमादिमात्रशक्तत्वेन गृहीतपदान्नियमतस्तत्प्रकारकशाब्दबोधस्यानिर्व्वाहात् । अविशेषितगोत्वादेः सम्बन्धान्तरज्ञानादपि तत्प्रकारकधर्म्मि-स्मरणस्यैवोपगम्यादेतादृशशक्तिसम्बन्ध-

तार्थनिष्ठविशेष्यताशालिज्ञानत्वेन तद्धर्म्मप्रकारकशाब्दत्वेन कार्य्यकारणभाव इति । लक्षणाग्रहासम्भवादिति, लक्षणाग्रहे तादृशरूपाभावादित्यर्थः । सम्बन्धान्तरवत्तयेति, समानकालीनत्वादिसम्बन्धवत्तयेति भावः । जातिवाचकगवादिपदे वैलक्षण्यं दर्शयति, अविशेषितेति । किञ्चिद्धर्म्मप्रकारतानापन्ने-

ज्ञानान्नियमतस्तत्प्रकारकधर्म्मिस्मरणोपगमे ऽनुभवविरोधविरहात्। अथ गवादिपदस्य समवायेन गोत्वादिविशिष्टावाचकत्वोपगमे तज्जन्यबोधे गोत्वादेः समवाय एव संसर्गतया भासते। ननु सम्बन्धान्तरमित्यत्र किं नियामकं? वाच्यानन्तर्भावस्य समवायसाधारण्येन सम्बन्धान्तराभानप्रयोजनकत्वासम्भवात्। नहि जातिर्व्यक्तिं विना न भासते इतिवत्, समवायं विनापि न भासत इत्येव नियमो येन जातिशक्तिज्ञानजन्यबोधे समवायभानस्याप्यावश्यकता,ननु सम्बन्धान्तरभानमिति स्यात् तदादिपदात् समवायमविषयीकृत्यापि सम्बन्धान्तरेण गोत्वादिविषयकबोधोदयादिति चेत्, एवं सति ज्ञानशक्तिरेवादरणीया। तथाच गवादिपदस्य समवायेन गोत्वादिप्रकारकज्ञान एव शक्त्युपगमात्, ततोऽलाभःइभ्रान्तानां सम्बन्धान्तरेण तत्प्रकारकधीस्तत्सम्बन्धेन तत्प्रकारकशक्तिग्रहस्यैव तादृशबोधहेतुत्वादिति॥

इति श्रीमहामहोपाध्याय गदाधर भट्टाचार्य्य विरचित शक्तिवादविचारः समाप्तः।

स्यर्थः। एतादृशशक्तिसम्बन्धेति, गोत्वादिशक्तिसम्बन्धज्ञानादि-

त्यर्थः। तदादिपदादिति, कालो गौः स जायते इत्यादौ तच्छ-ब्देन कालिकसम्बन्धेन गोत्वविशिष्टकालपरामर्शादित्यलं विस्तरेण॥

इति श्रीमहामहोपाध्याय गोलोकनाथ न्यायरत्न भट्टाचार्य्या-त्मज श्रीहरिनाथ तर्कसिद्धान्त भट्टाचार्य्य विरचिता, तदीय मध्यमात्मजेन श्रीसर्व्वेश्वर भट्टा-चार्य्येण संस्कृत्य, प्रकाशिता शक्तिवादविवृतिः समाप्ता॥

शुभमस्तु।